सुहस्ती[1], 'छन्दसीवनिपौ च[2]' इति मत्वर्थे ईकारः[3]। तत इदं बहुवचनम्-सुहस्त्यः। आगत्य च[4], शुक्रा गृभ्णीत[5] मन्थिना, शुक्रा[6] मन्थिनौ ग्रहौ गृह्णीत। गृहीत्वा चानन्तरं गृहीतं गोभिर्गो[7]विकारैः पय आदिभिः श्रीणीत मिश्रयत, मत्सरं सोमं मैत्रावरुणादि-कम्। 'पयसा मैत्रावरुणं[8] श्रीणाति दध्नादित्यम्[9]' इति श्रुतेः। प्रकृत्या[10] गोद्रव्येण पृथिव्या-दिभिश्च मिश्रणस्यासम्भवात्[11] पयसश्च[12] श्रुतत्वात् निश्चित्याह[13]-पयस इति।

मत्सरशब्दं[14] निगमप्रसक्तं निराह-मत्सरः सोमः। अत्रापि प्रसिद्धस्य लोभस्य मिश्रणसम्भवात्[15] सोमस्य च[16] मिश्रणोपदेशात् क्रियायोगमङ्गीकृत्याह-मत्सरः सोम इति[17]। तच्च क्रियायोगं दर्शयति-मन्दतेस्तृप्तिकर्मणः[18]। मन्दतेस्तृप्त्यर्थस्य। तृप्यति[19] हि देवता मन्त्रेण[20]। प्रसिद्धिबोधनार्थमाह[21]-मत्सर[22] इति लोभनाम-इति। एवमन्यत्राप्यर्था-न्तरवचनेन[23] सर्वत्र द्रष्टव्यम्। अभीत्यादिना[24] प्रवृत्तिनिमित्तमाह[25]। धनमभिमत्तो मूढ एतेन भवतीति। मत्सरो[26] लोभश्चेतोधर्मः, अनुपालयतो[27] लिप्सा[28]।

विकारप्रसङ्गेनाह—पयः पिबतेर्वा[29]। पीयते हि तत्[30]। प्यायतेर्वा वृद्ध्यर्थस्य[31]।

---

१–सुहसी C.
२–[पा० ५।२।२२] इति सूत्रे वार्तिकम्। ०सिचनिवेति C.
३–ईः D. ४–'च' इति नास्ति D.
५–गृह्णीत C.
६–'मन्थिना, शुक्रा' इति त्रुटितम् D.
७–'गो' इति त्रुटितम् D.
८–०वरुणः C.
९–[ अनुपलब्धमूलमिदं वचनम् ]
१०–प्रकृतित्यागोऽत्र द्रव्येण D.
११–मित्रणसम्भ० D.
१२–पयश्च श्रुत्वा D.
१३–०श्चित्यान B.
१४–मत्सर इति निग० D.
१५–मिश्रणास० C. मिश्रणस्य स० D.
१६–'च' इति नास्ति D.
१७–'इति' नास्ति B. '०ङ्गीकृत्य-मत्सरः सोमः इत्याह' इति पाठः D.
१८–इदं वाक्यं नास्ति C. D.
१९–तृप्यन्ति देव० D.
२०–अत्र 'मत्सरेण' इति युक्तः पाठो भवेत्।
२१–प्रसिद्धबाधना B. C.
२२–०सरमिति C.
२३–०वचनं D.
२४–अभ्रीत्या० C.
२५–दर्शयति D.
२६–मत्सरे C.
२७–पीयतो D.
२८–उत्पद्यत इति शेषः।
२९–पीबतेः D.
३०–तम् B.
३१–प्रीत्यस्य B. त्रीत्यर्थस्य C.

वर्धन्ते तेन[1] पीतेन प्राणिनो गोमिनो[2] वा । दधिनवनीतोदश्वित्प्रदान[3]लब्धेन धनेन, दध्यादिभोजनेन वा वर्धन्ते[4] । स्वयमेव[5] बोधस्तूपचीयते[6] ।

पर्यायप्रसक्तं निराह-क्षीरं क्षरतेः । क्षरति हि तदूधसः[7] । घसेर्वा[8], ईरो नामकरणः[9] । अद्यते हि तत्[10] । ईरः[11] प्रत्ययः । किञ्चायं द्रष्टव्य[12] उपधालोपार्थम् । अतएव च तत्कार्य[13]विषयमुदाहरणमुपन्यस्यति[14]-उशीरमिति यथा । वशेः ईरकि[15] कृतसम्प्रसारणस्येदं रूपम् । काम्यते हि तत्, सुगन्धितत्त्वात्[16] । उदकमपि क्षीरम्, एतस्मादेव[17] । 'उभावश्विभ्यां[18] पयः क्षीरेण स्नातः[19]' इत्यादिषु दर्शनात् ।

प्रसक्तानुप्रसक्तनिर्वचनप्रयोजनं द्रष्टव्यम्-अंशुं[20] दुहन्तो अधीत्यादि । कृत्स्नवन्निगमा इति बहुवचननिर्देशादनेकोदाहरणप्रदर्शनम् । गवि गोरवयस्याधिषवण[21]चर्मणोऽधिकरणभूतस्य कृत्स्नवन्निगमः[22]—

ते सोमादो[23] हरी इन्द्रस्य निंसतेऽ[24]शुं दुहन्तो अध्यासते गवि ।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते[25] वृषायते[26] ॥

अर्बुदस्यार्षम् । ते ग्रावाणः सोमस्यात्तारः[27], हरी इन्द्रस्य स्वभूतावश्वौ, अभिष-

१—वर्धनं ते (B.) तेनापि तेन B. C.
२—सन्दिग्धमिवेदं पदम् ।
३—०दश्वित्स्व० C. ०श्वित्प्रधान D.
४—वयन्ते D.
५—'व' इति त्रुटितम् B. C.
६—०धस्तूप० B. ०धस्तुचश्री० D.
७—तमूधसः C., तदूधसं D.
८—अदेर्घस्लृ आदेशः क्रियते [पा० २।४।३७]। धात्वन्तरमपि [धा० १।७१६]
९—'ईरो नामकरणः' नास्ति C. D.
१०—०तेर्हि C. ११—रेरः C. ईरप्रत्य० D.
१२—प्रत्यय उपधालोपार्थः D.
१३—कित्कार्य० B. C.
१४—'ति' इति त्रुटितम् D.
१५—ईररि D.
१६—सुगन्धित्वात् D.
१७—एतिस्मा० B., एवतस्मादेवम् D.
१८—दुहामश्वि० B. C.
१९—[ अनुपलब्धमूलमिदं वचनम् ]
२०—इतः पूर्वं केवलं B. पुस्तके 'अंशुं दुहन्तो अध्यासते गवि' इत्याधिषवणचर्मणः' इति मूलवाक्यमधिकं वर्तते ।
२१—०स्यधिषवणवण च० D.
२२—निगमाः B.
२३—सोमादौ B. C.
२४—निंसेते C.
२५—व्रथते C.
२६—[ऋ० १०।९४।९]
२७—सोमच्च भक्षयितारः D. 'सोमस्य' इति पाठः स्यात् ।

वलक्षणेन[1] शब्देन निंसते । णिसि[2] चुम्बने अन्यत्र[3]। इह तु सामर्थ्यादाह्वानार्थः[4]। अयमभिषूयते सोमः, इन्द्रं[5] गृहीत्वा क्षिप्रमागच्छतं[6] मा विलम्बिषातामित्येवमाह्वयन्तीवेत्यर्थः।[7][8][9] अथवा[10] णिसि चुम्बनार्थ[11] एव[12]। ते सोमाद इत्यत्र द्वितीयार्थे प्रथमा । निंसत इत्यपि द्विवचनस्य[13] स्थाने बहुवचनम् । तान् सोमादो ग्राव्णो हरी[14] निंसाते चुम्बतः। कथम् ? हर्योः ऋजीषं[15] भागः, ग्रावाणश्च ऋजीषलिप्ताः[16]। तेन तानवश्यं[17] हरी चुम्बतः। एवमभिषव्यापारद्वारेण[18] अंशुं सोमं दुहन्तो अध्यासते गवि अधिषवणचर्मण[19] उपरीत्यर्थः। तेभिस्तैर्दुग्धं[20] क्षारितं पपिवान्[21] पीतवान्[22], सोम्यं सोममयं मधु, इन्द्रो वर्धते वीर्येण, प्रथते शरीरेण, वृषायते वृष इवाचरति[23] यथा हृप्तो[24] वृषः, एवं[25] युद्धार्थं सर्वमारोहयन्[26] भ्रमतीत्यर्थः।

अंशुः शमष्टमात्रो भवति[27]। अंशुः कस्मात् ? शमष्टमात्रो व्यात्तमात्रः पीतमात्रः[28] सुखो भवतीत्यर्थः। 'अपाम सोमममृता[29] अभूम'[30] इति श्रुतेः। शमो मकारोऽशेर्मध्यमनु-[31]

१–०षवणल० C.

२–निसि C.

३–'अन्यत्र' इति त्रुटितम् D.

४–'आह्वानार्थः' इति त्रुटितम् D.

५–इद्रं D. ६–शीघ्र० D.

७–'गच्छतं' इत्येव पाठः D.

८–०लम्ब्यता० D. ९–०माह्वाय० C.

१०–'अथवा' इत्यस्मात्पूर्वं केवलं D. पुस्तके दुर्गनाम्ना कश्चन पाठ उद्धृतो वर्तते । स चेत्थम्–"दुर्गवृत्तौ-'यदा ग्रावाणो (मुद्रितपुस्तके 'यदा' इत्यस्मात्प्रागेव 'ग्रावाण' इति वर्तते ) ऽभिषवकर्मणि प्रवर्तन्तेऽथ तदा हरी इन्द्रस्याश्वौ यज्ञागमनार्थमेतेषां शब्दमुपश्रुत्य संस्कृतं सोमं मन्वानौ रथे योगमिच्छन्तौ आत्मनो ( मुद्रितपुस्तके 'आत्मना' इति पाठः ) ऋजीषं भक्षयिष्यन्ताविन्द्रश्च सोमं पाययिष्यन्तौ स्वयमेव निंसते नीचैर्नमेते युक्तौ आवां हे इन्द्र ! गच्छ यज्ञायतनं संस्कृतः सोम इति। तदैव च ऋत्विजोऽपि त्वरमाणा इन्द्रोपस्थानकालमभ्यग्रं मन्वानाः' एवं दुर्गः"।

११–चुम्बन D. १२–शाप B. C.

१३–०चन स्थाने D. १४–हरि C.

१५–हर्यो ह्यजीषं भागं B. हर्यो ह्य ऋजी० C.

१६–०श्चाजीरवलिप्ताः D.

१७–अत्र 'न' इत्यधिकं वर्तते B. C.

१८–एवाभिष० B. C. १९–०षवचर्म० D.

२०–तेहि द तैदुग्धं C. २१–पविवान् C.

२२–'पीतवान्' इति त्रुटितम् B. C.

२३–इव चर० D. २४–हृष्टो D.

२५–ततो D. २६–०यत् C.

२७–इदं मूलवाक्यं नास्ति C. D.

२८–वीतमात्रः C. २९–सोमं मृता C.

३०–[ऋ० ८। ४८। ३]

३१–०रोऽशे मध्य० B., ०रोशेम्मध्य० C.

प्रविष्टोऽनुस्वारीभूतः[1] उकारश्च[2] प्रत्ययः। विकारविकारिणोरभेदोपचारेण[3] सोऽयमित्य-[4] भिसम्बन्धात्तद्धिताभावः।

अननाय शं भवतीति वा[5]। अननाय चिरंजीवनाय सुखो भवतीति वा। रसाय-नायनसोमाभिप्रायमेतत्[6]। अयमेव वा देवतातृप्तिद्वारेण यज्ञनिर्वृत्तिद्वारम्,[7] वर्षहेतुत्वेन[8] सर्वभूतानां[9] [10] जीवनाय सुखो[11] भवतीति। अस्मिन्पक्षे अनेर्धातोः-अं, शमश्च[12] शकारः, उकारश्च[13] प्रत्ययः।

चर्म चरतेर्वा, उच्चृत्तं भवतीति वा[14]।

चर्म-चरतेर्मनिन्[15] प्रत्यये[16] कृते[17]।चरितं हि तच्छरीरे[18] भवति[19]। चरति वा[20] तत्र, अभिषवकाले सोममुपेत्य। उच्चृत्तं[21] उच्छिन्नं भवतीति वा।

अथापि चर्म च श्लेष्मा च[22]।

अथापीत्यादि[23] चर्मणः प्रदर्शितत्वात् श्लेष्मार्थमुदाहरणम्[24]। श्लेष्मणश्चर्मविकार-[25] त्वात् विकारस्यापि[26] कृत्स्नवन्निगमप्रदर्शनम्। 'गोभिः सन्नद्धो असि वीळयस्व'[27] इति रथस्तुतौ। गोभिः सन्नद्ध इति वक्ष्यमाणमुदाहरणं[28] रथस्तुतौ चतुर्दशे[29]। अत्रापि चर्म-भिर्ग्रथितः[30] श्लेष्मणा च संश्लेषितो न वर्धत इत्यर्थः।

---

१–०ष्टाऽनुसारी० B. ०ष्टोनुसारी C.
२–उश्च D.
३–'विकार' इति त्रुटितम् C.
४–सोममभि० D.
५–इदं मूलवाक्यं नास्ति C. D.
६–'न' इति त्रुटितम् D. ७–निवृत्ति C.
८–वर्म B. C. ९–संभू० D.
१०–०ता जीव० B. ०ताज्जीव० C.
११–'सुखः' इति नास्ति B. C.
१२–शम शः D.
१३–उश्च D.
१४–इदं वाक्यं नास्ति C. D.
१५–चर्मरुत इति चर्म C. चर्मकृत इति D.
१६–०रते मनि प्रत्य० D. चरतिः।
१७–'कृते' इति नास्ति D.
१८–तश्चरी० C.
१९–'भवति' इति नास्ति D.
२०–'वा' इति नास्ति D.
२१–उच्छृतं D.
२२–इदं मूलवाक्यं नास्ति C. D.
२३–अथावी० C.
२४–श्रेष्ठत्वमु० B. श्लेष्मत्वमु० C. श्लेषार्थमु० D.
२५–श्लेष्माण० D.
२६–विकार विकारस्यापि B. C.
२७–[ऋ० ६।४७।२६] इदं मूलवाक्यं नास्ति C.D.
२८–वक्ष्यमा० C.
२९–[नि० ९।१२]
३०–ग्रथिते श्लेष्मा च संश्लिषितो नद्ध इत्यर्थः D.

अथापि स्नाव च श्लेष्मा च[1]।

स्नावार्थमुत्तरमुदाहरणं वक्ष्यमाणमिषुस्तुतौ[2]। तत्रैव स्नाव्ना[3] श्लेष्मणा चेत्यर्थः।

ज्यापि गौरुच्यते गव्या चेत्ताद्धितम्, अथ चेन्न गव्या गमयतीषूनिति[4]।

ज्यापीत्यादि[5]। गव्या चेत् गोविकारश्चेत्[6][7] स्नावनिर्वर्तिता चेत्, ताद्धितं तद्धिताभिधेयविकारविषयं गोशब्दाभिधानम्। अथ चेन्न गव्या, मौर्वी मौञ्जी वा स्यात्, तथा सति गमिक्रियायोगादेव गौः। न[8] हि तामन्तरेण गमनमिषोः सम्भवतीति हेतुकर्तृत्वेन विवक्षा।

[इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
पञ्चमः खण्डः[9]।]

---

१–इदं मूलवाक्यं नास्ति C. D.

२–अत्रानुपदमेवोच्यमानं 'गोभिः सन्नद्धा पतति प्रसूता' [ऋ०६।७५।११] इत्यादि मन्त्रवाक्यम्।

३–स्नाया C. स्नाव्वा D.

४–इदं मूलवाक्यं नास्ति C. D.

५–ज्यावीत्या० C.

६–'गो' इति त्रुटितम् B., चे गोवि० D.

७–चे स्नाव० D.

८–गौ हि ता० B. गौ ह हि ता० C.

९–अत्र हस्तलिखितपुस्तकेषु खण्डसमाप्तिर्न निर्दिष्टा।

# [ अथ षष्ठः खण्डः ][1]

उदाहरणम्—

वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः[2] प्र पतान् पूरुषादः[3] ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृ[4]षये च शिक्षत् ॥[5]

वसुक्रस्यार्षम्। वृक्ष इति वृक्षविकारत्वाद्धनुरुच्यते। धनुषि[6] धनुषि इन्द्रस्य स्वभूते नियता निबद्धा,[7] मीमयत्-शब्दं करोति आकृष्यमाणा। काऽसौ ? गौर्ज्या। ततः-[8] ततश्च ज्यातः। ततो वाऽनन्तरम्। वयः-लुप्तोपममेतत्। वय इव पक्षिण[9] इव गन्तारो वा इषवः। प्रपतान्[10] प्रपतन्ति[11] पुरुषादः पुरुषाणामत्तारो मारयितार इत्यर्थः। अथशब्दो हेतौ। एतस्माच्चोक्तात्[12]कारणादिदं विश्वं सर्वं भुवनं भूतजातं[13] इन्द्राद् भयाते[14] बिभेति। इन्द्राय इन्द्रार्थं सुन्वत् सोमाभिषवं कुर्वदपि। ऋषये च ऋषिर्द्रष्टा[15] कर्मणाम्[16] ऋत्विगिहाभिप्रेतः।[17] एतस्मै[18] च शिक्षत्-दक्षिणां ददपि सोमयागं कुर्वदपीत्यर्थः।

वृक्षो व्रश्चनात्। यदा कदाचिच्छिद्यतेऽसाविन्धनार्थम्[19]। मीमयतिर्नैरुक्तधातुः शब्दार्थः, गौरमीमेदित्यादिषु[20] दर्शनात्। शेषं[21] भाष्यं मन्त्रव्याख्यानेन गतम्।

आदित्योऽपि गौरुच्यते,[22] न केवलं पृथिव्यादि। आदित्यशब्देनात्र[23] मण्डलमुच्यते नान्तरपुरुषः। यथा[24] 'स यश्चायं पुरुषे[25] यश्चासावादित्ये स[26] एकः' इति निगमसामर्थ्यात्।

---

१—हस्तलिखितपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति।
२—पयः C. ३—पुरुषादः C.
४—०न्वमृष० C.
५—[ ऋ० १०।२७।२२ ] 'वृक्षे वृक्षे०-शिक्षत्' इत्येव प्रतीकम् D.
६—०षित धनु० C.
७—'बद्धा' इति त्रुटितम् D.
८—'ततः' इति नास्ति D. ९—वक्षिण C.
१०—प्रवतान् C. ११—प्रवतन्ति C.
१२—०स्मादेवोक्तात् D. १३—भूभूतजान्तं B. C.
१४—अन्तर्बिभेति B. १५—द्रष्टः C.
१६—कर्मणि D.
१७—०गादिरभि० D.
१८—'तस्मै' इत्येव पाठः D.
१९—'इन्धनार्थम्' इति नास्ति B. C.
२०—०मीमेत्या० D. अत्र 'दि' इति त्रुटितम्। ०मेदि इत्या० C. अत्र 'इ' कारोऽधिकः।
२१—'शेषं' इति त्रुटितं भाति D.
२२—०दित्यो गौरु० B. ०दित्यापगौ० C.
२३—आदिशब्दे० B. D. अत्र 'त्य' इति त्रुटितम्।
२४—'यथा' इति नास्ति B.
२५—पुरुषो D.
२६—'स' त्रुटितम् D. [ तै० उ० २।८।१ ]

उदाहरणम्—

उतादः परुषे गवि सूरश्चक्रं हिरण्ययम् । न्यैरयद्रथीतमः ।[1]

भरद्वाजस्यार्षम् । उतोऽप्यर्थे । अद इत्यपि द्वितीया सप्तम्यर्थे । अप्यमुष्मिन् स्वरवयवैः पर्वभिः, कालपर्वभ्यां वा तच्छ्रुताभ्यामहोरात्राभ्यां वा पर्ववति, भास्वरे वा, गवि गन्तरि आदित्यमण्डले स्थित इत्यर्थः । कोऽसौ ? सूरः । धर्ता चक्रम्, चक्राकृति देवादित्यमण्डलम् । हिरण्ययम्[2]-उज्ज्वलवर्णत्वात् । हिरणमयमेव वा । न्यैरयत्[3]-नियतमुदया[4]स्तमयाय[5] प्रैरयत् । रथीतमः-अन्येऽपि रथिनः सन्ति, अयं तु मुहूर्तमप्यनवस्थितरथ इत्यतो रथीतमः[6]। अतिशयेन रथीत्यर्थः[7]। अथर्वा ब्राह्मणचक्रमिति दर्शनाच्चक्र[8]शब्दः समूहवचनः। तच्चात्र सामर्थ्यादुदकस्याह[10] न यस्य[11] कस्यचित् । उदकसमूहं[12] पृथिवीतो रश्मिभिरात्मानमुज्ज्वलन्तं प्रति प्रेरयति भौमान् रसानादत्त इत्यर्थः । अथवा हिरण्यय[13]शब्देनोदकमुच्यते 'हिरण्यदा दित्यन्नमस्मा'[14] इति मन्त्रान्तरे[15] दर्शनादुदकात्मकं[16] चक्रमित्यर्थः ।

---

१–[ ऋ० ६।५६।३ ]

२–'न्यैरयद्रथीतमः' इति मन्त्रभागमारभ्य 'हिरण्ययं' इत्यन्तः पाठो B. C. पुस्तकयोस्त्रुटितः ।

३–०यद्रथीतमः B.

४–नियत उद० D.

५–०याय च प्रेर० B. C.

६–'अन्येऽपि रथितः' इत्यारभ्य 'रथीतमः' इत्यन्तः पाठस्त्रुटितः B. C. एतदानुपूर्वीक एव पाठोऽत्र दुर्गवृत्तावपि वर्तते ।

७–'अतिशयेन रथीत्यर्थः' इति पाठस्त्रुटितः D.

८–'अथर्वा' इत्यस्याग्रे D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते । तथाहि—"दुर्गवृत्तौ–'चक्रं लवक्षण (मुद्रितपुस्तके 'क्षणलव' इत्येवमपि पाठः) निमेषत्रुटिमुहूर्ताहोरात्रार्धमासमासर्त्वयनसंवत्सरादि (मुद्रितपुस्तके 'आदि' इति नास्ति) लक्षणं कालचक्रं ('सर्वभूतहारि' इत्यपि मुद्रितपुस्तके) हिरण्मयं हिरण्यमयं ('हैरणमयं' इति 'हिरणमयं' इति च पाठो मुद्रितपुस्तके) सर्वभूतविनाशस्थितिहेतु न्यैरयत् नित्यमीरयति ।... एवंगुणयुक्तः पूषा, तं वयमभिप्रेतार्थसिद्धये स्तुमः' एवं दुर्गः" ।

९–अत्र 'क्र' इति त्रुटितम् B. C.

१०–'आह' इति नास्ति D.

११–'न यस्य' इति नास्ति B. C.

१२–०मूहः प्रथितो D.

१३–हिरण्मय C. D.

१४–[ 'हिरण्यदा ददत्यन्नमस्मै' ऋ० २।३५।१० ] हिरण्यदादित्यन्न (न्नं C.) मस्मा B.

१५–तद्वदु० D.

१६–०दरात्म० B. C.

अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते, तदेतेनोपेक्षितव्यम्, आदित्यतोऽस्य दीप्तिर्भवतीति[2] ।

अथाप्यस्यादित्यस्य[3] एको रश्मिश्चन्द्रमसं[4] प्रति विशेषेण[5] दीप्यते। स्वयं चन्द्रमण्डलमनुप्रविश्य दीप्तिं करोति[6]। यद्वशादस्य[7] वृद्धिक्षयौ भवतः। तथा च वक्ष्यति। 'यथा देवा अंशुमाप्याययन्ति'[8] इति। तदेतेन 'सुषुम्ण'[9] इत्यनेन मन्त्रेण उपेक्षितव्यं[10] विचारयितव्यम्[11]। आदित्यतोऽस्य[12] दीप्तिर्भवति न स्वत इति।

सुषुम्णः[13] सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम। स न[14] इदं[15] ब्रह्म क्षत्रं पातु[16] तस्मै स्वाहा वषट्[17] ताभ्यः स्वाहा[18]।

सुषुम्णः[19] आह्लादकत्वात् सुसुखः[20]। सूर्यरश्मिः[21]-सूर्यरश्मिना व्याप्तत्वात् सूर्यरश्मिरूपश्चन्द्रमा गन्धर्वः, भोक्तृत्वात्तस्य। भोग्यत्वसामान्यान्नक्षत्राण्येवाप्सरसः[22]। यथैत[23]रेषां गन्धर्वाणां मेनकाद्याः[24]। भेकुरयो नाम[25]-भा दीप्तिस्तां कुर्वत[26] इति भेकुरयः। भाशब्द-

---

१–०त्योऽस्य B. २–इदं मूलवाक्यं नास्ति C. D.

३–'आदित्यस्य' इति नास्ति D.

४–रश्मिश्च० C. ५–प्रतिपन्न विविशे० D.

६–दीप्ति केरोति C. ७–०दद्य B.

८–[ निरु० ५।११ cf. यं देवा etc. अथ० ७।८१।६ cf. मैत्रा० सं० ४।९।२७ ]

९–सुषुभ्ण B. १०–तदुपेक्षि० B. C.

११–'विचारयितव्यम्' इति नास्ति B

१२–'आदित्यतः' इत्यस्मात्पूर्वं केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्त्तते। स चेत्थम्–"दुर्गवृत्तौ 'येयमस्य चन्द्रमसो दीप्तिः ज्योत्स्नेयं ('ज्योत्स्ना सेयं' मुद्रितपुस्तके) आदित्यरश्मनु ('रश्मेरतु' मुद्रितपुस्तके) ग्रहादेवास्य भवति। अम्मयं हि चन्द्रमसो मण्डलं तत्तेजःसम्बन्धाद् दीप्तिमद् भवति। ततः सर्वा दिशः प्रकाशयति' एवं दुर्गः"।

१३–सुषुम्नः C. D. १४–'न' इति त्रुटितम् B. C. D.

१५–'इदं ब्रह्म चत्रं' इति द्विधा लिखितम् C.

१६–वातता, वान्तु C. पान्तु D.

१७–वाट् इति त्रुटितम् B. स्वाहा ताभ्यः स्वाहा बग् C. स्वाहा वषट् D.

१८–[ यजु० १८।४० ] स्वाहेत्यनन्तरं B. पुस्तके 'भग' इति पाठो वर्तते। इदमपि पदं C. पुस्तके 'बग्' पदवत् लिपिप्रमादादपभ्रंशतां गतमिति भाति। वस्तुतस्त्वत्र प्रथमस्वाहापदानन्तरं 'वषट्' इति पाठो युक्तः। वेदे तु 'वाट्' इत्येव पाठः।

१९–सुषुम्नाः आह्लादकरत्वात् C. आह्लादकरत्वात्सुषुम्नः D.

२०–'सुसुखः' इति नास्ति D.

२१–'सूर्यरश्मिः' इति प्रतीकपदं नास्ति B.

२२–०चत्रे वाप्स० B. २३–स यथे० D.

२४–मेकोद्याः B. C.

२५–'नाम' इत्यत्र नास्ति B. C.

२६–कुर्वतीति C. कुर्वन्तीति D.

स्याकारस्यैकारश्छान्दसः[1]। चरकाणां[2] बेकुरेय[3] इति पाठः तेषां बकारस्यापि हकारश्छा[4]न्दसः। नामशब्दः प्रसिद्धत्वप्रदर्शनार्थः[5]। दीप्तिकारिण्यः प्रसिद्धा इत्यर्थः। स नः-सोऽस्माकमिदं ब्रह्म क्षत्रं ब्राह्मणान् क्षत्रियांश्चेत्यर्थः। पातु रक्षतु। तस्मै स्वाहा वषट्। नेदं 'वश कान्तौ'[6] इत्यस्यान्यस्य वा कस्यचिद्धातोराख्यातम्, निघातप्रसङ्गात्। किन्तर्हि? निपातोऽयं प्रदानार्थो वषट्कारपर्यायः[7]। चरकाणां[8] वषट् इति[9] पाठः। तेषां वैषट्[10] शब्दस्यैव वा ह्रस्वत्वं छान्दसम्, निपातान्तरं[11] वा तदर्थम्। यद्यपि स्वाहाकारोऽपि[12] प्रदानार्थ[13] एव, तथाप्यत्र द्वयोः प्रदानार्थयोः वचनात्[14] सह प्रयोगः। एवं हि शतपथे वचनम्—'उभाभ्यामेव वषट्कारेण स्वाहाकारेण[15] च पुंसे जुहोति स्वाहाकारेण[16] स्त्रीभ्यः पुमांसमेवैतद्वै[17]र्येणाभ्याद[18]धाति' इति। ता इदं ब्रह्म क्षत्रं पान्तु रक्षन्तु। ताभ्योऽप्सरोभ्यः[19] स्वाहा।

सोऽपि गौरुच्यते। 'अत्राह गोरमन्वत'[20] इति।

सोऽपि सुषुम्णोऽपि[21] यथा गौरुच्यते तथेदमुदाहरणम्-'अत्राह' इति। तदुपरिष्टात्[22] ऐकपदिके[23] व्याख्यास्यामः।

सुषुम्णस्याभिधानादन्येभ्यो[24] व्यावृत्तिर्मा[25] विज्ञायीत्यत आह—

सर्वेऽपि रश्मयो[26] गाव उच्यन्ते।

---

१–०श्छान्दः C. २–चरणकाणां B.
३–स्वेकुरयः C. भेकुर D.
४–अत्र 'तेषां भस्यापि छान्दसः' इत्येव पाठः D. वस्तुतस्त्वत्र 'तेषां भस्यापि ('भकारस्यापि' इति वा) बकारश्छान्दसः' इत्येव पाठो युक्तः। हकारस्य त्वत्रावकाश एव नास्ति, स चापि पुनर्बकारस्थाने।
५–'नाम प्रसिद्धौ' इयानेव पाठः D.
६–[धा० २।७०]
७–निपातोपप्रदर्शनार्थो वावकारपर्यायः D.
८–चकर्षाणां B., चकाराणां C.
९–बषधिति C. ०षट् इति ति पाठः D.
१०–वाषट् C. वा वषट् D. ११–दपाता० C.
१२–०कारो वि० C. १३–प्रदर्शनार्थ D.
१४–वचनात् हेतोरित्यर्थः।
१५–'स्वाहाकारेण च' इति त्रुटितम् D.
१६–०रेण च स्त्री० C.
१७–'वै' इति त्रुटितम् D.
१८–[शत० ]
१९–०भ्यश्च स्वा० D.
२०–इदं मूलवाक्यं नास्ति C. D.
२१–सुषुम्णः D.
२२–०'ष्टात्' इति त्रुटितम् B.
२३–[निरु० ४।२५] 'अत्राह' इति ऋक् [ऋ० १।८४।१५]
२४–सुषुम्ण० B.
२५व्यावृत्तीर्मा C. ०भ्योपि वृत्ति० D.
२६–अत्र 'आदित्यस्य' इत्यधिकः पाठः C.

सामान्येन[1] यदि सर्व उच्यन्ते, सुषुम्नस्यापि तेनैव सिद्धम्, किं विशेषेण कथ्यते[2]-सोऽपि[3] गौरुच्यत इति। अन्येषां सामान्येन गोशब्दाभिधानीयत्वम्, अस्योक्तविशेषस्य सामान्येन विशेषेण[4] चेत्यस्य विशेषप्रतिपत्त्यर्थं व्यस्तसमस्तप्रदर्शनम्।

[ इति सप्तमस्या-[द्वितीयस्या-] ध्यायस्य
षष्ठः खण्डः[5]। ]

---

१—सामान्यौ C.
२—कल्प्यते C.
३—सा गौरु० B.
४—०षेणवेत्य० B. ०षणैवेत्यर्थं प्रतिप० D.
५—हस्तलिखितपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो नास्ति।

# [ अथ सप्तमः खण्डः[१] । ]

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि[२] ॥

दीर्घतमा विष्णुमाह । ता[३] तानि । वां[४]-व्यत्ययेन द्वितीयाद्विवचनमेकवचनस्य[५] स्थाने । त्वां विष्णुं स्तुवन्, वास्तूनि गृहाणि[६] निवास[७]स्थानानीत्यर्थः । उश्मसि कामयामहे । गमध्यै गमनायात्मनः । अथवा वामिति[८] षष्ठीद्विवचनम् । दम्पती पतिपत्नी[९] यजमानावुच्येते, युवयोर्गमनाय कामयामहे वयमृत्विजः । यत्र गावो रश्मयः । भूरिशृङ्गाः श्रयणादिक्रियायोगात् शृङ्गस्थानीयत्वाद्वा[१०] दीप्तिरत्र शृङ्गमुच्यते[११], बहुदीप्तयः[१२] । अयासः-अयना[१३] गमनशीलाः । क्रियाभेदादुत्तरोर्धर्चो भिन्नं वाक्यम्, अत एवमुच्यते । किञ्चात्र अहशब्दो[१४] विनिग्रहार्थीयः । एष्वेव स्थानेषु । तदुरुगायस्य रसादानादिक्रियाद्वारेण बहुगतेः वृषणः वर्षितुः[१५], विषेर्वा[१६] एतद्रूपम्, ऋकारोपजननेन । व्याप्तिरित्यर्थः[१७] । विष्णोः स्वभूतं परमं पदं प्रकृष्टं[१८] स्थानमादित्यमण्डलाख्यम् । अवभाति-अग्रे भाति, अग्रे दीप्यते । अर्वागिदं सर्वं कृत्वा भातीत्यर्थः[१९] । भूरि प्रभूतम् । अथवा परमं पदं दिव एकदेशः परार्ध्य[२०]शब्दवाच्यः[२१], तेन च तात्स्थ्यान्मण्डलं[२२] लक्ष्यते । कुत एतत् ? 'दिव आहुः परे अर्धे

---

१—हस्तलिखितपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।

२—[ऋ० १ । १५४ । ६] 'ता वां वास्तू० भूरि' इत्येव प्रतीकम् D.

३—'ता' इति नास्ति D. ४—चां C.

५—०चन स्थाने B. ६—ग्रहाणि C.

७—'नि' इति नास्ति D.

८—वामीति C.

९—तिपत्नी C. अत्र 'प' इति त्रुटितम् । 'पतिपत्नी' इति नास्त्येव D.

१०—'वा' इति नास्ति B. C.

११—शृंग उच्यते D.

१२—०दीप्ताः D.

१३—'अयना' नास्ति B. । अत्रापि C. पुस्तके 'अयासः' इत्येव पाठः ।

१४—०चात्राह अहशब्दो B. C.

१५—वृषि वृष्णो D.

१६—विषे वा B. C.

१७—व्याप्तमित्यर्थः D.

१८—प्रकृष्टस्थान० D.

१९—'अवभाति' इत्यारभ्य 'भातीत्यर्थः' इत्यन्तस्य वाक्यजातस्य स्थाने B. C. पुस्तकयोः 'अधोवभाति अधो (भ C.) दीप्यते' इत्येव पाठः । D. पुस्तकानुपूर्वीक एव पाठो दुर्गवृत्तावपि ।

२०—परार्ध्यं० C.

२१—'वाच्य' इति त्रुटितम् B. C.

२२—तदर्थमात्ममण्ड० D. कदाचिदत्र 'तादर्थ्यान्मण्ड०' इति पाठः स्यात् ।

पुरीषिणम्[1]' इति मन्त्रान्तरे दर्शनात्। तथा च भाष्यकारः-परमं पदं पराध्यर्स्थ[2]मित्याह। अवभाति-अवभासते ज्ञापयत इत्यर्थः। भूरि[3]ति बहुनामधेय[4]मिति पठितस्या[5]पि निर्विवक्षया पुनर्वादः प्रभव[6]तीति सत इति कारकपरिग्रहार्थम्। प्रभवति हि तत्सर्वस्यानुग्रहाय।

पदं रश्मिष्वपि दीप्तिरि[7]ति ज्वलन्नामसु पठितं शृङ्गं प्रसङ्गान्निरा[8]ह-श्र[9]यतेः। श्रि[10]तं हि तदाश्रितं मण्डले। 'शृणातेः[11]' वा हिंसार्थस्य। हिनस्ति हि त[12]द्ग्रीष्मे प्राणिनः। शरणाय हिंसायै उद्गत-मू[13]र्ध्वंगतमिति शृणातेरुद्गमेश्चेति पु[14]नर्निर्वचनं द्विधातुजत्वेन[15]। तमआदेर्हिंसार्थमित्यर्थः। अथवा शरणं र[16]क्षा, तदर्थ[17]माद्विधातुजमेव, रक्षति हि प्राणिनः सस्यनिष्पत्त्यादिना।

शिरसो निर्गतामिति वा। शिरःशब्दान्निर्गमेश्च[18] शिरस आदित्यान्निर्गतमित्यर्थः। 'असावादित्यः शिरः प्रजाना[19]म्' इति श्रवणात्। अथवा 'शिर आदित्यो भव[20]तीति' अयमपि वक्ष्यति। पशोरपि शृङ्गे ए[21]तान्येव निर्वच[22]नानि यथासम्भवं योजनीयानि।

पादः-प[23]द्यते[23]र्गत्यर्थस्य। गम्यतेऽनेनेत्यु[24]क्तम्। स यस्मिन्निधीयते प्रतिबिम्बोद[25]यसमर्थे भू[26]प्रदेशे कर्द[27]मादौ तदपि पादसम्बन्धात् प्रतिबिम्बं पदमित्यु[28]च्यते। तथा च मन्त्रे विष्णोः परमात्मनः पा[29]दा रश्मयः, तन्निधानान्मण्डलं प[30]दमुक्तम्, स्था[31]नसामान्यात्। यत्र गमिगन्धोऽस्ति तत्रै[32]वम्, कार्षापण[33]पादादौ कथम्? इत्याह-पशुपाद इत्यादि। पशुपादे हि पादश[34]ब्दप्रवृत्तिनिमित्तं पादैकार्थसमवायिचतुर्भागत्वं ना[35]मास्तीति तस्या-

---

१-[ऋ० १।१६४।१२]
२-०र्ध्यस्थानमि० B. C. ३-भूरिति C.
४-०यमति C. ५-०स्यावि C.
६-०वतिति C. ७-०ष्वदीतिरुपज्व० D.।
८-०गारोह C. ९-[धा० १ । ९४५]
१०-शृतं C. ११-[धा० ९ । १८]
१२-तं भीष्मे B. C.
१३-'ऊर्ध्वगतं' इति त्रुटितम् D.
१४-पुनर्वच० B. १५-०जनैः आदे० D.
१६-वाजा D. १७-तदर्थद्विधातु क्षेवे D.
१८-'०न्निर्गमेश्च । शिरस' इति त्रुटितम् B. निर्गच्छेत् D.
१९-[तै० ब्रा० १।२।३।३]
२०-[निरु० ४।१३]
२१-एतान्यपि D. २२-०चनीयानि B. C.
२३-[धा० ४।६०] वादवद्यते गत्यर्थस्व C.
२४-०त्युक्तः C. D.
२५-०दयमर्थे C. ०बोयं सम० D.
२६-भूतप्र० D. २७-कर्दमान B. कर्दमादनः C.
२८-पदमुच्यते D. २९-पादरश्मयः B.
३०-पादमु० B C. ३१-पदसा० D.
३२-तंत्रव C.
३३काषायणपादौ पदम् B. ०पणादौ क० D.
३४-०शब्दः प्र० B. ३५-०गत्वमस्ति D.

न्वयात् कार्षापणस्य श्लोकस्य वा चतुर्भागे पादशब्दः प्रवृत्तः । पशुपाद[2]समन्वयात् पशुपादं प्रकृ[3]तीकृत्य चतुर्भागलक्ष[4]णः पादो निरुच्यत इत्याह-पशुपादप्रकृतिः प्रभागपाद इति । अन्वयस्य प्रकृत्या यो वा[5] यस्मिन् निरुच्यत इत्यभिप्रायः । ग्रन्थपदेषु कथम् ? इत्याह-प्रभागपादसामान्यादित्यादि । चतुर्भाग[6]त्वं त्यक्त्वा प्रभागपादं सामान्यत्वमङ्गी-कृत्योच्यते । प्रभागस्य पादः पदनं गमनं तस्मात् सामान्यात् ग्रन्थस्य पदेषु प[7]दशब्द-प्रवृत्तिरिति ।

प्रसक्तानुप्रसक्तमुक्तम्, सम्प्रति लाघवार्थमतिदिशति—

**एवमन्येषामपि सत्त्वानां सन्देहा विद्यन्ते, तानि चेत्समानकर्माणि समान-निर्वचनानि, नानाकर्माणि चेन्नानानिर्वचनानि यथार्थं निर्वक्तव्यानीति[8] ।**

अत्र केचिदाहुः-यथा पृथिवीपश्वादयो गोशब्देन निगमपदान्तरसम्बन्धसाम-र्थ्यादुक्ताः, एवमन्येषामपि सत्त्वानां द्रव्याणां गोश[9]ब्दाभिधायकत्वेन श्रुतिसम्ब[10]न्धात् सामान्यात् सन्देहा जायन्ते, किं क्वाभिधीयत इति ? तद्यथा-'अलातृणो व[11]ल इन्द्र व्रजो गोः[12]' इति । तत्र च मध्य[13]मस्थाना वागुच्यते । 'प्रति त्यं चारुमध्वरं गोपीथा[14]य' इति सोमः । 'स[15] ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं[16]म्' इत्युदकम् । मन्त्रा उपरिष्टाद् व्याख्या[17]स्यन्ते ।

अन्ये त्वा[18]हुः-अनुक्रा[19]न्ते गोशब्दे ग्मा[20]दीनामवसर आह-ए[21]वम् । यथा गौरित्य[22]स्या-भिधेयं प्रति सन्देहः, तद्वदन्येषामपि ग्मादीनां सत्त्वानां गमनसम्बन्धसामान्यादित्यर्थः ।

---

१—तस्यापयात् B. C.
२—०दधर्मान्व० B. C.
३—०पादः प्रकृतीत्यकृत्य B.
४—भागिः लच्चणपादो D.
५—यो वास्मि निरु० B. C.
६—०भागं त्यक्त्वा D. 'प्रभागपादसामान्यादि-त्यादि । चतुर्भागत्वं त्यक्त्वा' इति त्रुटितः B.
७—चशब्द० D.
८—'एवमन्येषामपि सन्देहा विद्यन्ते—निर्वक्तव्या-नीति ' इयत् प्रतीकम् B., 'एवमन्येषामपी-त्यादि' इत्येव प्रतीकम् C. D.
९—०ब्दोऽभि० B.
१०—'सम्बन्धात्' इति नास्ति B. C.
११—पल B. अयमपि C. पुस्तके ।
१२—प्रजो B. [ ऋ० ३।३०।१० । निरु० ६।२]
१३—तत्र मध्यस्थाना D.
१४—गोवीथाय C. [ ऋ० १।१९।१ । निरु० १०।३६ ]
१५—सरं B. सई C.
१६—[ ऋ० १०।६७।७ ]
१७—०ख्यायन्ते B. मन्त्रानुपरिष्टाद् व्याख्यास्यामः D.
१८—'अन्ये त्वाहुः' इति त्रुटितम् D.
१९—०क्रामन्ते B.
२०—मादीना० B. C.
२१—एव C. शावं D.
२२—००त्यन्याभि० B.

सत्त्वाद्यर्थप्राधान्यान्नामानि सत्त्वानि, यथा धात्वर्थप्राधान्याद्धातव आख्यातानीति । न केवलं ग्मा पृथिवी, किन्तर्हि ? गमनमपि । तस्योदाहरणम्:—

अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मन् ॥

भरद्वाजस्यार्षम् । अध-अथ, एतस्मादेव पूर्वोक्तात् रक्षोऽसुराभिभवनसमर्थबलत्वात् कारणात् त्वं होता न्यसीदः-निषण्णः, निषीदसि वा । यजीयान्-यष्टृतरः । इळः-इळाशब्दस्य छान्दसत्वादाकारलोपः, इळायाः पृथिव्या अवयवभूते पदे-स्थाने वेद्याख्ये । इषयन् अकार उपजनः । अन्नानि हविर्लक्षणानि इच्छंतम् । ईड्यः सन् य एवं कर्मासि, तं त्वा नरो मनुष्या अन्याभ्यो देवताभ्यः प्रथमं देवयन्तो देवान् यष्टुमिच्छन्तः । महः-चतुर्थ्यर्थे एषा प्रथमा । महते राये धनाय चितयन्तश्चेतयन्तो जानन्तः । किम् ? सामर्थ्यात् तव माहात्म्यम् । अनुग्मन्-अनुगच्छन्ति त्वामेवाश्रयन्तीत्यर्थः ।

न केवलं पृथिवी, वातोऽपि । उदाहरणम्—

कद्धिष्ण्यासु वृधसानो अग्ने कद्वाताय प्रतवसे शुभंये ।
परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने ॥

वामदेवस्यार्षम् । कत्-कदा । धिष्ण्यासु-धिष्ण्येषु स्वेषु स्थानेषु । वृधसानः-प्रथमासमानाधिकरणे शानचो गुणाभावो व्यापत्तिश्च मकारस्य सकारेण । दैव्ये होतृत्वे वर्तमानो वर्धस इत्यर्थः । हे अग्ने ! कत्-कदा वाताय । किंविशिष्टाय ? प्रतवसे प्रकृष्ट-

१—०त्वाद्यप्राप्तत्वाना० D. २—गौः D.
३—ततोऽस्योदा० B. ४—०निदस्फिद० B. C.
५—०नीध्यः B. C. ६—महोदराये चिन्त० B.
७—[ऋ० ६।१।२] 'अधा होता न्यसीदो यजी० अनुग्मन्' इत्येव प्रतीकम् D.
८—यंसीद निषण्णाः B. C.
९—जीयात् B. C. १०—गुदा B. C.
११—स्थाने: पद्याख्ये C.
१२—इषयन् D. १३—इच्छन् D.
१४—चतुर्थ्या D. १५—रायये D.
१६—चिन्तयन्तो जानन्तः B.
१७—०श्रयती० C.
१८—प्रतपसे B. व्रतवसे C. १९—शुभये C.
२०—न सत्याय B. २१—व्रवः B.
२२—रुद्रानृगे B. [ऋ० ४।३।६]
२३—०देवार्षम् D. २४—कदास्ति B.
२५—प्राथमानाधिकरणे शानच गुणभावो C. [cf. पा० ३।२।१२४]
२६—'प्रथमासमा०' इत्यारभ्य 'सकारेण' इत्यन्तः पाठस्त्रुटितो भाति D.
२७—वमानो B. २८—कटु B. कदपात C.
२९—प्रतपसे B. व्रतवसे C.

बलाय। शुभंये-शुभंयवे[1] इति प्राप्ते शुभंयुशब्दस्यायं छान्दस उकारलोपः[2], ततश्चतुर्थी। सर्व-भूतानां कर्तव्यत्वेन[3] शुभेन तद्वते। परिज्मने-सर्वतो गन्त्रे। नासत्याय-सत्यायैव[4]। क्षे-'क्षि हिं-सायाम्[5]' इत्यस्य डप्रत्यये[6] टिलोपे चतुर्थ्यामेतद्रूपम्। भौमानां[7] रसानां हिंसित्रे[8] शोषयित्रे इत्यर्थः। एवंगुणविशिष्टाय[9] वातस्यार्थाय तेनोपध्यायमानः[10]। ब्रवः-ब्रवीषि[11],कदा[12] प्रज्वलयिष्य-सीत्यर्थः[13]। कत्-कदा। रुद्राय[14] नृघ्ने-शत्रुमनुष्याणां[15] हन्त्रे[16]। एवंगुणविशिष्टाय रुद्राय वाताय[17] चैवंगुणविशिष्टाय[18], एवंगुणविशिष्टं वातं रुद्रंश्च[19] यष्टुमित्यर्थः। स्तुतिर्वा[20]। कदा ब्रवः[21] ब्रवीषि कथयिष्यसि[22]।

अथवा[23] दैव्ये होतृत्वे व्यवस्थितोऽग्निराशास्यते[24]। कदा स्वेषु स्थानेषु वर्धमानो[25] हे भगवन्! अग्ने! उक्तगुणाय वाताय[26] रुद्राय[27] च। प्रदर्शनार्थश्चैतत्। अन्याभ्योऽपि देवताभ्यो मुख्ययजमानस्यैतानि[28] हवींषि[29] इति ब्रवः ब्रवीषि[30] कथयसि। दैव्ये होतृत्वे वर्तमान-स्तुतीर्वा[31] कदा ब्रवीषि। कदाऽस्माकमयं[32][33] मनोरथः सम्पद्यत इत्यभिप्रायः।

तथाऽन्तरिक्षमपि। उदाहरणम्—

यस्तस्तम्भ सहसा वि ज्मो[34] अन्ताद् बृहस्पतिस्त्रिषधस्थो रवेण।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम्[35] ॥

---

१–शुभंजवे D.
२–'शुभंयुशब्दस्यायं छान्दस उकारलोपः' इत्यस्य स्थाने 'उकारलोप आर्षः' इत्येव पाठः D.
३–कर्त्तव्येन B. C. ४–नासत्यायैव D.
५–[धा० ५।३०] हिंसयाम् C.
६–धप्रत्यये C. उत्प्रत्यये D.
७–भौमरसानां B. C. ८–हंसि त्रे D.
९–०शिष्ट वाता० D.
१०–०पधायमा० C. ०पध्मायमा० D.
११–ब्रुषः B. 'ब्रवः' इति नास्ति D.
१२–कदिति कदा D.
१३–०सीत्येर्थः C. 'इत्यर्थ' इति नास्ति D.
१४–रुद्रा रुद्राय B.
१५–नृफेन B. नृहेन C. निघ्ने D.
१६–शत्रूणां नृणां D. १७–पाताय B.
१८–'एवंगुणविशिष्टाय' इति द्विधा लिखितम् C.
१९–रुद्रश्चं B. रुद्रश्चं C. २०–श्रुतिर्वा D.
२१–ब्रब्रवः B. C.
२२–'कथयिष्यसि' इति नास्ति D. २३–अथा B. C.
२४–व्यवस्थिरोऽग्नि०B.C.,०त्वेप्यग्निरवस्थितोऽग्नि.D.
२५–बद्धमानो B. C. २६–वाताव B. C.
२७–'रुद्राय' इति त्रुटितम् D.
२८–दुष्य० B. मुष्य० C. २९–०तान्नि B.
३०–'ब्रवीषि' इति नास्ति B. C. ३१–स्तुतिर्वा B.
३२–तदा D. ३३–०स्मात्म० B.
३४–विज्ञो C.
३५–[ऋ० ४।५०।१] 'यस्तस्तम्भ० मन्द्राजिह्वम्' इत्येव प्रतीकम् D.

वामदेवस्यार्षम्[1]। यः[2] तस्तम्भ-विष्टम्भितवान्, बद्धवान्, घनघटाभिर्वेष्टितवानि-[3]त्यर्थः। सहसा बलेन माहात्म्यातिशयेन। ज्मोऽन्तात्-अन्तरिक्षस्य प्रदेशात्[4]। बृहस्पति-स्त्रिषधस्थः-त्रिषु स्थानेषु सह स्थाता। रवेण शब्देन[5] वुवियदवनीनां[6] गर्जितध्वनिना[7] पूर-यितेत्यर्थः[8]। तं प्रत्नासः-पुराणा ऋषयो[9] मरीच्यादयः। दीध्यानाः-अत्यर्थं ध्यायन्तः। किम्? सामर्थ्यात् वर्षेदिति। पुरः-अग्रे सर्वकर्मणामादावेवेत्यर्थः। किं कारणम्[10]? अन्न-[11]स्थितिकारकत्वाद् भूतानाम्, तस्य च[12] वर्षहेतुत्वात्[13]। आह च-'अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः[14]' इति। विप्रा-मेधाविनो दधिरे-शुद्धोऽप्ययं दधतिरवपूर्वो[15] द्रष्टव्यः। अवधारितवन्तः, सर्वकर्माणि[16] तत्पुरस्सराणि ज्ञातवन्त इत्यर्थः। ऐतिहासिकपक्षेण वा पुरो दधिरे पुरोहितं स्थापितवन्त इत्यर्थः। इन्द्रस्य राज्याभिषेकसमये कृतवन्तो ग्रहा-धिपत्यार्थमित्यर्थः[17]। ज्म इति च दिवोऽन्तरिक्षस्य पृथिव्याश्चेति[18] द्रष्टव्यम्। रवेणा (ज्ञा-परेण शब्देन दीध्यानाः, सामर्थ्यातिशयसमन्वितोऽयमिति[19] योज्यम्। मन्द्रजिह्वम्[20]-जिह्वेति वाङ्नाम[21]। गर्जितलक्षणा इतरा वा मन्द्रा कल्याणी वाग्यस्य[22] तम्। एवमुक्तव्यतिरिक्ताना-मपि सर्वशब्दानां समानश्रुतित्वात् सन्देहा भवन्ति, तेषु सर्वत्र निगमपदान्त-)[23] रस-म्बन्धसामान्यादर्थेपि[24] निश्चयोऽपेक्ष्यत[25] इति।

तानि चेद्गागादीनि समानकर्माणि[26] समानक्रियाणि समाननिर्वचनानि[27] यथैकं तथान्यान्यपि नानाक्रियाविषयाणि। यथा गोशब्दः पृथिव्यां पशौ[28] गमनात्, तथा ग्मा

---

१–०देवार्षम् D. २–वि B. C.
३–०घनाभिवे० B. ०घनादिभिर्वे० C. ०यटाभिर्वे० D.
४–'प्र' इति नास्ति B.
५–गोशब्देन D.
६–वुवय० B. वुवयदपनी० C.
७–तर्हित D. ८–०यते० B.
९–०णऋ० D. १०–विवरणम् D.
११–अणस्थिति० C. अन्तस्थितिकरत्वात् D.
१२–'च' इति नास्ति D.
१३–०हेतुकत्वादाह D.
१४–[भ० गी० ३।१४]
१५–दधातिः B. धातिः C.
१६–सर्वाणि तत् D.
१७–०पत्यर्थ० B. ०त्यार्थमित्यार्थमि० C.
१८–पृथिव्यश्चे० C. १९–०तिशयः स० C.
२०–मन्त्र ० C. २१–'म' इति त्रुटितम् C.
२२–वा यस्य B. वागस्य C.
२३–( ) एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः D.
२४–०र्थे विनि० C.
२५–०श्चये यावक्ष्य इति B. ०श्चयो वेक्ष्यत इति C.
२६–'समानकर्माणि' इति नास्ति B. C.
२७–समानानि निर्व० B.
२८–०व्यां गौर्ग० B. C.

गमनादिति । तथा क्ष्मादयः । क्ष्मा क्षि[1]-( यतेः । तथा पुष्यतीति पूषा[2]: पृथिवी । रश्मिपोषमित्यादित्यः नानाकर्माणि[3] नानाक्रियाणि चेन्नाना[4] । नैवं[5] निर्वक्तव्यानि, ग्मा[6] ज्मा क्ष्मा[7] इति । यथार्थम्[8]-अर्थानुरूपेण वाक्यप्रकरण[9]-) सामर्थ्यान्निर्वाच्यानि[10] ।

इतीमान्येकविंशतिः[11] पृथिवीनामधेयान्यनुक्रान्तानि ।

इतीमानीत्यादि[12] । इति शब्दः[13] प्रकारार्थः । एतेन[14] प्रकारेण 'एकविंशतिः पृथिवीनामधेयानि' इति प्रदर्शनम्, न[15] परिगणनम्, रसाधराधरण्यादीनां दर्शनात्, लिङ्गाच्च पृथिवीनामधेयानीत्यपठिताभिधानात्[16] ।

सन्देहा विद्यन्त[17] इत्युक्तस्य सन्देहस्य स्वयमेव प्रदर्शनार्थमाह—

तत्र निर्ऋतिर्निरमणात् ऋच्छतेः कृच्छ्रापत्तिरितरा । सा पृथिव्या सन्दिह्यते । तयोर्विभागः । तस्या एषा भवति[18] ।

तत्र तेषु पृथिवीनामसु निर्ऋतिः पठ्यते । सा च प्रलयाधिदेवता तुल्यश्रुतित्वात् पृथिव्या सन्दिह्यते । तयोः पृथिवीन्द्रियप्रलयदेवतयोर्यो विभागोऽर्थभेदाश्रयस्तं दर्शयति-पृथिवी निर्ऋतिः, निरमणात्[19] नियमेन रमणात् । निश्चलत्वेनावस्थानादित्यर्थः[20] । रमन्ते वाऽस्यां[21] भूतानीति । ऋच्छतेः- कृच्छ्रं दुःखं तदापत्तिरितरा[22] मृत्योरधिदेवता । अस्याः पृथिव्या वा एषा निर्वाचिका[23] ऋक्[24] ।

[इति सप्तमस्या-( द्वितीयस्या ) ध्यायस्य
सप्तमः खण्डः ।]

---

१—ची० B. C.
२—पुषा: C.
३—'नानाकर्माणि' नास्ति C.  ४—चेन्नना B.
५—अत्र 'न' इत्यधिकं भाति ।
६—ह्मा B. C.  ७—क्ष्मा इ इति B.
८—यथा यथार्थं अथा० C.
९—(  ) एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः D.
१०—'०र्वाच्या' इत्येव D.
११—दुर्गाचार्यस्तु 'इति' इति पदं 'निर्वक्तव्यानि' इत्यनेन पूर्वपदेन सह पठति समाप्त्यर्थकम् ।
१२—०त्याभि C.  १३—इतिः प्रका० D.
१४—तेन D.  १५—'न' इति त्रुटितम् D.
१६—०यानित्य० C.  १७—सन्देहो वियत D.
१८—हस्तलिखितपुस्तकेषु 'तत्र निर्ऋतिरित्यादि' इत्येव प्रतीकमवरणिकायाः प्रागेव लिखितम् ।
१९—नीरम० C. अयमपि पाठः B.
२०—'ना' इति त्रुटितम् C.
२१—'वा' इति नास्ति D.
२२—०तरात् मृ० D.
२३—अत्र 'वा' इत्याधिकं वर्त्तते B.
२४—हस्तलिखितपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

## [अथ अष्टमः खण्डः।][1]

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश[2] ॥

दीर्घतमस आर्षम्। यः कामार्तः[3] पुत्रार्थी वा। ईमिति[4] पदपूरणः। एवं गर्भं चकार-करोतेः किरतेर्वा लिट्। करोति विक्षिपति वा, तत्कारणभूतरेतोविक्षेपद्वारेण[5]। न सोऽस्य तत्त्वमिति शेषः। द्वितीयार्थे वा[6] षष्ठी। एतं गर्भं न वेद। कुतो वा कथं वा केन वा[7] प्रयोजनेनेत्येवमध्यात्मदृष्ट्या यद्ज्ञानं तदभिप्रायमिदं नचेद्वेदेति[8] वचनम्। योऽप्येनं मातुरुदरस्थमुदरवृद्ध्यौऽर्थापत्त्याऽनुमानेन[9] वा जातं[10] सन्तं प्रत्यक्षेण दर्शयति[11]। हिरुक्-अन्तर्हितनामैतत्। अन्तर्हितो यो गर्भस्तस्मादपि। सोऽप्येनमध्यात्मज्ञानाभावान्नैव जानातीत्यर्थः। अजानंश्च सः[12] स्वस्या[13] मातुर्योना-योनौ स्थितः। अन्तः-मध्ये। परिवीतः-जरायु[14]वादिभिर्व्याप्त इत्यर्थः[15]। यथाकालं जायते[16]। बहुप्रजाः-बहुप्रजननः आत्मज्ञानाभावा[17]न्मोक्षमप्राप्नुवन् संसारे पुनः पुनर्जायमान इत्यर्थः।

अथवा पुत्रः प्रजा अपत्यानि[18]। बह्वपत्यश्च[19] प्रथमं मातुर्योनौ स्थितो जातश्च बह्वपत्यतामापन्नः सन्नित्यर्थः। गर्भवासकृतमपत्य[20]पोषणकृतश्च निर्ऋत्यभिधानं प्रलयं दुःखमाविवेश-आविशति प्राप्नोतीत्यर्थः। एष परिव्राजकाना[21]मात्मविदां दर्शने चास्या[22] ऋचोऽर्थः।

नैरुक्तानां तु[23]-य एनं वर्षलक्षणमुदकसंस्त्यायं[24] पूर्ववत् करोति किरति[25] वा[26]। न सो अस्य वेद (वर्षस्य तत्त्वं न वेद, कुतोप्येतदुदकम[27]प्यागच्छति, यन्मया विसृज्यते,

---

१–हस्तलिखितपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति।
२–[ऋ० १।१६४।३२] 'य ईं चकार० विवेश' इत्येव प्रतीकम् D.
३–कामार्थः C. ४–'मिति' इति त्रुटितम् D.
५–०भूतेरेतो० D. ६–'वा' इति त्रुटितम् D.
७–'वा' इति त्रुटितम् D.
८–'चे' इति त्रुटितम् B. C. 'द्वे' इति त्रुटितम् D.
९–०द्ध्यर्था० B. १०–जात सन्तं B. C.
११–दर्शयिष्यति B. C. १२–सा B. C.
१३–स्वस्यां D.
१४–जरायादि० C.
१५–'इत्यर्थः' इति नास्ति D.
१६–'यथाकालं जायते' B. C.
१७–०भावा मो० C.
१८–समानार्थानीति शेषः।
१९–बह्वत्यश्च C. २०–०मप्यपत्य० D.
२१–०जकना० B. C.
२२–'च' इति नास्ति D.
२३–च B. C. २४–०संस्त्यदयं C.
२५–'कि' इति त्रुटितम् B. C.
२६–वा न वा D.
२७–अत्र 'अपि' इत्यधिकं भाति।

किञ्चोदकस्य तत्त्वमिति, केवलं त्वसौ विसृजत एवोदकम् )[1]। कः पुनरसौ ? मध्यमो[2] वायुर्मेघो वा। मेघोऽपि[3] हि मध्ये भवत्वाद् भवति मध्यमः। यस्त्वेनं ददर्श[4], यदासावा[5]-दित्यो न्यङ्[6]रश्मिभिरावर्तते, तदादित्येनोपहितं मेघस्योदरे स्थितमुदकसंघातं, हिरुक्[7]-अन्तर्हित[8]मपि सन्तं[9] तस्मात्-प्रथमार्थे पञ्चम्येषा[10]। ददर्शेत्येतच्चानुषक्तव्यम्[11]। य एनं[12] मेघ-हननसमये[13] प्रत्यक्षं पश्यति, अन्तर्हितमपि स पश्यतीत्यर्थः। कः पुनरसौ ? इन्द्रः[14]। स हि मेघहननकाले तत्स्थमुदकसंस्त्यायं[15] प्रत्यक्षानुमानाभ्यामुभयथा[16] पश्यति। किञ्च य[17] उद-कसंस्त्यायः[18] पूर्वं सर्वभूतानां[19] निर्मातुरन्तरिक्षस्यावयवभूते[20] योनौ अन्तः योनिस्थानं तस्य मध्ये परिवीतः परिगतो वायुना व्याप्तः। बहुप्रजाः-बहुप्रजननोऽपर्यन्तधारात्मना व्यवस्थित इत्यर्थः। अथवा जनिरन्तर्नीतण्यर्थः[21]। बहूनां धाराणां सस्यानां[22] वा, सस्यनिष्पादन-द्वारेण[23] प्राणिनां प्रजनयिता[24]। निर्ऋतिं भूमिमाविवेश[25] आविशतीत्यर्थः।

अथैकपदनिरुक्तम्। करोतिकिरती[26] रूपेऽर्थे वा निश्चयहेत्वभावात् सन्दिग्धौ[27] वर्षकर्मणे-त्युक्तम्। यो हि वर्षं करोति किरत्यप्यसौ[28], यश्च किरति करोत्यप्यसौ[29]। सन्देहोपदेशश्च[30] न धातुविकल्पार्थः। किन्तर्हि ? रूपार्थभेदादेव। निर्मीयन्ते[31]ऽस्मिन्नवकाशं ददति सन्ति भूतानि[32] प्राणिनः। उदकनाम चैतत्[33]। उदकानि योनिरन्तरिक्षं[34] माताऽन्तरिक्षमिति यद्यु-

---

१–( ) एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः B. C.
२–भूता मध्य० B. C.
३–वि C.
४–'दर्श' इत्येव B. C.
५–यदा वासा० B. C.
६–रन्यररिम० B. न्यररिम० C.
७–'रुक्' इति त्रुटितम् B. C. उदकं घात्यं हिरुत् D.
८–अन्तरि हित० C.
९–सन्ततं B.
१०–'एषा' इति नास्ति D.
११–दर्शे त्येत वा ( चा C. ) नुषक्तव्यं B. C.
१२–एन B. C.
१३–मेघनन० C.
१४–इन्द्र B. न्द्रं C.
१५–'दक' इति त्रुटितम् C.
१६–०यधा B.
१७–स C. नास्त्येव D.
१८–०स्त्यायं D.
१९–पूर्वसंभूतानां D.
२०–०र्मातर० B.
२१–०र्णीतण्यर्थः C. ०रत्रान्तर्हितण्यर्थः D.
२२–संस्थानानां D.
२३–०ण वा प्रा० D.
२४–०जयि० D.
२५–०वेशेति समस्तार्थः D.
२६–०किरति B. ०तिर्हि किरति D.
२७–प्रसन्दि० B. C. ०न्धिधो D.
२८–०त्यव्यसौ C.
२९–'यश्च किरति करोत्यप्यसौ' इति त्रुटितम् D.
३०–०न्देहाप० D.
३१–०यते D.
३२–०नि च प्रा० B.
३३–'च' इति नास्ति D.
३४–०रिचमाता B. C.

भयमन्तरिक्षम्[1], मातुरिति षष्ठ्यनुपपत्तिः[2], व्यतिरेकाभावात्[3] ? उच्यते, माताऽन्तरिक्षमिति सामान्यवचनम् । योनिरन्तरिक्षमिति उपाधिभेदात् । तस्यैव महानवयव[4]: परिवीतो वेष्टितो वायुना उदकाश्रयमेघावृतः[5] कश्चिदुच्यत इत्यदोषः[6] ।

[ अयमपीतरो योनिरेतस्मादेव, परियुतो भवति । ][7]

अयमपीत्यादि । इतरः[8] स्त्रीयोनिरेतस्मादेव रूपसामान्यात् प्रसक्तो निरुच्यते । नानाकर्मत्वाच्च निर्वचनान्यत्वम्[9] । पूर्वं वेतेर्वकारस्योकारः[10] । सचेकारात्परः[11] तस्मिन्नीकारस्य यणादेशः[12] । इतरो यौतेः[13] । उभयोर्निनामकरणः[14] । वायुनैकः परिवेष्टितः[15] । इतरः[16] प्रजननेन मिश्रीयते, मिश्रितो वा रक्तमांसादिभिः । स्त्रीयोनेरुदाहरणम्—

विष्णुर्योनिं कल्पयतु[17] त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते[18] ॥

त्वष्टुर्विष्णोर्वा आर्षम् । सीमन्तोन्नयनेऽस्या विनियोगः[19] । विष्णुर्व्याप्तः[20] क्षेत्रज्ञः। स योनिं-तात्स्थ्यादत्र[21] ताच्छब्द्यम् । योनिस्थं कार्यकारणं[22] भोग्यमात्मानं कल्पयतु आविशतु अधितिष्ठतु[23] । त्वष्टा[24] शिल्पी अवयवरूपाणि पिंशतु[25] विस्तारयत्वित्यर्थः । आसिञ्चतु आप्याययतु[26] प्रजापतिः प्रजानां पाता अशितपीतरसप्रदानद्वारेण[27] । धाता गर्भं दधातु ते तव[28] ।

---

१—रिक्षमातु० B. C.
२—षष्ठनु० C.
३—भेदाभावादित्यर्थः । सति हि भेदे षष्ठी सम्भवति नान्यथेति भावः । व्यतिरेकाभावार्थः D.
४—महावयवः D.
५—'वायुना उदकाश्रयमेघावृतः' इति नास्ति B. C.
६—इत्यदेषः C.
७—हस्तलिखितपुस्तकेष्विदं मूलवाक्यं नास्ति ।
८-इत्य B. C. इतरत्र D.
९—०च न ना० C.
१०—पूर्व ( वं C. ) वैते प्रकारस्यो० B. C. वेतिः
११—सस्वे का० D.
१२—तस्मीन्नीकारस्य यणः D.
१३—[ धा० २।२३ ]
१४—उभयोनि नमि करणः B. उभयो निर्न्नामकरणः C.
१५—पुरी वे० B. C. १६—इतः D.
१७—कल्पतु B.
१८—[ ऋ० १०।१८४।१ ]
१९—ति योगः B. C. २०—विष्णु व्याप्तः C.
२१—तां समोदत्र D.
२२—काय का० B. कारयतु का D.
२३—आधि० C.
२४—०ष्टा च शि० D.
२५—विंशतु C. विशतु D.
२६—आप्याययु C. नास्त्येव D.
२७—अशीतपीतरसदान० B. अशीतवीत० C.
२८—तत D.

लिङ्गात् देवतासत्यत्वं[1] दुर्ज्ञानम्, लिङ्गस्यानैकान्तिकत्वात्[2]। अतस्तदधिगतये[3] यत्नः कर्तव्य इत्येवमर्थं पुराकल्पं पठन्ति—

शाकपूणिः सङ्कल्पयाञ्चक्रे[4]। [सर्वा देवता जानामीति। तस्मै देवतोभयलिङ्गा प्रादुर्बभूव। तां न जज्ञे। तां पप्रच्छ-विविदिषाणि त्वेति। सास्मा एतामृचमादिदेश-एषा मद्देवतेति[5]।]

अस्यार्थस्य षष्ठे[6] व्याख्यातस्यापि दार्ढ्यार्थं पुनरुपन्यासः। 'याज्ञे दैवतेन' इति व्याख्यातस्य[7]। शाकपूणिर्नैरुक्ताचार्यः। संकल्पयाञ्चक्रे-संकल्पितवान्। किं तत्[8]? सर्वा देवता मन्त्राणां जानामीति। तत्तस्य ज्ञानोत्सेधमाक्षिपन्ती काचिदभिमानिनी देवता स्त्रीलिङ्ग-

---

१–सतत्त्वं B. C.

२–०स्यानैकत्वात् D.

३–अतस्ते द० B. C. ०धिगम य० D.

४–C.D. पुस्तकयोः 'शाकपूणिः संकल्पयांचक्रे' इति पाठो नास्ति। B. पुस्तके तु अयं पाठः 'पुराकल्पं पठन्ति' इत्यस्यानन्तरमेव नास्ति, किन्तु 'अस्यार्थस्ये-' त्यादि 'व्याख्यातस्ये'-त्यन्तस्य पाठस्य पश्चाद् वर्तते। अस्माभिस्त्वर्थानुसार्येव क्रम आदृतः।

५–कोष्ठकान्तर्गतः पाठो हस्तलिखितपुस्तकेषु नास्ति।

६–[ निरु० १।१७ ] द्रष्टव्यम्।

७–व्याख्यातस्या B. C.। 'व्याख्यातस्य' इति पदानन्तरं केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते। स चेत्थम्:—
"दुर्गवृत्तौ–'नैरुक्तानां वै ('नि' मु. पा.) ऋति शब्देन भूमिरुच्यते, परिव्राजकानां कृच्छ्रापत्तिः। तदेवं मन्त्रेषु शब्दगतिविभुत्वात् उभयमप्युपपद्यत एव। तद्यथा–'दधिक्राव्णो अकारिषम्' [ ऋ. ४।३९।६ ]·········'इत्याग्नीध्रे दधिभक्षयन्ति' [ आश्व० सू० १२।१२ ] इति दधिभक्षणे। तथा चाश्वमेधे 'दधिक्राव्णो अकारिषमित्युत्थितायां सर्वा जयन्ति' इत्यश्वसन्निधावेतत् ('तं' मु. पा.) पत्न्यो जपन्ति महिष्यामुत्थितायाम्। तत्रैवं सति प्रतिविनियोगमस्यान्येना-('०स्यान्येनान्येना' इति वीप्सापि मुद्रितपुस्तके) र्थेन भवितव्यम्। त एते वक्तुरभिप्रायवशादर्थान्यत्वमपि भजन्ते मन्त्राः। न ह्येतेष्वर्थस्येयत्तावधारणमस्ति। महार्था ह्येते दुःखप-('दुष्प' मु. पा.) रिज्ञानाश्च। यथाश्वारोहवैशिष्ट्या-('शेष्या' इत्यपि मु. पा.) दश्वः साधुः साधुतरश्च वहत्येवमेते वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रा-(स्र-) वन्ति। तत्रैवं सति लक्षणोद्देशमात्रेणैवै ('०मात्रमेवै' मु. पा.) तस्मिन् शास्त्रे निर्वचनमेकैकस्य क्रियते। क्वचिच्चाध्यात्माधिदेवाधियज्ञोपदर्शनार्थम्। तस्मादेतेषु यावन्तोऽर्था उपपद्येरन् अधिदैवाध्यात्माधियज्ञाश्रयाः सर्व एव ते योज्याः। नात्रापराधोऽस्ति। एत-('व' मु. पा.) मेव सन्देहावि-('धि' इत्यपि मु. पा.) कारमुपजीवन्नाह' एवं दुर्गः"।

८–'किं तत्' इति त्रुटितम् D.

पुल्लिङ्गयुक्ता[1], मन्त्रे स्त्रीपुंल्लिङ्ग[2]शब्ददर्शनादेव[3]मुच्यते। अथवा मध्यमं[4]द्युस्थानं[5]लिङ्गयोगादुभयलिङ्गत्वमुच्यते । प्रादुर्भूता[6] स्वप्ने प्रत्यक्षं वा तां[7] न ज्ञातवान् । अतस्तामेव देवतां पृष्टवान्[8]-वेदितुमिच्छामि त्वामिति । सा[9] देवतास्मै वक्ष्यमाणामृचमादिष्टवती-एषा मद्देवतेति । तव च देवताज्ञानाभिमानः, मां जानीहि अनयेति ।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
अष्टमः खण्डः[10] । ]

---

१–युक्तां C.
२–'लिङ्ग' इति त्रुटितम् D.
३–०देवोच्यते D.
४–०मं द्यु० B. C.
५–०नत्व लि० D.
६–प्रादुभूता C.
७–पातान्न B. C. ८–पृष्टवा C.
९–ता C.
१०–हस्तलिखितपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो नास्ति ।

# [ अथ नवमः खण्डः । ][1]

अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥[2]

दीर्घतमस आर्षम्[3] । माध्यमिका वागत्र देवता । सा चैश्वर्ययोगात् शरीरेणैवोभयलिङ्गा, एतस्यां ऋचि उभयलिङ्गैः शब्दैरादिश्यमानत्वात्, आह-अयं स येन इत्येते पुल्लिङ्गाः शब्दाः । अभिवृतेत्यादयः स्त्रीलिङ्गाः । तैश्च सर्वैर्माध्यमिका वाग् निर्दिश्यते । कुत एतत् ? उच्यते । शिङ्क्ते मिमाति मायुमिति च सर्वेषां [ स्तनयित्नुलक्षणेनाभिसम्बन्धः, स्तनयित्नु करणं मध्यमस्थानं वा कर्तृत्वात् । अथ चोभयलिङ्गेति मध्यमोत्तमलिङ्गेत्यभिप्रेते न नपुंसकस्त्रीलिङ्गे । विद्युद्भवन्तीत्येवमन्तं हि[4] ] स्तनयित्नुलक्षणेनाभिसम्बन्धादत्र मध्यमलिङ्गम् । प्रतिवव्रिमौहतेति रसादानसम्बन्धादुत्तमलिङ्गम् । कथं पुनरेकस्या देवताया उभयलिङ्गैः शब्दैर्निर्देशो येन गौरभीवृतेति[5] च भेदेनापदेशो[6] न विरुध्यते ? उच्यते[7] । लिङ्गव्यत्ययाश्रयणादधिष्ठात्रधिष्ठेयभेदा-[8][9][ च । अयमित्यादिभिः स्तनयित्नुकरणसम्बन्धात् सर्वैर्माध्यमिका वाङ् निर्दिश्यते[10] ] इत्युक्तम् । न[11] च अयं स येनेत्येतेषां[12] स्त्रीलिङ्गत्वमन्तरेण माध्यमिकवाग्[13]निर्देशार्थत्वं सम्भवति, अतो लिङ्गव्यत्यय आश्रीयते, इयं सा यया इति । सर्वदेवतानां चैते[14] अधिष्ठात्रात्मानः, अन्ये कर्तात्मानः[15], इति । वक्ष्यति हि[16]-'अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः'[17] इति । अतो[18]ऽधिष्ठात्रधिष्ठेयलक्षणभेदाद्[19] भेदेनाप्यपदेशो[20] न विरुध्यते । इयं सा शिङ्क्ते या माध्यमिकाया[21] वाचोऽधिष्ठात्री देवता स्तनयित्नुलक्षणं शब्दं करोति । यया गौः वाङ्नामैतत्[22] । वाङ्

---

१–हस्तलिखितपुस्तकेष्वत्र खण्ड प्रारम्भस्य निर्देशो नास्ति ।

२–[ ऋ० १।१६४।२९ ]

३–'दीर्घतमस आर्षम्' इत्यारभ्य 'कुत एतत्' इत्यन्तः पाठस्त्रुटितः B. C.

४–[ ] एतत्कोष्ठकान्तर्गतः पाठो नास्ति C. B.

५–०रभि वृ० B. ६–०देनो प० D.

७–'उच्यते' नास्ति D.

८–०त्ययश्रवणा० B. ०त्यये ना श्रय० D.

९–०ष्ठेतिय० C. ०ष्ठेयलक्षणभे० D.

१०–[ ] एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः D.

११–स न च D. १२–०नेत्येषां D.

१३–०मिका D. 'वाग्' इति त्रुटितम् B.

१४–चैके D.

१५–'कर्मात्मानः' इति पाठ उचितः । 'अन्ये कर्तात्मानः' नास्ति B. C.

१६–'हि' इति नास्ति D. १७–[ निरु० ७।७ ]

१८–'अतः' इति नास्ति B. C.

१९–भेदान् C. D. २०–भेदानाव्यप० C.

२१–मध्यमि० B. C. २२–वाङ्नान्नामै० B. C.

माध्यमिका अभीवृता अभिव्याप्ता अधिष्ठितेत्यर्थः[1]।

अथवा 'अयं स' इति नैव माध्यमिका[2] वाङ् निर्दिश्यते। किं तर्हि ? मेघः। तत्स्थायाञ्च माध्यमिकायां वाचि[3] शिञ्जानायां स एव शिङ्क्ते इत्युच्यते। यथा मञ्चस्थेषु[4] मनुष्येषु क्रोशत्सु मञ्चाः[5] क्रोशन्तीति। अयं स मेघः शब्दं करोति। येन गौरभीवृता-येन मेघेन माध्यमिका वाग[6]भीवृता अभिव्याप्ता[7], अभीत्येष परीत्येतस्य स्थाने परिवृता। मिमाति निर्मिमीते करोति[8] मायुं मायुरिति[9] वाङ्नाम, वाचं स्तनयित्नुलक्षणाम्।

अथवा मायुरादित्य उच्यते। स हि मिनोति प्रक्षिपति सर्वत्र[10] स्वं[11] ज्योतिः, अतो मायुरादित्यः। लुप्तोपमश्चात्र[12] द्रष्टव्यः। मायुसदृशं निर्मिमीते। यादृश आदित्यस्तादृशं तेजस्विनं निर्मिमीत इत्यर्थः। कम् ? सामर्थ्यादात्मानम्। उदकध्वंसने तस्मिन्नेव मेघे आश्रिता स्वैः[13] चित्तिभिः। अपठितमपि सामर्थ्यात् कर्मनामैतत्। कर्मभिर्वृष्टिलक्षणैः। निहि[14]चकार-हिशब्दः[15] पदपूरणः। नियमेन करोति उत्पादयतीत्यर्थः[16]। मर्त्यं मरणधर्माणम्, कृत्स्नं स्थावरजङ्गमम्[17]। अथवा चित्तिभिः दारुणरूपैश्चटचटाशब्दैर्भयंकरैः[18] कर्मभिः विद्योतनलक्षणैः[19] निचकार[20] नीचैः[21] करोति मर्त्यं मनुष्यम्। सर्वो हि[22] मनुष्यो विद्युति विद्योतमानायां भीतो नीचैर्नमति, तदभिप्रेत्यैतदुच्यते निचकार मर्त्यमिति। किं पुनः कुर्वती मिमाति मायुं निचकार मर्त्यमिति[23] ? उच्यते। विद्युद्भवन्ती-विद्युद्रूपमापद्यमाना[24][25], प्रतिवव्रि-[26] मौहत-ऊहतिरत्र सामर्थ्यादुपसंहारार्थः। प्रत्युपसंहरति च वव्रिं[27] रूपमुदकलक्षणं रसांश्च[28] रश्मिभिः प्रत्यादत्त इत्यर्थः। एकमेवेदं[29] ज्योतिस्त्रेधा कृतमिति। एतत् 'तमू अकृण्वन्

१—अधितिष्ठन्तीत्यर्थः D. २—०मिता C.

३—०यावोचि शिञ्जना० C. वाचि हि सिञ्जा० D.

४—०स्थानेषु D. ५—मन्त्राः C.

६—अस्य वाक्यस्य स्थाने B. C. पुस्तकयोः 'येन वाङ्माध्यमिका अभीवृता' इत्येव पाठः।

७—'अभिव्याप्ता' नास्ति C. D.

८—'करोति' नास्ति B. C. ९—वायु० B. C.

१०—'सर्वत्र' इति नास्ति D. ११—स्वयं B.

१२—०मत्वाच्चात्र D. १३—सैव B. C.

१४—'नि' इति त्रुटितम् C. १५—निः पद० D.

१६—उत्पादर्भय० C. १७—स्थावरं D.

१८—दारुणेत्यादि पदजातं नास्ति B. C.

१९—'विद्योतन' इति त्रुटितम् D. २०—विच० B.C.

२१—नीचैदक० C. निचैः D. २२—भि B. C.

२३—अस्य वाक्यस्य स्थाने D. पुस्तके 'किं पुनः करोति' इत्येव वर्तते।

२४—०वन्ति C.

२५—०पतामापाद्य० D.

२६—सती D.

२७—'वव्रिं' इति नास्ति D.

२८—रसाश्च B.

२९—एवमे० D.

त्रेधा भुवे कर्म[1]' इत्यत्र वक्ष्यते। तेन मध्यमस्यैवादित्यात्[2]मनावस्थानात् अविरु[3]द्धोऽयं रसा[4]-दानव्यपदेश इति कृत्वा वव्रिमोहतेत्येतत् प्रत्युपसंहरति-वव्रिं रूपमात्मीयं वृष्टिकालेऽतीत इत्ये[5]वं व्याख्यायते। ततोऽस्यामृचि उत्त[6]रलिङ्गत्वं नैवास्ति, इत्युभयलिङ्गत्वम्। पुल्लिङ्गस्त्रीलिङ्गाभ्यामेव व्याख्येय[7]मिति । एवमुभयलिङ्गैः शब्दैरपदेशादुभयलिङ्गत्वम्। उभयलिङ्गत्वाच्चोभयलि[8]ङ्गा प्रादुर्बभूवेति यु[9]ज्यते वचनं, सन्देह[10]श्च। ततः 'तमकुर्वंस्त्रेधा-भावा[11]य' इत्येकैव देवताऽनेकरूपा, देवैश्वर्ययोगात्। व्यत्ययेन लिङ्गसामञ्जस्यं स्यात्, वाक्यसामर्थ्यान्निर्णय[12]श्च यु[13]ज्यते। एवं सन्देह[14]पदेषु सर्वत्र निर्णया[15]य यतितव्यमिति प्रदर्शनार्थमृगियं व्याख्याता। लिङ्गाच्च दुर[16]ध्यवसानं देवतास[17]तत्त्वमिति प्रदर्शितम्। वागेषा माध्यमिके[18]ति सर्वनाम्नो विषयकथनम्। वव्रिरिति रूपसामान्येन। तद्धि स्वमा[19]-श्रयमावृणोति वर्षणेत्यादि संक्षेपेण समस्त[20]गर्थवचनम्। शिष्टं भा[21]ष्यं मन्त्रव्याख्याने[22]न व्याख्यातम्।

इति स्कन्दस्वामिकृतायां निरुक्तवृ[23]त्तौ सप्तमस्या-[ द्वितीयस्या[24]-] ध्यायस्य द्वितीयः पादः।

---

[ नवमश्च खण्डः समाप्तः[24]। ]

---

१–०धा हुकम् B. ०धा हुकेम् C. 'कम्' इति नास्ति D. [ ऋ० १०।८८।१०। निरु० ७।२८ ]

२–०स्यैवा जित्या० D. ०त्यानवस्था० B.

३–अवरु० B. C. ४–ससादा० D.

५–इत्येव B. C.

६–अत्र 'उत्तमलिङ्गत्वं' इति युक्तः पाठो भवेत्। D. पुस्तके तु 'स्त कोंऽस्यामच्युतः लिंगत्वं' इति पाठो वर्तते।

७–व्याख्याय० D. ८–लिङ्गः D.

९–प्रयु० D. १०–०देवश्च B. C.

११–०स्त्रेता भा० C. ०भावकैव D. [ निरु० ७।२८ ]

१२–०निर्नय० D. १३–यज्यते C.

१४–०हवदेषु D. १५–निर्नया D.

१६–दुरवध्यव० C. १७–०तात्व० D.

१८–०केत B. C.

१९–तद्धित स्वमाश्रममा० D.

२०–०स्तार्थवच० D. २१–भाव्यं D.

२२–०ख्यानम्। D.

२३–टीकायां D.

२४–[ ] एतत्कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।

# [ अथ तृतीयः पादः ।

## दशमः खण्डः ]

आनुपूर्व्येण क्रमशोऽस्य प्रतिज्ञातत्वात् पृथिवीनामानन्तरं तत्प्रभवेति[2], तत्[3]प्रभवत्वात् हिरण्यनामान्युच्यन्ते इयत्तास्वरूपपरिच्छेदाय हिरण्यनामान्युत्तराणीति[4] । पृथिवीनामापेक्षमुत्तरत्वम् । सर्वत्र[5] पूर्वापेक्षयोत्तरत्वम् । पञ्चदश तानि पठ्यन्ते । अपठितान्यपि द्रष्टव्यानि[6], हाटकशातकुम्भचामीकरकलधौतादीनि[7] । इह पठितान्यपि चान्यत्र दृश्यन्ते, अयःशब्दो लोहशब्दश्च कालायसेऽपि[8], हिरण्यशब्दो रजते[9] । समानासमानकर्मत्वा[10]पेक्षश्च निर्वचनविभागः सर्वनामसु द्रष्टव्यः ।

अथ निर्देशप्रसक्तहिरण्यशब्दनिर्विवक्षयाह–हिरण्यं कस्मात् ? [11]इति । आख्यातजत्वप्रदर्शनार्थ[12] उपक्षेपः । प्रतिपदश्चैतद्[13] द्रष्टव्यम् । अतिगौरवप्रसङ्गान्नोच्यत इत्युक्तं पुरस्तात् । ह्रियते चौरैरायम्यमानं बध्यमानं यत्नतो रक्ष्यमाणमपीत्यर्थः । शिल्पिभिर्वा पत्रकटकादिभावेनायम्यमानं विस्तीर्यमाणमित्यर्थः । ह्रियते जनाज्जनमिति वा, संव्यवहारार्थम् । द्रव्यस्वभावत्वान्नैकत्रावस्थायित्वम्, तस्य सर्वस्य[14] सर्वथा हरतेर्हिरण्यम्[15] । द्विधातुजत्वप्रदर्शनार्थमाह–हितरमणम्, हितश्च तदापदि[16] दुर्भिक्षादौ[17], रमयति च सर्वदा सर्वमित्यतो हिरण्यम् । तेन गृहीतेन मूषकोऽपि रमते, किमुत मनुष्यः[18] । हर्यतेर्वा स्यात् प्रेप्साकर्मणः । सर्वेण हि सर्वदा तत् प्राप्तुमीप्स्यते[19] । कानि पुनस्तानि ? हेम–हितं [20]ममेदमिति सर्व एवैतन्मन्यते । चन्द्रं चन्दतेः[21] । रुक्मं[22] रोचतेः । एवं सर्वत्र लोकक्रमादेव ।

---

१–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

२–'तत्प्रभवति' नास्ति D. ३–तत्र D.

४–'इति' नास्ति D.

५–'सर्वत्र' इत्यस्यानन्तरं B. पुस्तके 'तृच' इति C. पुस्तके 'तृच्' इति च पाठो वर्तते ।

६–०व्याणि D. ७–०तानीति B. C.

८–वि C. ९–रजतो B. C.

१०–समानां समानकर्तृत्वा० D.

११–कर्मादिति C. 'इति' नास्ति D.

१२–०र्थमुप० D. १३–चैष द्र० C.

१४–'सर्वस्य' नास्ति B. C. १५–०रण्य B. C.

१६–दावदि C.

१७–०क्षादा C.

१८–इदं वाक्यं नास्ति B. C.

१९–प्राप्यमी० B. C.

२०–अस्य वाक्यस्य स्थाने B. पुस्तके 'हेम–हितं हि' इति, C. पुस्तके 'हेम–हितं हि तत्' इति च पाठो वर्तते ।

२१–चङते C.

२२–रुग्मं C.

अन्तरिक्षनामान्युत्तराणि षोडशेत्यादि । खं[1] नभ इत्यादीनि चापठितानि । पठितानि अम्बरबर्हिरा[2]दीनि च वस्त्रदर्भादिषु । अन्तरा मध्ये[3] सर्वभूतानां क्षान्तं शान्तं स्थितं[4] निष्क्रियं वा[5] शान्तमव्यूहम्[6], निष्कम्भस्थानात्मकत्वात् । अन्तरा इमे[7] रोदस्यौ द्यावा-पृथिव्यौ क्षियतीति वा । अन्तरा इमे[8] क्षोण्याविति वा क्षान्तम्[9] । एवमनेकविकल्पमुत्तर[10]-पदम्, अन्तराशब्दात् पूर्वपदम् । शरीरेष्वित्यादि-अन्तराशब्दात् पूर्वपदम्[11], अक्षयशब्दा[12]-दुत्तरपदमिति वि[13]शेषः । विनाशिष्वप्यविनाशीत्यर्थः ।

तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण सन्दिह्यते[14] ।

तत्रेत्यादि निगदव्याख्यातम् । अम्बरादिषु अम्बुमद्भवतीत्यादिष्वपि[15] तुल्यश्रुति-त्वादविशिष्टे सन्देहपदत्वे किञ्चित्प्रदर्शनीयमिति समुद्रशब्दः प्रदर्शितः–समुद्द्रवन्त्यस्मादाप इत्यादि । संहता ऊर्ध्वं द्रवन्त्यस्मादापोऽन्तरिक्षात्पार्थिवाच्च, रश्मिभिराकृष्यमाणा[16] वायु-र्नाप्रेर्यमाणा इत्युभयत्र तुल्यमपादानसाधनत्वम् । संहता वाभिद्रवन्त्येनं[17] नदनदीभावेन पार्थिवं भौमरस[18]लक्षणा वायुना प्रेर्यमाणा आदित्यमण्डलाद्वा [19]वर्षकाले रश्मिभिः पर्या-[20]वर्त्यमाना अन्तरिक्षलक्षणमापः । अत्रापि कर्मसाधनत्वमविशिष्टम्[21] । संमोदन्तेऽस्मिन् जल-चराणि भूतानि, इतरत्रान्तरिक्षचराणि । अथवा[22] समुदको भवति । [23]संमेकीभावे, उदकादु-

१–वं B.
२–बर्हिकादी० C. अम्बरं वियत् व्योम बर्हि० D.
३–'मध्ये' इति नास्ति D.
४–स्थितिं B. नास्त्येव D. ५–भ D.
६–०मप्यूहम् B. C.
७–अन्तरालमेकोदस्य न (दस्यौ C.) क्षियतीति वा B. C.
८–अन्तरालमेक्षो० B. C. ९–क्षन्तम् C.
१०–०कल्पादुत्त० B. ०कल्पउत्त० D.
११–'पदम्' इति त्रुटितम् D.
१२–अक्षरश० D. १३–'वि' इति त्रुटितम् D.
१४–इदं मूलवाक्यं नास्ति C. B.
१५–'अम्बुमद्भवतीत्यादिषु' नास्ति B. C. 'अपि'-शब्दस्य 'पि' इत्यपि त्रुटितम् B.
१६–०माण वा० D.
१७–संहताभिद्रव्यं तेन B. संहतापि द्रवन्त्येन C.
१८–भौमल० B. तामरसल० D
१९–वर्षाका० B.
२०–०वर्त्तमा० D.
२१–०मवशि० B. C.
२२–'अथवा' इति नास्ति D. । 'अथवा' इत्यस्मात् पूर्वं केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते । स चेत्थम्–"दुर्गवृत्तौ–'समुद्रवन्त्यस्मादापो वीचीतरङ्गसीकरादिभावेन । समभिद्रवन्त्येनमापः, सर्वा एव ह्यापो निम्नानुसारित्वात् समुद्रमेवाभिमुख्येन द्रवन्ति, स हि निम्नो भवति ।' एवं दुर्गः" ।
२३–समेतिभावे B.

च्छन्दो रो मत्वर्थे। एकीभूतमुदकमस्मिन् विद्यत इति समुद्रः । वर्षास्वन्तरिक्षेऽपि तुल्यम् । समुन्नत्तीति[1] वा, एको लीलया भुवं क्लेदयति, अपरो[2] वर्षेणेति ।

तयोर्विभागो यस्मिन्मन्त्रे तत्र सुखप्रतिपत्त्यर्थ[3]मितिहासमाचक्षत आचार्याः। निदानभूतम्-इति ह एवमासीत्-यः कथ्यते स इतिहासः । देवापिश्चेत्यादि । आर्ष्टिषेण इति भविष्यद्वृत्त्या व्यपदेशो[4] भूतवृत्त्या च । देवापिः शन्तनुश्च कौरव्यौ[5] कुरुवंशप्रभवौ भीमसेनपुत्रौ भ्रातरौ बभूवतुः[6] । स शन्तनुः कनीयान् ज्यायसि[7] देवापौ सति आत्मानं राज्ये[8] प्रजाभिरभिषेचितवान् । देवापिस्त्वग्दोषा[9]पदेशेन राज्याध्य[10]वरोपितो वैराग्यात्तपः प्रतिपेदे । स[11] च किल च्यवननामापरनाम्नि[12] ऋष्टिषेणे ब्रह्मचर्यमुवास । स गुर्वनुग्रहात्तेनैव शरीरेण वीतह[13]व्यवद् विश्वामित्रवच्च[14] ब्राह्मणो बभूव । ततोऽस्मिन्नन्तरे[15] शन्तनो राज्ये द्वादशवर्षाणि देवो न ववर्ष[16] । तमूचुः[17] मौद्गल्य[18]प्रमुखा ब्राह्मणाः । किमूचुः[19] ? अधर्मस्त्वयाचरितः, ज्येष्ठं भ्रातरमन्तरित्य[20] अतिक्रम्या[21]भिषेचितम्[22], अभिषेचनमात्मनः कारितमित्यर्थः । तस्मात् ते देवो न वर्षतीति[23] । स शन्तनुरेवमुक्तो देवापिं शिशिक्ष[24] । शिक्षतिर्दानकर्मा । तेन चात्र याच्ञापूर्वकत्वाद्दा[25]नस्य

१–समुनत्ती B. समुनत्तिति C.

२–अरो C.

३–'सुखप्रतिपत्त्यर्थं' इति नास्ति D. अत्र B. C. पुस्तकयोस्त्वित्थं पाठो वर्त्तते–'तत्र सुख (खं C.) प्रतिपत्यर्थमिति भासीदितीति पत्यर्थमिति गासीदितीतिहासमिति पुराणविद आचक्षते–देवापिश्चे (विश्वे C.) इत्यादि' इति ।

४–प्यपदे॰ C. पदे॰ D.

५–'कौरव्यौ' इति नास्ति B. C.

६–॰वता C.

७–॰सी देवावौ C.

८–राज्यप्रजा॰ B. C.

९–त्वदोषा॰ B. त्वङोषा॰ C.

१०–राज्याद्यद्रयध्य॰ B. C.

११–हि स च B. 'स च' इति नाति D.

१२–'च्यवनापरनाम्नि इति पाठ उचितः । नाम्न्यार्ष्टि॰ B. नाम्न्याष्टि॰ C.

१३–'ह' इति त्रुटितम् C.

१४–॰मित्रममित्र व॰ B. ॰मित्रमित्र व॰ C.

१५–॰न्तरेण B.

१६–न वर्ष D.

१७–ते ऊचुः B.

१८–मौल्य D.

१९–किमुचुः D.

२०–भ्रातरित्य D.

२१–अदि क्र॰ C.

२२–॰म्यात्रि ( भि C. ) हेचत B. C.

२३–देवा न वर्षन्तीति D. 'इति' नास्ति C.

२४–देवार्वि शिक्ष C.

२५–याझा पू॰ C.

स्वकारणभूता[1] याच्ञा लक्ष्यते[2] सामर्थ्यात्[3]। तेनैतदुक्तं[4] भवति-शिशिक्ष याचितवान्। किम्? प्रकरणसामर्थ्याद् वर्षहेतुकं प्रजानां शर्म राज्योपादानेन, भगवन्! एतत्ते[5] राज्यं प्रशाधीति। एवंवादिनं[6] वीक्ष्यापन्नं लब्धोत्तमवर्णः स्वजात्यनुरूपमुवाच देवापिस्तम्-किं[7] नो राज्येन। पुरोहित इत्यादि[8]। शान्तिकपौष्टिकाद्यर्थं वार्षिके च कर्मणि आर्त्विज्यं तव[9] करोमीति। तस्य देवापेरेतद्[10] वर्षकामस्य सूक्तम्। तत्रेयमन्तरिक्षपार्थिवसमुद्रप्रविभागप्रदर्शनाय ऋग्[11]भवति।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
दशमः खण्डः[12]। ]

---

१–'णभूता' इति त्रुटितम् D.

२–लभ्यते D.

३–सामर्त्यात् C.

४–तेवर्णं तदु० B. C.

५–एतन्ते C.

६–'एवं' नास्ति D.

७–क्णो B.

८–०त्याभि C.

९–तप C.

१०–०वापरेतिद् C.

११–'ऋग्' इति त्रुटितम् B. C.

१२–हस्तलिखितपुस्तकेष्वत्र खण्डस्य समाप्तिनिर्देशो नास्ति।

# [ अथ एकादशः खण्डः[1] । ]

आर्ष्टिषेणो होत्रमृषिर्निषीदन्[2] देवापिर्देवसुमतिं चिकित्वान् ।
स उत्तरस्मादधरं[3][4] समुद्रमपो दिव्या असृजद्वर्ष्या अभि[5] ॥

आर्ष्टिषेणः-ऋष्टिसेनस्य पुत्र ऋषिः[6]। होत्रम्-कर्तुमिति शेषः। चतुर्थ्यर्थे वा द्वितीया, होत्राय निषीदन्। देवापिः[7]-दास्यामो[8]ऽस्मै वृष्टिमित्येतां शोभनां मतिं[9] चिकित्वान् जानन्। स इति श्रुतेः यच्छब्दोऽध्याहर्तव्यः[10]। योऽस्त तेऽपि[11] कल्प आसीदिति शेषः। स[12] उत्तरस्मादन्तरिक्षलक्षणात्समुद्रात्। कुत एतत्? अधरं समुद्रमित्यधरशब्दस्य[13] समुद्रविशेषणत्वेनोपादानसामर्थ्यात् तदुत्तरोपि[14] द्वितीयसमुद्र[15] एवाभिप्रेत इति गम्यते। तेनाधरं पार्थिवं समुद्रमभि प्रतीत्यर्थः[16]। अपो दिव्याः-दिवि भवाः। असृजद्[17]-विसृष्टवान् वृष्टिप्रदस्य[18] देवस्य स्तुतिद्वारेण स एव पातितवानित्यर्थः। वर्ष्या-वर्षप्रभवा[19] वर्षलक्षणा इत्यर्थः। आर्ष्टिषेणः[20]-ऋष्टिषेणश्च्यवन इहाभिप्रेतो यथा तथा पुरस्तादुपवर्णितम्[21], इतिहासस्मृते प्रामाण्यात्। अतोऽन्तेवासी पुत्रोऽत्राभिप्रेतः[22]। ऋष्टिप्रधाना[23] सेना यस्य, इषिता वा सेना शत्रून् प्रति प्रेषिता नित्यं सेना यस्य, कान्ता[24] वा इष्टा सेना यस्य। तस्य[25] च राजपुत्री सुकन्या भार्या, तत्सम्बन्धादुपपन्नः सेनया[26] सम्बन्धः। अथवा ऋष्टिः[27] रेषणा हिंसा च कामादीनाम्, अन्तश्चरश्शत्रूणां सेना समुदायः, स चेन्द्रियाणाम्।

---

१—हस्तलिखितपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो नास्ति।

२—निषेदन् C.

३—उर० C.

४—०दध्वरं C.

५—[ ऋ० १०।९८।५ ] 'आर्ष्टिषेणो० अभि' इत्येव प्रतीकम् D.

६—'ऋषिः' इति नास्ति B. ७—देवावि C.

८—दामो B. C.

९—०नामतिश्चिकित्वात् C. १०—०दाध्याहारः D.

११—'अपि' इति नास्ति D.

१२—'स' इति नास्ति D.

१३—०धरस्य D.

१४—'तद्' इति नास्ति D.

१५—'द्वितीय' इति नास्ति B. C.

१६—'प्रति' इति नास्ति D.

१७—०जन् C. ०जत्सृष्ट० D. १८—सृष्टि० D.

१९—वृष्टि० D. २०—आष्टि० C.

२१—०वर्णीत० C.

२२—'अत्र' इति नास्ति B. C.

२३—०'अधा' इत्येव पाठः B. C,

२४—कान्तौ इवा B. अत्र कान्तया इति कान्तायै इति वा युक्तः पाठो भवेत्।

२५—तस्याश्च B. C. तस्य-च्यवनस्येत्यर्थः।

२६—सेनायाः D.

२७—इष्टिः B. इषिः C. ऋषिः D.

एतदुक्तं भवति-विषयाभिलाषवैमुख्यात् कामादिचित्तमलरेषण[1]प्रधाना सेना इन्द्रियग्रामो यस्य, दूषिता[2] वा प्रेषिता वा[3] गता पराङ्मुखीभूता[4] प्रत्याहारेण विषयेभ्य इन्द्रियसेना यस्य ।

सम्प्रति[5] प्रसिद्धं सेनाशब्दं निराह । सेना सह इनेनेश्वरेण । तेन हि विना गण[6] उच्यते । समानं[7] वा साधारणं विजयाख्यं प्रयोजनमुद्दिश्य गतिर्यस्याः[8] । समानशब्दात्[9] पूर्वपदम्, गतेरुत्तरपद[10]मित्यर्थः ।

पुत्रः पुरु त्रायत इत्याविभाक्तिको[11] निर्देशः[12] । पुरुणो दृष्टादानुश्रविकाच्च[13] दुःखात् त्रायत इति पुरुषः[14] सन् द्विवर्णलोपेन पुत्रः । 'नापुत्रस्य लोकोऽस्ति'[15] इति श्रुतेः । 'अयं परश्चेति तस्मादनुशिष्टं पुत्रमालोक्यमाहुः[16]'[17] इति च[18] । निपरणाद्वा । निपरणं पिण्डपितृयज्ञश्राद्धादौ[19] पिण्डदानम्, तेन त्रायते शास्त्रसामर्थ्यात् पितॄन्, अकरणप्रत्यवायपरिहारेण[20] चात्मानम् । पृणातेः[21] पूर्वपदम्, त्रायतेरेवोत्तरपदम्[22] । पुन्नरकं[23] ततस्त्रायत इति । तथा च स्मृतिः—

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः[24] ।

पुत्र इति पुच्छब्दात् पूर्वपदमिति भेदः ।

ऋषिर्दर्शनात्, देवापिरस्यैव सूक्तस्य । सामान्येनैतान्निर्वचनम्[25] । स्तोमांस्त्रिवृदादीन्[26] ददर्श इति विशिष्टमन्त्रदर्शनादेवेत्यौपमन्यवो मन्यते । ब्राह्मणमप्यस्मिन्नर्थे सामान्येन दर्शयति-तद्यदेनान्[27] मधुच्छन्दःप्रभृतीन्[28] तपस्यमानान्[29], तस्यैव तपसोऽनुभावात्, ब्रह्म ऋग्यजुः[30]-

१—०लक्षण B. C. २—इषितता वा C.
३—'वा' इति नास्ति B. C.
४—भूताः B. C. ५—'प्रति' इति त्रुटितम् D.
६—हण C. ७—सामान C.
८—० र्यः स्यात् B. ९—शब्दस्य D.
१०—एतेरु० B. C. ११—इत्यर्थः । विभ० B.
१२—०क्तिका नि० B. ०क्तिक नि० D.
१३—०ष्टात्तु प्रवि० D.
१४—पुरुणः सन् विव० B. पुरुणस्त्रः सन् विव० C.
१५—[ ऐ. ब्रा० ३३ । १ ]
१६—पुत्रं लो० B. C.
१७—[ अनुपलब्धमूलमिदं वचनम् ]
१८—वा D. चान्निवरणा० C.
१९—श्रुत्यादौ D. २०—०वायेन परि० D.
२१—वृणातेः C.
२२—०ते तदेवो० B. ०ते तरेवो० C.
२३—पुनर्नर० B.
२४—[ मनु० ९।१३८ ]
२५—०न्येतन्नैनं नि० C.
२६—'दीन्' इति त्रुटितम् B.
२७—०देतन् D. ०देना C.
२८—०भृतयः D.
२९—नचस्यमात C. ०मानाः C.
३०—'ऋगादि' इत्येव B. C.

सामाख्यं, स्वयंभु[1] अकृतकं नित्यं पूर्वाधीतमि[2]वाभ्यानर्षत्[3], 'ऋ गतौ'[4] इत्यस्य लिटि[5] रूपम्, आगतमाविर्भूतमित्यर्थः । तदृषीणामृषित्वमिति विज्ञायत इति[6] ।

देवापिः-देवानामाप्त्या[7] व्याप्त्या । केन ? स्तुत्या च प्रदानेन च हविषाम्, देवानां कल्याणीं मतिं कर्तुं[8] जानन्, यथा ते तुष्यन्ति[9] तथा जानानः[10] ।

उत्तरः-उद्गततरः, हन्तिर्गत्यर्थः, उद्गततर इत्यर्थः । गतिरात्मसर्वगतत्ववत्[11] । अधरोऽधोरः, रोमत्वर्थे, अधोमानित्यर्थः । अध ऋच्छतीति[12] वार्तेरधरः । अधः[13] पुनर्न धावतीति नञा[14] ऊर्ध्वगतिः[15] प्रतिषिद्धा । तस्यैवैकस्या[16]र्थस्य उत्तरा ऋक् भूयसे बहुतराय निर्वचनाय, निर्विविच्य वचनाय[17] । भूयस्त्वञ्च[18] पौरोहित्यार्त्विज्याभ्युपगमलिङ्गभूतवृष्ट्यर्थवाग्[19]लम्भादिना[20] ।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
एकादशः खण्डः[21] । ]

---

१—०भू C. २—०धीनमि० B. C.
३—०नर्ष C. ०नर्षत् तान् D.
४—[धा० १।९८३] 'इष गतौ' [धा० ४।१९] B.C.
५—लटि B.
६—[तै० आ० २।९]
७—०प्ता व्याप्ता C. D. ०प्त्या प्राख्यात्या B. अत्र कदाचित् ०'प्त्या प्राप्त्या' इति पाठः स्यात् ।
८—कुर्वन् D.
९—ऽनु ( तिष्ठन्ति ) B. नुष्ठन्ति C.
१०—जानन् D.
११—०गतित्व० B. C.
१२—ध्ना (रा ?) तीति B. ऋच्छन्तीति C.
१३—अधम C.
१४—नन्द्रा C.
१५- ऊर्ध्वे B.
१६—०वैतस्या० D.
१७—निर्विविच्य वचनाय' इति नास्ति B. C.
१८—'च' इति नास्ति D.
१९—०र्थभूतवा० B.
२०—०लाहादि० B. C.
२१—आदर्शपुस्तकेष्वत्र खण्डसमाप्ति र्न निर्दिष्टा ।

# [ अथ द्वादशः खण्डः । ][1]

यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्[2] ।
देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्[3] ॥

यत् यदा[4] यस्माद्वा देवापिः शन्तनवे[5] शन्तन्वर्थं पुरोहितः सन् होत्राय वृतः वार्षिके[6] कर्मणि, कृपयन् कृपायमाणः । अनावृष्टिहतं[7] लोकमनुकम्पमानः । अदीधेत्-अन्वध्यायत् ध्यातवान् । किम् ? सामर्थ्याद् वृष्टिम्[8], मनोरथैः प्रार्थितवानित्यर्थः । पुरस्ताद्यच्छब्दश्रुतेस्तच्छब्दो[9]ऽध्याहार्यः[10] । तदा[11] तस्माद्वा[12], देवश्रुतं-देवैः[13] श्रुतम्, वृष्टिवनिम् 'वनु याचने'[14], चतुर्थ्यर्थे चोभयत्र द्वितीया, देवैः श्रुताय वृष्टिवनये वृष्टियाचिने । रराणः-रातेः । 'व्यत्ययो बहुलम्'[15] इति शपः श्लुः, ददद् वृष्टिमित्यर्थः । [16]तस्मिन्नेव कर्मणि ब्रह्मत्वेनावस्थितो बृहस्पतिर्वाचमस्मा अयच्छत् दत्तवान्[17], यया देवान् स्तुत्वाऽसौ वृष्टिं लब्धवान् । बृहस्पतिर्ब्रह्मासीदिति[18] भाष्यानुरोधादेवं व्याख्यायते । मन्त्राक्षरणां तु-बृहस्पतिर्मध्यमस्थाने[19] स्तनयित्नुलक्षणां[20] वाचम्, तयापि सम्बन्धाद्[21] वर्षं लब्धवानित्यर्थः ।

शन्तनुः-कस्मात् ? शं सुखं हे तनो ! दुर्बल ! तवास्तु-इत्येवमसौ कारुणिकत्वादाशास्ते । शमस्मै तन्वै शरीराय वास्तु-इति वा, इति रोगिणं[22] कश्चिद्[23] दृष्ट्वा एवमाह, स च तद्द्वारोगः सम्पद्यते । पुरोहितः-पुर एनं[24] शान्त्यर्थं राजानो दधति कुर्वत इत्यर्थः । शान्तिकपौष्टिकाभिचारिकेषु कर्मसु पुर एनं दधति राजानः पुरस्कुर्वन्तीत्यर्थः[25] । तथा च मन्त्रः-'स इत्क्षेति सुधित ओकसि स्वे'[26] इति । स निगदव्याख्यातो मन्त्रः । बृहदुप[27]-

---

१-आदर्शपुस्तकेष्वत्र खण्डप्रारम्भो नैव निर्दिष्टः ।
२-०न गीधेत् C.
३-[ ऋ० १०।९८।७ ] अयश्वत् C. 'यद्देवापिः अयच्छत्' इत्येव प्रतीकम् D.
४-अथ D. ५-'शन्तनवे' इति नास्ति D.
६-वार्षे B. C. ७-गतं B. C.
८-वृष्टि B. C.
९-'शब्द' इति नास्ति D.
१०-०हर्तव्यः B.
११-कदा C. तद B.
१२-स्माद्वात् B. 'वा' इति नास्ति D.
१३-देवे श्रु० C. १४-[ धा० ८।८ ]
१५-[ पा० ३।१।८५ ] १६-अस्मि० B. C.
१७-'दत्तवान्' इति नास्ति D. १८-सन C.
१९-०स्थान B. C. २०-सनयि० C.
२१-०न्धान् C. २२-रोहिणं B. C.
२३-कश्चिद् B. C.
२४-एतं B. C.
२५-शान्तिकेत्यादिवाक्यं नास्ति B. C.
२६-[ ऋ० ४।५०।८ ] २७-०दुपाख्या० B.

व्याख्यातम् । बृहदिति महतो नामधेयमिति[1] ।

नित्यपक्षे ऋग्द्वयस्यान्यद[2]र्थयोजना-आर्ष्टिषेणः-ऋष्टिषेणो मध्यमं[3] तत्र भवत्वाच्चार्ष्टिषेणो[4] वैद्युतः, तस्य पार्थिवात्मावास्थितस्य होतृत्वेन[5] देवापित्वम् । शिष्टो मन्त्रः पूर्ववद्योज्यः ।

एकपद[6]निरुक्तम् । ऋष्टयः, शक्तयः, तत्प्रधाना सेना मरुताम्, यस्या अंसेषु[7] वा ऋष्टयः । 'विद्युद्रथा मरुत ऋष्टिमन्तः'[8] इत्यौचित्यान्मरुतां विशेषणमृष्टयः। ते च[9] मध्यमानुचराः । इषिता मरुद्रूपा सेना नित्यं येन स ऋष्टिषेणः स एव ऋषिः, स एव विद्योतमानः[10] सर्वेण दृश्यते । सर्वान्[11] वा दर्शयति[12] । लोकपालकत्वाद्वा[13] कर्मणां द्रष्टा[14] समानमन्यत् ।

यद्देवापिः[15] । मध्यमप्रभवत्वाद्[16]देवापिर्विद्युत्[17], शन्तनु[18]रुदकं वृष्टि[19]लक्षणम्, यत्[20] यदा देवापिर्वै[21]द्युतः शन्तनवे वृष्टिलक्षण[22]स्योदकस्यार्थाय, पुरोहितः-पूर्वं हि विद्योतते पश्चादुदकम् । होत्राय वृत इत्यादि, तस्यैव[23] पार्थिवात्मनः, पूर्ववद्योज्यम् । तदा देवश्रुतं[24] वृष्टिवनिम्, उभे अप्येते[25] द्वितीयैकवचने प्रथमैकवचनस्य स्थाने द्रष्टव्ये । मध्यमस्यैते विशेषणे न[26] देवापेः[27] । देवश्चासौ श्रुतश्च देवश्रुतः, वृष्टेश्च[28] संभक्ता वृष्टिवनिः, मध्यमो बृहस्पतिः, ददद्वाचं[29] गर्जितलक्षणामस्मै अयच्छत् ।

अथैकपदनिरुक्तम्[30] । शन्तनुः शं तनोऽस्त्विवति । तन्यत इति तनुः[31], कृत्स्नं जगत् ।

---

१–[ निरु० १।७ ] 'ति' इति त्रुटितम् D.
२–०यन्यास्यद० C. त्यपेक्षे यस्या अथार्थ यो० D.
३–मध्यं B. C. ४–०ष्टिषे० D. ०र्ष्टिषेणा C.
५–हेतुत्वेन D. ६–०पाद० B.
७–यस्यांसेषु ऋ० B. ०षु व ऋ० D.
८–[ ऋ० ३।५४।१३ ] ९–न B. C.
१०–विद्यमानः B. C. मानाः B.
११–दर्पाद्वा B. दर्वाद्वा C.
१२–'य' इति त्रुटितम् D.
१३–०पालाद्वा B. C. 'वा' नास्ति D.
१४–०णा द्रष्टय D. १५–यदेवापि C.
१६–प्रभाव C.
१७–०वापीत् B. वापीयत् C.० वापिव D.
१८–मन्ततु D.
१९–'०दकं वृष्टि०' इति त्रुटितम् B.
२०–यद् D. २१–०पि वै० C. D.
२२–०णमस्यो० B.
२३–तस्यैवात्मनः D.
२४–०श्रुतिं B.
२५–अथैते D. उभ अप्ये B.
२६–'न' इति नास्ति B.
२७–०वेः C.
२८–'च' नास्ति D.
२९–तद्वाचं B. दद्वाचं C.
३०–'०रुक्तम्' इति त्रुटितम् B.
३१–तर्कः B. C.

तस्य सम्बोधनं हे तनो ! शं तुभ्यमस्त्विति ल्हादकत्वादेतत्[1][2] । स्तनयित्नुर्व्याजेनार्थं वदति वा[3]-शमस्मै तन्वा इति । तनुशब्दोऽन्तर्वर्तितवीप्सार्थः[4] अस्मै शरीराय[5] शरीरायेत्यर्थः । पुरोहितः पूर्वमेनं दधति वैद्युतमरुदादयः[6] । वृष्टियाचिनमिति याच्ञया[7] तत्पूर्वकत्वाद्दानं लक्ष्यत इति भाष्यकाराभिप्रायः । तथा च मन्त्रो व्याख्यातः । बृहस्पतिर्ब्रह्माणं[8] करिष्यन्नेवंव्यापार[9] आसीत् ।

अथवा कश्चिद्[10] राजा जायमानो[11]ऽनावृष्ट्या[12] क्षतसेन ऋष्टिषेण[13] उच्यते[14] । तस्य[15] स्वभूत ऋत्विगार्ष्टिषेणः । कारीर्यादौ[16] तु होत्रं कर्तुमृषिर्निषीदन् इत्यादि समानं पूर्वेण ।

यद्देवापिः । यदा देवानामाप्त ऋत्विक्, शन्तनवे-शं सर्वशरीरिणामस्त्वित्येवमर्थं वृष्टिप्रसाधने कर्मणि प्रवृत्तस्य च[17] यजमानस्यार्थाय[18] विद्वत्तयाग्रे[19] वृतो होत्राय वृतः[20] तदा देवश्रुतायेत्यादि[21] समानं पूर्वेण ।

एवमाख्यान[22]स्वरूपाणां मन्त्राणां[23] यजमाने नित्येषु च पदार्थेषु योजना कर्तव्या । एष शास्त्रे सिद्धान्तः । तथा च वक्ष्यति-'तत्को वृत्रः ? मेघ इति नैरुक्ताः'[24] इत्यादि । 'मध्यमञ्च माध्यमिकाञ्च वाचम्' इति[25] नैरुक्ताः । 'रात्रिरादित्यस्योदये[26]ऽन्तर्धीयत' इति । औपचारिको[27] मन्त्रेष्वाख्यानसमयः । परमार्थेन तु नित्यपक्ष इति सिद्धम् ।

इति स्कन्दस्वामिकृते[28] निरुक्तभाष्ये
सप्तमस्या-[ द्वितीयस्या-[29] ] ध्यायस्य
तृतीयः पादः ।
[ द्वादशश्च खण्डः समाप्तः[29] ]

---

१–ल्हादि॰ B.C. ल्हाव॰ D. २–नयि अ B. पतत् C.
३–व B. C. ४–॰ब्दो वर्त्तित विस्पष्टार्थः D.
५–'शरीराय' नास्ति D.
६–॰तं D. 'मरुदादयः' त्रुटितम् B.
७–याज्ञया C. याछया D.
८–॰तिब्रह्मान्नं C. ॰तिब्रह्मान्नकां D. ९–॰ष्यान्नमेवं B.C.
१०–क्वचि॰ D. ११–यजमा॰ D.
१२–'वृष्ट्या' इति द्विर्लिखितम् D. १३–ऋष्टितसेन D.
१४–'उच्य' इति त्रुटितम् B. १५–यस्य D.
१६–कारियादौ D. १७–'च' नास्ति D.
१८–॰स्यार्थं B. अग्रे त्रुटितम् । ॰स्याचाय D.
१९–॰तूया॰ B. 'विद्व' इति त्रुटितम् ।
२०–कुतः B. कृतः C.
२१–तदेव श्रुत्यादि B. तदेव श्रुतायेत्यादि C.
२२–॰ ख्यात॰ D. २३–'मन्त्रणां' नास्ति D.
२४–'क्ता इत्या' त्रुटितम् B. [ निरु॰ २।१६ ]
२५–॰ति ये नै॰ B. C.
२६–रात्र त्रि॰ C. [cf. निरु॰ २।१९] २७–अप चा॰ D.
२८–॰कृतौ सप्त॰ D. इति सप्तमस्य तृतीयः C.
२९–आदर्शपुस्तकेष्वयं कोष्ठकान्तर्गतः पाठो नास्ति ।

# [[1] अथ चतुर्थः पादः ।

## त्रयोदशः खण्डः ]

लोकक्रमादाह[2]–साधारणानीत्यादि[3] । एकोऽनेकस्मिन्नविरुद्ध[4]स्तत्क्रियः[5] साधारण उच्यते[6] । तच्चैकत्वमसति व्यभिचारे तत्त्वेन प्रत्यभिज्ञानात्[7] । तच्च प्रत्यभिज्ञानं भिन्नार्थेषु संविज्ञात[8]-पदेषु तुल्यश्रुतिषु तुल्यनिमित्तेषु च शब्देषु[9] । गोसमुद्रादिष्वत्रापि[10]–'अथापि पशुनामेह[11] भवत्येतस्मादेव[12]' 'समुद्रवन्त्यस्मादापः[13]' अश्नोतेरक्षः[14], इत्येवं तुल्यनिमित्तत्वम्[15] । अत एव-मादयः[16] साधारणशब्दाः । यस्तु क्रियासाम्येऽपि क्वचिदर्थे रूढोऽन्यत्र[17] योगात् प्रवर्तते, नासौ साधारणशब्दः । किन्तर्हि ? प्रतीतिविप्रकर्षात्तत्र गौणमुख्यव्यपदेशः[18] । यथा-अग्नि-र्माणवकः, सिंहो देवदत्तः, अग्निमीळे पुरोहितमिति[19] च, श्येनो वज्रं[20] इति च[21] । पुरो-हितर्त्विक्शब्दावग्नौ[22], श्येनादयोऽपि गुणात्[23] शत्रुबाधनसाधनत्वसामान्यादभिचारयोगेषु[24] ।

यत्रापि निमित्तभेदः । यथा निर्ऋतिशब्दस्य देवतायां पृथिव्याञ्च, ऋच्छते[25]-र्निरमाणाच्च[26] । यथा योनिशब्दस्य[27] वेद्यन्तरिक्षादौ[28] स्थानविशेषे[29] स्त्रीन्द्रिये च, वेतेर्यौतेश्च निर्वचनात् । तत्रावयवभूतधात्वर्थभेदानुविधानेन[30] शब्दस्याभिधानलक्षणव्यापारभेदाद्[31] भेद[32] एव न[33] साधारणशब्दत्वम्[34], पूर्वोत्तरयोरुत्पादविनाशदर्शनात् । प्रदीपज्वालावद्रूप-

---

१–आदर्शपुस्तकेष्वयं कोष्ठकान्तर्गतः पाठो नास्ति ।
२–०दित्याह D. ३–'नीत्यादि' इति त्रुटितम् D.
४–'कस्मिन्नवि० इति त्रुटितम् B. ०न्नवरु० C.
५–स्वरिति यः B. स्वाक्रियः C. ६–शब्दाः C.
७–अस्य वाक्यस्य स्थाने C. पुस्तके–'यस्तु क्रिया-साम्येपि क्वाचिदर्थे रूढोऽन्यनात्' इति पाठो वर्तते । वस्तुतोऽयमग्रिमः पाठोऽत्र भ्रमादागतः ।
८–संज्ञवित C. 'संज्ञ' इत्येव B. अग्रे त्रुटितम् ।
९–'शब्देषु' इति नास्ति B. १०–०त्रवि B. C.
११–०शूनामेव B. ०'नाम' इत्येव D.
१२–[ निरु० २।५ ]
१३–[ निरु० २।१० ] ०'स्माद' इत्येव B. अग्रे 'पः,' अ इति त्रुटितम् ।
१४–[cf. निरु० ५।३] श्नोतो B. भ्नोते C. रहः D.
१५–०मित्तम् D. १६–०मादा० C.
१७–०रूढ्यान्य०B. ०रूढ्योन्य०C. १८–गौणादिमु०D.
१९–०हितं यज्ञस्य देवमृत्विजमिति च D. [ऋ० १।१।१]
२०–'ज्र'इति त्रुटितम् D. २१–'च'इति नास्ति B.D.
२२–०ब्दादग्नौ B. C. २३–गुणाः B.
२४–०भिधारेषु यो० D.
२५–०तेग्नि० B. ०तेधि० C. २६–'च' नास्ति B.C.
२७–०ब्दस्तु B. C. २८–'वेद्यन्त' इति त्रुटितम् B.
२९–०निवेशस्त्वीन्द्रिये चेति यौ० D.
३०–०भेदेनानु० B. C. ३१–०धाने ल० B. C.
३२–०दान् C.
३३–'न' इति त्रुटितं भाति B. C. ३४–०त्वात् B.

सामान्यात् तत्त्वेन यः प्रत्यभिज्ञाप्रत्ययोऽस्मिन्[1] विषये ऽसौ भ्रान्तः[2], शब्दभेदात्, हेतोरुक्तत्वात्[3] ।

तदेतत् केचिदननुमन्यमाना[4] आहुः-विषम उपन्यासः । युक्तं[5] यत् प्रदीपादिषु[6] प्रत्यक्षेणैव बलीयसा प्रमाणेन[7] प्रत्यभिज्ञाप्रत्ययस्य बाधनम् । इह त्ववयवभूतधात्वर्थभेदा-[8]नुविधानेन काल्पनिको भेदः शब्दस्य । प्रत्युत प्रत्यक्षेण तत्त्वप्रत्ययेन बाध्यते । एतदुक्तं भवति-शब्दविषयेऽनेकार्थप्रतीत्यन्यथाऽनुपपत्त्या[9] एकस्यानेकार्थाभिधानसामर्थ्यातिशयः[10] कल्प्यते । स च न यौगपद्येन । किन्तर्हि ? प्रयोक्त्रभिप्रायेण[11] योऽर्थोऽभिधित्सितस्तदानु-गुण्येनैवावयवार्थकल्पनम् । ततश्च भिन्ननिमित्तोऽपि साधारणशब्द[12] एवेति सिद्धान्तः[13] । अर्थप्रकरणादिना च[14] सर्वसाधारणशब्देषु विशेषाध्यवसाय इत्यलमतिप्रसङ्गेन[15] ।

पशुवर्णविशेषाद्यन्यार्थसाधारण्यप्रसङ्गनिवृत्त्यर्थं[16][17] स्वरादिनामाह[18]-दिवश्चादित्यस्य च, नामानीति शेषः । यानि त्वस्य आदित्यस्य[19] प्राधान्येन मन्त्रेषु सूक्तहविर्भाञ्जि सवितृसूर्यादीनि तान्युपरिष्टात्[20] दैवते[21] काण्डे व्याख्यास्यामः । स्वरादीनि तु षडपि उभयोर्हविःसूक्तभाञ्जि[22] भवन्ति, अतो नैघण्टुके[23] प्रकरणे इह व्याख्यास्यन्ते[24] ।

आदित्यः कस्मात् ? आदत्ते रसान् भुवो[25] रश्मिभिः । आदत्ते[26] भासम्, तदुदयेऽन्तर्धानादा-दानव्यपदेशः । ज्योतिषां चन्द्रनक्षत्रग्रहादीनाम् । तथा च ब्राह्मणम् । 'उद्यन्तं वा आदित्यम-ग्निरनुसमारोहति[27] तस्माद्धूम एवाग्नेर्दिवा[28] ददृशे[29]' इति । उभयत्र[30] ददातेरादित्यः । आदीप्तो

---

१–एव कस्मिन् B. C. २–भ्रान्तिः D.

३–धातो० B. C.

४–०दनुमान्य० D. ५–उक्तं B. C.

६–प्रतिपा० C. ७–'न' इति त्रुटितम् C.

८–'धात्व' इति त्रुटितम् B.

९–०त्यसथा अप० C. १०–०काद्धाभि० C.

११–०क्त......यणार्थे B. ०ये णोऽर्थो० C. ०ण योन्यो भि० D.

१२–०णः श० B. ०णो श० C.

१३–सिद्धम् B. सिद्धः C. १४–'च' नास्ति D.

१५–०त्ययम० B. C. १६–अप इ वण् D.

१७–०रणप्रसंगेन नि० D. रण्या B. अग्रे 'प्रसंग नि' इति त्रुटितम् ।

१८–०रादीना० D.

१९–'आदित्यस्' इति द्विर्लिखितम् C. ०स्या प्रा० B.

२०–तोंन्यु० C. नान्यु० D.

२१–[ निरु० १२।१८ ]

२२–दिवश्चादित्यस्य चेत्यर्थः । 'हविः सूक्त' इति त्रुटितम् B.

२३–नैवघ० C. २४–०स्यते B.

२५–भुवा D. २६–'आदत्ते' इति द्विर्लिखितम् D.

२७–०ग्निमनु० C. D. २८–०दी० B.C. ०वो D.

२९–[ अनुपलब्धमूलमिदं वचनम् ]

३०–०त्रादाते० D.

भासा[1] इति वा, ज्योतिरन्तरापेक्षया[2] दीप्तः। भासां ज्योतिषाम् इति, आदीप्तो भातीति वा पाठान्तरम्। ज्योतिर्मण्डलात्मनि[3] प्रकाशत इत्यर्थः। अदितेः पुत्र इति वा[4]। 'दित्यदित्या-दित्य'[5] इति ण्यः। तथा च ब्राह्मणम्-"अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो[6] ब्रह्मौदन-[7]मपचत्...तस्यै चत्वार आदित्या अजायन्त' इत्युपक्रम्य 'ततो विवस्वानादित्योऽजायत'[8] इति। एतद्युक्त[9]मुत्पत्त्यभिप्रायेण। शाकल्यात्रेयप्रभृतिभिर्नाव[10]गृहीतम्, पूर्वनिर्वचनाभि-प्रायेण। गार्ग्यप्रभृतिभिरवगृहीतमिति, तदेव कारणम्[11]। विचित्राः पदकाराणामभि-प्रायाः। क्वचिदुपसर्गविषये[12]ऽपि नावगृह्णन्ति। यथा शाकल्येन 'अधिवासम्'[13] इति नाव-गृहीतम्। आत्रेयेण तु 'अधि वासम्' इत्यव[14]गृहीतम्। तस्माद[15]वग्रहोऽनवग्रह इति। यदेतदुक्तमादित्यशब्दे व्युत्पत्तिनिमित्तकारण[16]म्-अदितेः पुत्रम्-इति। एतन्निर्वचननिमि-त्तमेव शब्दान्तरमेव[17]मर्थम्। आदितेयमिति वेदे प्रयुक्तं दृश्यते किन्त्वल्प[18]प्रयोगविषयोऽस्य। तु[19]शब्दो विशेष[20]णार्थः। अस्य-आदित्यस्य, एतद्[21]-वक्ष्यमाणमभिधानम्। क्व? आर्चाभ्याम्नाये[22] ऋचां समूह आर्चम्[23], अभ्याम्नायत इत्यभ्या[24]म्नायः, ऋच एव[25] यजुषा ब्राह्मणेन च मिश्रा[26] आम्नायन्ते आभि[27]मुख्येन यस्मिन्नसावार्चाभ्याम्ना[28]यः, तस्मिन् ऋग्[29]वेद इत्यर्थः। अन्ये ऋचा[30]-भ्याम्नाय इति पठन्ति। तेषामल्पप्रयोगमेतदभिधानम्, यत ए[31]कयैवर्चा प्रद[32]र्श्यते। आम्नाय

---

१–हासा C.
२–०रापेक्षयाभीद्धो C. राभीद्धो D.
३–ज्योति मण्डलमात्मनि D.
४–'इति वा' इति त्रुटितम् B.
५–[ Fragment of पा० ४।१।८५ ] दित्य इत्यादित्ये B. दित्या दित्ये C.
६–'देवेभ्यो' इति नास्ति D.
७–ब्रह्मोद० C. ब्रह्मोनम० D.
८–[ तै० सं० ६।५।६ ]
९–०द्युत्पत्य० C. एत व्युत्प० D.
१०–'भिः नावगृही' इति त्रुटितम् B.
११–तदेतदाकारण C. तदेत का० D.
१२–०ये वि० C. १३–अधी० D.
१४–इत्यत्राव D.
१५–०दर्थाव० B. अग्रे 'ह इति। य' इति त्रुटितम्। ०हो नाव० D.
१६–'निमित्त' इति नास्ति D. १७–०मेवार्थम् B.
१८–०जग विविष० C. किन्त्वल्पः प्रयोग०इत्युचितम्।
१९–तुश० D.
२०–विषयाविशेषार्थः B. ०ब्द विशेषार्थः C.
२१–एव D. २२–'क्व? आर्चाभ्या' इति त्रुटितम् B.
२३–आर्च्चः D.
२४–य इत्यभ्यायः D. ०त्याम्नाय B.
२५–एव द्व य० B. C. २६–मन्त्रा D.
२७–'न' इति त्रुटितम् D. २८–०म्नायुः B. C.
२९–व्रवेद B. ३०–तृचामभ्या० D.
३१–एतयै D.
३२–'प्रदर्श्यते' त्रुटितम्। प्रदृश्यते य C.

एवाभ्याम्नाय इति वेद उच्यते, सर्ववेदेष्वित्[1]युक्तं भवति। सूक्तभाग्भवति, सूक्तं स्तुतिः, ता[2]मेव भजते। क्व? 'सूर्यमादितेय[3]म्' इति। न हविर्भाक्, सूर्यपदसामानाधिकरण्या-देतद् [4]गम्यते। गुणाभिधानमेतत्, नानेन ना[5]म्ना हविश्चोदना क्वचिदस्तीति। 'यदेदेन-मदधुर्यज्ञियासो [6]दिवि' इत्यत्र [7]व्याख्यास्यते।

अन्ये ऽल्पप्रयोगमित्यादित्यस्यैव वे[8]द एकवचनान्तस्यादित्यादिविषयस्याल्प-प्रयोगतां सूक्तभाक्त्वं चाहुः। यजुर्वेदे ब्राह्मणे [10]चान्तो नास्त्येकवचनबहुवचनान्तानाम्[11]। न केवलमस्यैवादित्यशब्दस्य[12], आदितेयशब्दस्यापि एकस्यामेव ऋचि, 'सूर्यमादितेयम्' इति। सूक्तभागेव [13]वेति। आ[14]दितेयमिति, 'अपवादविषये क्वचिदुत्सर्गो [15]दृश्यते' इति [16]ण्यविषये ढक्। 'प्रदीयतां दाशरथाय मैथिली' इति [17]यथा। 'सर्वे विधयश्छन्दसि विकल्[18]प्यन्ते' इति वा [19]ण्यविषये ढक्।

आदित्यशब्दस्य प्रसङ्गेनान्य[20]त्रापि क्वचिदा[21]ख्यायतेऽदितेः पु[22]त्रत्वेन। ए[23]वमनेन-प्रकारेणान्यासामपि देवताना[24]मादित्यशब्देन प्रवादा आदित्यशब्देन स्तुतयो भवन्तीत्यर्थः। त[25]द्यथैतन्मित्र-स्येत्यादि, 'इ[26]मा गिरः' इत्यत्र [27]व्याख्यास्यते।

---

१–सर्व C. २–त्वामे० B. C.

३–[ ऋ० १०।८८।११। निरु० ७।२९ ]

४–उच्यते D. ५–'ना' इति त्रुटितम् C.

६–[ ऋ० १०।८८।११ निरु० ७।२९ ]

७–०सन्ते C.

८–वेदमेक० B.

९–०न्तं स्या० B.

१०–चान्तो नाप्येक B. C. अत्र B. पुस्तके 'प्ये' इति 'स्त्ये' इति वा त्रुटितम्।

११–प्रयोग इति शेषः।

१२–'शब्दस्य आदितेय' इति त्रुटितम् D.

१३–'वा' इति नास्ति D. १४–०दित्येय० B. C.

१५–'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' [ प० शे० ५८ ] 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते' [ पात० व्या० महा० ७।४।८२ ]

१६–न्य वि० C. शुभ्रादेः [ पा० ४।१।१२३ ]

१७–[ अनुपलब्धमूलमिदं वचनम् ] 'इति' नास्ति B. C. 'यथा' इति द्विर्लिखितम् B. C.

१८–[ प० शे० ३५ ] 'वा छन्दसि सर्वे विधयो भवन्तीति' [ पात० व्या० महा० १।४।९ ] 'बहुलं छन्दसि सर्वे विधयो भवन्तीति' [ पात० व्या० महा० ३।१।८५ ]

१९–यावण्य वि० B. लावण्य वि० C. 'इति ढक्' इत्येव D.

२०–प्रशंसेन C.

२१–०ब्दे प्रसंगेन नान्यत्रापि क्वचिदाख्यापनेऽदि०D.

२२–प्रयोग इति शेषः। २३–०नेक प्र० D.

२४–०नामित्यादि० D. २५–त्यादि तु B.

२६–[ ऋ०२।२७।१ निरु० १२।३६ ]

२७–०यते D.

पृथगर्थमिदं दर्शयति-अथापि मित्रावरुणयोः, आदित्यशब्देन[1] हि स्तुतिः । आदित्या दानुनस्पती-दानपती[2] ।

ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम्[3] ॥

गृत्समदस्यार्षम्[4] । ता-तौ[5] मित्रावरुणौ, सम्राजा-सम्यग्दीप्तावीश्वरौ[6], घृतासुती-आसुतिरशनं[7] रसो वा घृताशनौ घृतरसौ वा, यद्वा-आसुतिरासवः[8], घृतमेवासवो ययोरित्यर्थः । आदित्या-आदितेः पुत्रौ । दानुनस्पती-दानुर्दानम्[9], 'दाभाभ्यां नुः[10]' बहुलवचनाद् भावे । तस्याधिपती, अत्यन्तदातारावित्यर्थः । सचेते- लोडर्थे लेट्[11], सचेताम्-सेवेताम्[12] । किम् ? सामार्थ्यादस्मद्यज्ञम् । कीदृशम् ? अनवह्वरम्, अवपूर्वस्य ह्वरतेरत्ति-[13]कर्मणः । अवह्वरो भक्षः[14] । अनवभक्षितं अनवहिंसितं[15] रक्षोभिरित्यर्थः । अथवा घृतमुदकं वृष्टिलक्षणं तथा वा सुवाते[16] प्रेरयतस्तौ[17] घृतासुती, वृष्टिप्रदानद्वारेण[18] सचेते सर्वान् प्राणिनः । अनवह्वरम्-'ह्वृ कौटिल्ये[19]' अकुटिलमृजु, अशाठ्येनेत्यर्थः ।

अथापि मित्रस्यैकस्यादित्यप्रवादा स्तुतिः—

प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्[20] ॥

विश्वामित्र आह-सः हे मित्र ! मर्तः-मनुष्यः प्रास्तु प्रकर्षेण भवतु प्रयस्वान्-अन्नवान् यस्तुभ्यं[21] हे आदित्य ! अदितेः पुत्र ! शिक्षति ददाति । किम् ? सामर्थ्यात् हविः, व्रतेन कर्मणा यागाख्येन । किञ्च न हन्यते केनचित्, न च[22] जीयते त्वोतः-त्वया ऊतो[23] रक्षितः, न चैनमंहः

१–'त्य' इति त्रुटितम् B.
२–'दानपती' इति नास्ति C. D.
३–[ ऋ० २।४१।६ ] 'ता सम्राजा० ह्वरम्' इत्येव प्रतीकम् D.
४–०दार्षम् D. ५–'ता' नास्ति B. D.
६–०विश्वरौ C.
७–०ती शेनं B. ०तिशेनं C. ८–०ती आस० D.
९–दानुर्दनुर्दा० B. दानुर्दानुर्दा० C.
१०–[ उणा० ३।३२ ] ददात्या ( दादाभ्या C. ) नुन् बहुवच० B. C.
११–लेट् D. १२–सेवताम् C. सवताम् D.
१३–[ धा० १।९७८ ] परमयं कौटिल्यार्थः । हरतेरन्ति० B. C. १४–अनवह्वरोऽभक्षः D.
१५–'अनवहिंसितं' नास्ति D.
१६–तयावासु ( यु C. ) वा० B. C.
१७–०येते घृतौ घृतासुतौ B. ०त घृतौ घृ० C.
१८–प्रधान० C.
१९–[ धा० १।९७८ ] ह्वतौभिल्ये B.
२०–[ ऋ० ३।५९।२ ] 'प्र स मित्र मर्त्तो अस्तु० न दूरात्' इत्येव प्रतीकम् D.
२१–ये तुभ्यं C. २२–'च' इति नास्ति D.
२३–'त्वया ऊतो रक्षितः' इति त्रुटितम् B.

पापमश्नोति व्याप्नोति, अन्तितः समीपात् नापि दूरात्। स्वगतं सम्बन्धिगतञ्चेत्यर्थः। अथवा सन्निकृष्टकाल विप्रकृष्टकालं[1] च, इदानीं कालान्तरे चेत्यर्थः।

अथापि वरुणस्यैकस्य। 'अथा वयम्'[2] इति नियमः।

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।

अथा वयमादित्य व्रते तवानागसो अदितये स्याम[3]॥

शुनःशेपो[4] यूपे बद्धो वरुणमाह-उत्तमं पाशं हे वरुण! अस्मद-स्मत्तः, उच्छ्रथय[5] निस्सारयेत्यर्थः। अवाधमं-अधः[6] पाशमित्यर्थः, अवश्रथय:-अवपातयेत्यर्थः[7]। विमध्यमं-मध्येवस्थितं विश्रथय विमुञ्चेत्यर्थः। अथानन्तरं वयं हे आदित्य! अदितेः पुत्र! व्रते यागाख्ये कर्मणि, तव त्वत्सम्बन्धिनि[8] त्वद्देवत्य इत्यर्थः। अनागसः-अपापाः, अदितये-अदितिरिति वाग्नाम[9], वाचे[10] त्वत्स्तुतिलक्षणायै स्याम भवेम[11] त्वां स्तुमो यजेमेत्यर्थः। भेदपक्ष एतत्सर्वं विचार्यते।

नैरुक्तपक्षे तु-अदितिर्द्यौः[12], तस्याः पुत्रः साहचर्याद् रसाहरणाद्वा[13] द्युस्थानो वरुणः। शुनःशेपोऽपि यजमानः सन्नाह। उत्तमम् उत्कृष्टम्, उत्तमे वा वयस्युपजातम्, हे वरुण! दुरितकर्मपाशमस्मत्त[14] उच्छ्रथय उन्मोचयेत्यर्थः। ऊर्ध्वे एव वयसि श्लथय। अधमं दुरितपाशं बाल्ये वयस्युपजातं तथैवाधमे[15] वयसि। मध्यमश्च[16] मध्यमे वयस्युपजातं निर्मोचय। अनन्तरं वयं हे अदितेः पुत्र! कर्मणि तव त्वद्देवत्ये, अनागसः, त्वयैव क्षपितकलमषाः, अदितये वयं स्यामेत्याशास्महे[17]।

निगमप्रज्ञादाह-व्रतमिति कर्मनाम, वृणोतीति। कर्तरि सत[18] इति कृतव्याख्यानम्[19]। तद्धि शुभमशुभं वा वृणोति बध्नाति कर्तारम्। तथा च श्रुतिः-'तं विद्याकर्मणी[20] सम-

---

१-वा D २-वयव० C.
३-[ ऋ० १।२४।१५ ] 'उदुत्तमं वरुण० स्याम' इत्येव प्रतीकम् D.
४-भो D. ५-श्रथाय B.
६-अथः पा० B. C.
७-'अवश्रथय-अवपातयेत्यर्थः' इति पाठस्त्रुटितः B.
८-०वन्धनि D.
९-वाद नाम ( मा B. ) B. C. १०-वोचे B.
११-हवेम C.
१२-अदिद्यौः C.
१३-रसहर० D.
१४-'कर्म' इति नास्ति D.
१५-'तथैव य' इत्येव B.
१६-'मध्यमश्च' इति नास्ति D.
१७-अदीनत्वा व० B. अदीनत्वाय वयस्यो मे० C.
१८-स इति B. C.
१९-०त इति व्या० D.
२०-०कर्मणि C.

न्वारभेते पूर्वप्रज्ञा चेति[1]'। इदमपीतरद्व्रतम्-गुड[2]लवण[3]स्त्र्यादिविषयनिवृत्तिरूपं कर्म। एतस्मादेव रू[4]पसामान्यात्। प्रसक्तं व्रतं[5] निरुच्यते-वारयतीति सतः, निवृत्तिरूपो हि कल्पस्तदतिक्रम्य प्रमादात् प्रवर्तमा[6]नं पुरुषं वारयतीति सत इत्यन्येषां पाठोऽर्थश्च। व्रतमिति कर्मनाम, निवृत्तिक[7]र्मनाम वारयतीति सत इति। व्रतं कर्मोच्यते। क[8]स्मात्? वारयतेः। तद्धि संक[9]ल्पपूर्वकं प्रवृत्तिरूपमग्निहोत्रादि कर्म प्रत्यवायं वारयतीति पुरुषः प्रवर्तमानो निवर्तमानश्च प्रकृतेनाभिसम्बन्धः, तेन व्रतेन निवार्यत इति व्रतस्यैव प्राधान्यात् हेतुकर्तृत्वेन विवक्षा। भोजन[10]मपि व्रतं क्षुदानिवारणात्।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य त्रयोदशः खण्डः[11]। ]

---

१–[ बृ० उ० ४।४।२ ]

२–शुद्ध० B. C.

३–०स्त्रियादि० C. ०णादि० D.

४–निवृत्ति सा० D.

५–'०निरु०' इति द्विर्लिखितम् C.

६–०मानां पुरुषः C.

७–०र्मणामा B. 'निवृत्तिकर्म नाम' इति नास्ति D.

८–कस्मावात् C. तस्मात् D.

९–०र्वकां C.

१०–०जनाम० D.

११–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

# [ अथ चतुर्दशः खण्डः[1] । ]

उक्तं प्रासङ्गिकम् । प्रकृतमभिधीयते[2]-स्वरादित्यः । कस्मात् ? सु अरणं गमनम्[3], तत्सुखाय हिताय वा[4] शोभनं यस्य । सुखप्रतिपत्त्यर्थो[5] विसन्धिपाठः[6] । सर्वत्र शोभनं वा[7] प्रेरणं तमसां यस्य । सुष्ठु वा ऋतो गतो रश्मिभि रसानादातुम्[8], भासं[9] वा ज्योतिषां नक्षत्रादीनाम । स्वृतो[10] भासेति, कर्मणि क्त इति विशेषः[11] । पूर्वत्र[12] कर्तरि । एतेन द्यौर्व्याख्याता । तुल्यनिमित्तत्वात् । तानि चेत् समानकर्माणि समाननिर्वचनानि इत्यस्याः परिभाषाया उदाहरणान्येतानि, अल्पत्वात् स्वयमेव प्रदर्शयति-साऽपि[13] सुष्ठु गता शोभनं वा[14] अरणमस्यां शोभनैर्वा[15] पुण्यकृद्भिरर्यतेऽस्यां[16] सुष्ठु वा पुण्यकृत[17] ईरयतीति[18] । तत्र गमनाय स्वृतो[19] रसैः, कर्मणि क्तः, स्वृता[20] भाभिर्ज्योतिषां स्वयमेवादीप्ता[21] ।

दिव उदाहरणम्—'भूर्भुवः स्वः[22]' इति ।

आदित्यस्य तु[23]—

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्व१र्णज्योतिः ।
अग्ने विश्वेभिः सुमना अनीकैः[24] ॥

वामदेवस्यार्षम्[25] । एभिर्नः-अस्माकं स्वभूतैरर्कैः स्तूयमान इति शेषः । भवा नः-भव नः-अस्माकम्[26], अर्वाङ्[27]-प्रसादाभिमुखः प्रसादपर इत्यर्थः । स्वर्णज्योरिति[28], आदित्या-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।
२–व्रतम० B.
३–मुद्रितमूले पुल्लिङ्गपाठः ।
४–'वा' नास्ति D. ५–०पत्त्यै B.
६–पां D.
७–'वा' नास्ति D.
८–०दातुर् B. C. ९–महसां B. महासं C.
१०–स्वस्तृतो C. ११–'वि' इति त्रुटितम् D.
१२–'त्र' इति त्रुटितम् D.
१३–सा वि C. नास्त्येव D. । साऽपि द्यौरपीत्यर्थः ।
१४–०भना वा आ० B.
१५–'वा' इति नास्ति B.
१६–०द्भिर्यते स्या B. ०राप्यते D.
१७–०कृतां B. C.
१८–'र' त्रुटितम् B. 'य' त्रुटितम् C.
१९–स्मृतो B. C.
२०–स्मृता B. C.
२१–०व दी० D.
२२–[ य० वा० सं० ३।५,३७ ]
२३–'तु' नास्ति D.
२४–[ ऋ० ४।१०।३ ] 'एभिर्नो अर्कैः ०अनीकैः' इत्येव प्रतीकम् D.
२५–०वार्षम् D.
२६–'अस्माकम्' नास्ति D.
२७–अवकि् D.
२८–'इति' नास्ति C. D.

ख्यमिव भास्वर इत्यर्थः[1]। हे अग्ने! विश्वेभिः सर्वैरनीकैर्ज्वालाख्यैर्मुखैरुपेतै[2][3] इत्यर्थः। सुमनाश्च[4] भवेत्यनुषङ्गः। अतियाच्ञया खेदं मायासीरित्यर्थः।

पृश्निरादित्य[6] इत्यादि। प्राश्नुत एनं शुक्लो वर्णः। संस्प्रष्टा[7] रसान्, तृष्णन्तोऽयम्[8]। ततश्च 'न लोकाव्यय'[9] इति षष्ठीप्रतिषेधाद् द्वितीयैव, आदाता रसानित्यर्थः। कृतव्याख्यानमन्यत्[10]।

अथ द्यौः संस्पृष्टा व्याप्ता ज्योतिर्भिः पुण्यकृद्भिश्च। 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि'[11] इति श्रुतेः।

आदित्यस्योदाहरणम्-'अयं वेनश्चोदयत्'[12] इति व्याख्यास्यते[13]। दिवः—

अरा इवेदचरमा अहेव प्र प्रजायन्ते अकवा महोभिः।
पृश्नेः पुत्रा उपमासो रभिष्ठाः[14] स्वया मत्या मरुतः सं मिमिक्षुः॥[15]

श्यावाश्वो मरुतः स्तौति। अरा इव-यथा अराश्चक्रस्य तुम्बस्य वा तद्वत्। अचरमाः-चरमः[16] पश्चिमः स[17] येषां[18] नास्ति ते अचरमाः। पश्चिमाभावादेवाग्रिमस्याप्यभावः[19], अनग्रिमपश्चिमा इत्यर्थः। अहा इव[20]-अहानीव च[21] संवत्सरस्य सहजातत्वाद्धि[22] तुल्यकाला मरुतः, नैषामग्रिमो[23] न पश्चिमोऽप्यस्ति[24] कश्चित्। प्र[25] प्रजायन्ते-एकः प्रशब्दः 'प्रसमुपोद' इति पादपूरणः, अपरः प्रकर्षार्थः, प्रकृष्टा जायन्ते प्रतिदिवसं वर्द्धमानाः प्रकृष्टा भवन्तीत्यर्थः। अकवाः[26]-अकुत्सिताः। महोभिः-स्वैर्माहात्म्यैः[27], पृश्नेः-दिवः पुत्राः, उपमासः[28]-उपमाभूता[29] सर्वस्य।

---

१—०रमित्य० D. २—०रनेकै० D.
३—'उपेत' इति नास्ति D. ४—'च' नास्ति B.
५—०याञ्चया C. ६—वृश्नि० C.
७—संस्पृष्टा C. ८—तृणं तोयं B.
९—[ Fragment of पा० २।३।६९ ]
१०—०ख्यमेतत् D.
११—च न० B. C. [ अनुपलब्धमूलमिदं वचनम् ]
१२—[ ऋ० १०।१२३।१। निरु० १०।३९ ]
१३—'ख्या' इति द्विर्लिखितम् D. '०स्यते। दिवः' इति त्रुटितम् B.
१४—ष्ठात् B. C.
१५—[ ऋ० ५।५८।५ ] 'अरा इवेदचरमा० मिमिक्षुः' इत्येव प्रतीकम् D.
१६—परमः C. १७—'स' इति नास्ति B.
१८—एषां B. C.
१९—०ग्रीमस्याप्यभा० C. ०ग्रमस्या० D. ०मस्य स्वभावः B.
२०—अहाव C. 'इ' इति त्रुटितम्।
२१—'च' नास्ति D. २२—०जाति त्वा० D.
२३—'म' इति त्रुटितं भाति B. C.
२४—०मो वास्ति B. C.
२५—'प्र' इति त्रुटितम्। 'प्रजायते' इत्येव B.
२६—अकपाः C. २७—'महात्म्यैः' इत्येव D.
२८—०मानाः D. २९—०माहूताः C.

अथवा-उपमा इत्यन्तिकनाम, दिवः पुत्राः[1] सन्निकृष्टाश्चेत्यर्थः। रभिष्ठाः-अतिशयेन वेगवन्तः, स्वया मत्या प्रज्ञया मरुतः संमिमिक्षुः[2] मिक्षतेर्[3]गतिकर्मणः। एतद्रूपं संगच्छते। यादृश्येषां योग्या[4] प्रज्ञा परानुग्रहात्मिका तादृश्येषामुत्पद्येत[5] इत्यर्थः।

अथवा मन्यतेरर्चतिकर्मणो मतिः स्तुतिस्तया संगच्छन्ते स्तोतृभिः स्तूयन्त इत्यर्थः।

नाक आदित्यो भवति। नेता प्रापयिता भासामात्मीयानां सर्वत्र, ज्योतिषां प्रणयो नायक इत्यर्थः। अथवा नेता भासां ज्योतिषां चेति सिद्धम्[6]। अतः[7] प्रणयः-प्रणाशकः, अन्तर्धातेत्यर्थः।

अथ द्यौः। कमिति सुखनाम, तत्प्रतिषिद्धम्[8] अकं दुःखं, पुनः प्रतिषिध्यते, सुखमेवेत्यर्थः। सु[9]खस्थानत्वाच्च सुखमित्युच्यते। प्रतिषेधद्वयोपनिपाते[10] प्रकृत एव गम्यत[11] इति। अस्मिन्नर्थे ब्राह्मणं पठित्वा व्याचष्टे[12]—

'न वा अमुं लोकं जग्मुषे किंचनाकम्[13]। नवा[14] अमुं लोकं गवतते किञ्चनासुखमि[15]ति। कुतः[16]? पुण्यकृत एव यस्मात्तत्र गच्छन्ति। न च पुण्यकृतां[17] दुःखभवनं युक्तम्। ननु च यत्र सुखं दुःखेनापि[18] तत्र भवितव्यम्। तथा च श्रुतिः-'न ह[19] वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति'[20] इति? उच्यते। सुखबाहुल्याद्दुःखं नास्तीत्युच्यते। नावेदविदस्मिन्[21] ग्राम इति यथा। उदाहरणम्-'नाकस्य[22] पृष्ठे' इति व्याख्यातम्। 'तस्मिन्नहं नि दधे नाके अग्निम्'[23] इत्यादि।

---

१-'पुत्राः' इति नास्ति B. C.
२-असं मि० B. C.
३-मक्षते० B. म्यक्ष्यतिरिति गतिकर्मसु निघण्टौ पठितः। धातुपाठे नास्त्ययं धातुः।
४-'योग्या' नास्ति D. ५-०मुपलभ्यत B.
६-प्रसिद्धः D.
७-इत्थं प्रकाशोन्तर्धातेत्यर्थः D.
८-'अकं' नास्ति B.
९-'सु' इति त्रुटितम् B.
१०-०निवाते C.
११-गत B.
१२-द्व्याचष्टे B. द्याचष्टे C. अत्र 'तद्व्याचष्टे' इति पाठो भवेत्।
१३-[ काठ० सं० २१।२ ] इदं मूलवाक्यं नास्ति C. D. cf. तै० सं० ५।३।७।१ सुवर्गो वै लोको नाको'''नास्मा अकं भवति। cf. मै० सं० ३।३।१ नाकं हवा अस्मा'''न वै तत्र किंचन जग्मुषेऽकम्।
१४- न वाक्यं लोकं C. १५-नो सु० B. C.
१६-'कुतः' इति नास्ति D. १७-०कृताः C.
१८-तत्र दुःखेन नापि D. १९-भू D.
२०-[ छा० उ० ८।१२।१ ]
२१-'विद' इति त्रुटितम् C.
२२-[ ऋ० १।१२५।५ ]
२३-[य० वा० सं० १५।४९॥ तै० सं० ४।७।१३।३] अनिम् C.

गौरादित्यो भवति[1]। गमयति रसान् मण्डलं प्रति रश्मिभिः। गच्छति वा मध्यमक्षये। अथ द्यौः[2]। यत्पृथिव्या उपरि दूरं गता। 'उमादः पुरुषे'[3] इत्यादित्यस्योदाहरणम्। दिवः-'गवामसि गोपतिः'[4] इति।

विष्टबादित्यो भवति। आविष्टो रसान्[5]। विष्टबादित्यः[6] पृथिव्या रसानादातुमाविष्टोऽभिनिविष्ट[7] इत्यर्थः। एवमेव भासां ज्योतिषाम्। भासा[8] वा व्याप्तः। द्यौरप्येवम्। 'गोदो ब्रध्नस्य विष्टपम्'[9] इत्युदाहरणम्।

नभ आदित्यः। नयतेः। अपि वा भनं[10] एव स्याद्विपरीतः। भासनः सन्नो[11]कारस्य ह्रस्वत्वेन सलोपेन च भनः[12], भनः[13] सन् नभः। न न भातीति वा, नकारलोपेन नभः। न न भाति भात्येवेत्यर्थः[14]। एतेन द्यौर्व्याख्याता। 'ज्योतिष्मती प्रतिमुञ्चते नभः'[15] शुक्रे[16] ऋषभा[17] नभसा इत्युदाहरणम्[18]।

इति स्कन्दस्वामिकृतायां निरुक्तटीकायां
सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
चतुर्थः पादः[19]।

---

[ चतुर्दशश्च खण्डः
समाप्तः[20]। ]

---

१–गौरादिः C. 'भवति' इति नास्ति D.

२–'अथ द्यौः' इति त्रुटितम् D.

३–[ अनुपलब्धमूलमिदं वचनम् ] 'उमादः' नास्ति D.

४–[ ऋ० ७।९८।६ ] हवामसि C. B.

५–इदं मूलवाक्यं नास्ति C. D.

६–०बश्चादि० C. ७–०भिन वि० C.

८–हासा C. 'भासा' इत्यत आरभ्य 'इत्युदाहरणम्' इत्यन्तः पाठो नास्ति D.

९–[ ऋ० ९।११३।१० ] 'गोदो' इत्यस्य स्थाने वेदे 'यत्र' इति पाठः।

१०–हन B. C. ११–सन् भास्वत्वेन D.

१२–नभः B. C. D. १३–नभः B. C.

१४–०त्येवे वेत्ये० D.

१५–[ तै० सं० ४।३।११।३ मै० सं० २।१३।१०। का० सं० ३९।१० ]

१६–उत B. उक्र C. १७–षभ भाभानब्रभसा B.

१८–ज्योतिष्मतीत्यादिरयं पाठो D. पुस्तकेऽत्र नास्ति प्रत्युत 'गौरादित्य' इति प्रकरणे 'एवमेव भासां ज्योतिषां' इत्यतः परस्ताद् विद्यते। तत्रत्यश्चोचितः पाठस्तत्र नास्ति।

१९–अत्र B.C. पुस्तकयोः पादादिसमाप्तिनिर्देशो नास्ति

२०–आदर्शपुस्तकेषु खण्डसमाप्तिनिर्देशो नास्ति।

# [ अथ पञ्चमः पादः ।[23]

## पञ्चदशः खण्डः । ]

रश्मिनामानि साधारण्यप्रसङ्गादाह-खेदय इत्यादीनि पञ्चदश । रश्मिर्यमनादित्यर्थ-कथनमेतत्[1], न धातुप्रदर्शनम्[2] । रशेरेव रश्मिः । रशना[3] रश्मिरिति कतिपयप्रयोग[4]-विषय एवायं रशिः, रहेत्यादिवत्[5], न सर्वत्र, बन्धनप्रतीतेर्यमनादित्याह-एकत्रोदर्कस्या[6]-परत्राश्वानाम्[7] । तेषामादौ साधारणानि पञ्चाश्वरश्मिभिः । प्रदर्शनश्चैतत् । अभीशु-दीधिति-शब्दावङ्गुलिभिः । एवमन्येषामपि[8] द्रष्टव्यम् ।

आदित्यसम्बन्धित्वेनैव[9] दिङ्नियमादाह-दिङ्नामान्युत्तराण्यष्टौ[10] । दिशतेः[11] । आदिश्यन्ते[12] हि ताः[13] आदित्येन । अतिसृष्टा वा तं तमर्थं प्रति आशदनाद्वा[14], शादिर्गत्यर्थः[15] । अभ्यशनाद्वा व्यापातनाद्वा[16] । दिशतेरेवार्थनिदर्शनमिति केचित्[17] ।

तत्र काष्ठा इत्येतदनेकस्यापि[18] द्रव्यस्य वाचकं[19] भवति । दिशस्तावत्, क्रान्त्वा सर्वमतीत्य स्थिताः, आकाशवत्[20], व्यतिरेकपक्षे । अव्यतिरेकेपि त एव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति[21] । उपदिशो ऽप्येवमेव, अव्यतिरेकेऽपीतरेतरापेक्षया परत्वापरत्ववत्[22] सर्वत्र व्यवहारास्तित्वम् । आदित्योऽप्युदयगिरेः क्रान्त्वास्तगिरावदर्शनात् स्थित

---

१–०ना एवमदि० C.

२–धातु शब्द प्र० B. C.

३–रशेन B.

४–प्रय प्रयो० B. C.

५–हरत्या० D.

६–०दरस्या० B. C.

७–०श्वाना० C.

८–'एवम्' नास्ति C. अस्य वाक्यस्य स्थाने B. पुस्तके 'एवमादीन्येषामपि द्रव्यस्य वाचकं भवति द्रष्टव्यम्' इति पाठो वर्तते ।

९–०बन्धत्वे० B. C.

१०–वाङ् D.

११–अतिसर्जनार्थस्य दिशः तैः B.

१२–आश्यन्ते B.

१३–एताः C.

१४–आदश ( 'सद' इत्यपि B. ) नाद्वाद B. C.

१५–शनिर्ग० B.

१६–'व्यापातनाद्वा' नास्ति D.

१७–काचित् D.

१८–०तदपरत्वादने० B.

१९–मुद्रितपुस्तकेषु 'द्रव्यस्य वाचकं' इत्यस्य स्थाने 'सत्त्वस्य नाम' इति पाठो वर्तते ।

२०–०शादव्यति० B.

२१–'सं' इति नास्ति D.

२२–'वत्' इति त्रुटितं भाति C.

२३–आदर्शपुस्तकेषु पादखण्डारम्भनिर्देशो नास्ति ।

उच्यते[1]। आज्यन्तः[2] शरपथपर्यन्तः[3] काष्ठोच्यते । अत[4] एवापोऽपि द्विप्रकाराः काष्ठाः। स्थावरास्तावत्[5]-गत्वा जलाशयं समुद्रादिं स्थिता भवन्ति । सर्वत्र[6] निगमा द्रष्टव्याः। अयनसन्ध्या[7]प्रकर्षादिषु[8] चास्थावराणां न क्वचित्तिष्ठन्तीति काष्ठाः। निगमः।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
पञ्चदशः खण्डः[9]। ]

---

१—इत्युच्यते D.

२—आदित्यः D. अज्यतश्छर० C.

३—०थान्तः B.

४—अक ए० C.

५—०रां स्ता० B. ०रा स्था० C.

६—०त्र हि नि० D.

७—स्पया C.

८—०दित्वा स्था D.

९—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

## [ अथ षोडशः खण्डः । ][14]

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।

वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥[1]

हिरण्यस्तूपस्यार्षम्[2] । चलत्वाद[3]तिष्ठन्तीनां बहुत्वादनिवेशनानां काष्ठानामपां मध्ये स्थितान-मिति शेषः । बहिर्निहितं शरीरं वृत्रस्य मेघस्य निण्यं[4] निर्णामं यतोऽधो नीचैर्नमति तं बिले[5]-मित्यर्थः । विचरन्ति विजानन्ति, सर्वे गत्यर्था ज्ञानार्थाः, आपः । सोऽपि निर्गच्छन्तीस्ताः प्ररुरुत्सन्[6], दीर्घन्तमः-धूमनीलं मेघशरीरम्, आशयत् आशेते आतिष्ठति[7] । दीर्घेण तमोरूपेण कृत्स्नं न[8]भो व्याप्नोतीत्यर्थः । इन्द्रशत्रुः-इन्द्रस्य शत्रुः शातयितव्यः[9] । शरीरं सामान्येन निराह शृणातेः, हिंस्यते हि तत् । शम्नातेर्वा[10], शाम्यति हि तत् कालेन । दीर्घम्-द्राघतेर्वृद्ध्[11]यर्थस्य । तमस्तनोतेः[12], विस्तीर्णं हि तदात्मना । शमयिता[13] शातयिता वेति धात्वन्यत्वमात्रम्, अर्थस्तूभ[14]-यत्र मारणमेव ।

---

१–[ ऋ० १।३२।१० ] 'अतिष्ठन्तीना० इन्द्रशत्रुः' इत्येव प्रतीकम् D.

२–०पार्षम् D. ३–पल० C.

४–हिरण्यं C. ५–बल० B.

६–अवरु० C.

७–'चलत्वादति०' इत्यारभ्य 'आतिष्ठति' इति पर्यन्तः पाठस्त्रुटितः D. पुस्तके । अस्य स्थाने दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते । स चेथम्-"दुर्गवृत्तौ-'न तिष्ठन्तीत्यतिष्ठन्त्यः । तासा-मतिष्ठन्तीनां मेघोदरान्तर्गतानामपाम् । ता हि मेघे गच्छति गच्छन्त्येव तदाधारत्वात् । अनि-वेशनानामनिविशमानानाम् । न हि ताः क्वचिन्न-( न्नि- ) विशन्ते यावज्जलाशयं नाप्नु-वन्ति । तासामेवंविधानां काष्ठानां मध्येऽवस्थि-तानां बाह्यतो मेघाख्यं निहितमवस्थापितं धात्रा शरीरमावृत्यापस्तासामेव गुप्तये । ताः पुनर्वृत्रस्य मेघस्य निण्यं निर्णामं येनासौ नीचैर्नमति तं प्रदेशं विजानन्ति ( 'न्तीव' मु० पा० ) यत-स्तेन प्रदेशे ( न ) विचरन्ति । निम्नानुसारिण्यो हि ताः । असावपि वृत्रस्तासु प्रक्षरन्तीषु तत्-प्रक्षरणनिरोधं चिकीर्षुः स्वशरीरवृद्ध्या दीर्घ-न्तमः । स हि तमः स्वत एव धूमादिप्रभवत्वात् । यावत्तं प्रदेशं निम्नं बिलमनुसरन्त्यः मेघस्य तं (?) निःसरन्ति । ततो बहुतरमसौ वर्धते तदवरु-( रु ) त्सया । एवं दीर्घं तम आशयत् आशेते' एवं दुर्गः" ।

८–भा B. C. ९–०तव्यम् B.

१०–हिंसार्थस्यैव [धा० ४।९२] । वस्तुतस्त्वयं नैघण्टुको धातुः । शम्नातिर्वधकर्मसु निघण्टौ पठितः ।

११–[ धा० १।११७ ]

१२–विस्तारार्थस्य [ धा० ८।१ ]

१३–'शमयिता' नास्ति D. १४–०स्तु यत्र D.

१४–आदर्शपुस्तकेषु 'खण्डारम्भनिर्देशो न विद्यते ।

वृत्रशब्दस्य[1] निगमप्रसक्तस्याभिधेयं प्रति विप्रतिपत्तिः[2], तन्निर्णिनीषया[3] प्रश्नयति[4] तत् को वृत्र इति। त्वाष्ट्रोऽसुर[5] इत्यैतिहासिकाः। सर्वे इतिहासाश्चार्थवादमूलभूताः[6]। ते चान्यपरा विधिप्रतिषेधशेषभूताः[7]। अतस्ताननादृत्य स्वयमविरुद्धं नित्यदर्शनमुपोद्बलयन्नाह[8] मेघ इति नैरुक्ताः। कथं तर्हि मन्त्रेषु ब्राह्मणेषु च सलिलसंघातमात्रात्मकेन वृत्रेण सह युद्धप्रवादाः? उच्यते, अपाञ्चेत्यादि। अपां रश्मिभिराहृतानां घनीभूतानां[9] वायुनावष्टब्धानामभिहन्यमानानां[10] परस्परसंघर्षे तरुशाखयोरिवाग्निरुपजायते, ततस्तेनोपतप्तानां[11][12] विलयनं[13] भवति। तासां ज्योतिषश्च वैद्युतस्योद्भूतवृत्तेः[14] प्रतिद्वन्द्विभावान्मिश्रीभूतयोस्तत[15] एव मिश्रीभवनकर्मणो वर्षकर्म विलयनाज्जायते[16], न ह्यविलीनमुदकं[17][18] स्रवति। न च तेजोऽन्तरेण विलयनमस्ति। तत्र मुख्ययुद्धसम्भवाभावादौपचारिकी उपमालक्षणार्थेन युद्धवर्णना[19]। किं सादृश्यम्? संघर्षः[20]। तस्मादसति युद्धे कल्पनैषा[21]। तथा च कल्पितरूपा मन्त्रवर्णा मन्त्रलिङ्गाः[22]।

रूपं रूपं मघवा बोभवीति[23]।

मायेत्सा ते यानि युद्धान्याहुः[24]।

इन्द्रो दिवः[25]।

यद्चार्व इन्द्र ते शतम्[26]। इति

तेषामेको निरुक्तेन व्याख्यातव्यः[27]। स व्याख्यायते—

---

१—०त्रश्छब्द० C.

२—'विप्रति' इति द्विर्लिखितम् C.

३—०'र्णि' इति त्रुटितम् D.

४—प्रश्न इति B. C.

५—'इति त्वाष्ट्रोऽसुर' इति त्रुटितम् B.

६—०मूलाः B. C.

७—'०षेध' इति त्रुटितम् D.

८—निदर्श० B. C. 'त्य' इति त्रुटितम्।

९—सघातीनां घनीभू० D.

१०—विष्टब्वाना० D.

११—०स्तानो० C.

१२—०लिप्ता० B.

१३—विलयं D.

१४—'वैद्युतस्योद्भूतवृत्तेः' नास्ति B. C.

१५—०द्वन्द्व एवाग्मि० B. द्वन्द्वीभावमि० D.

१६—'वि' इति नास्ति B. C.

१७—ना (न C.) प्यवि० B. C.

१८—'उदकं' त्रुटितं भाति B. C.

१९—०वर्णानां B. C.

२०—वर्षसं० D.

२१—०द्धेत्कल्पनै० B. C.

२२—'मन्त्रलिङ्गाः' नास्ति B. C.

२३—[ ऋ० ३।५३।८। ]

२४—[ ऋ० १०।५४।२ ]

२५—[ ऋ० १०।८९।१० )

२६—[ ऋ० ८।७०।५ ]

२७—व्याख्यातः B. C.

यदचरस्तन्वा वावृधानो बलानीन्द्र प्र ब्रुवाणो जनेषु ।
मायेत्साते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से ॥[1]

बृहदुक्थस्य वामदेवस्यार्षम्[2] । यदचरः-चरसि[3], तन्वा शरीरेण, वावृधानो वर्धमानः[4], बलानीन्द्र स्वसामर्थ्यानि प्रब्रुवाणः कथयन्निव जनेषु, चतुर्थ्यर्थे सप्तमी, जनेभ्यः । माया, इदिति पदपूरणः, सा ते तव अनृतं तदित्यर्थः । यानि युद्धान्यैतिहासिका आहुः, तान्यपि मायैव । यतो नाद्य इदानीम्, शत्रुं प्रथमार्थे द्वितीया, तच्छ्रुतेश्चास्तीति शेषः । शत्रुर्नास्तीत्यर्थः[5] । नापि पुरा यानि[6] युद्धान्यैतिहासिकाः[7], तान्यपि पुरातनश्च[8] त्वमपि विवित्से वेत्स्येव न[9] केवलोऽहम् ।

अथवा, विवित्से इति विदेर्लाभार्थस्य[10] रूपम्, नेदानीं शत्रुं लभसे, नापि पुरा । ततश्च केन सह युद्धमिति । किं वृत्रवदेव ?[11] न, अहिवत्तु-अहिशब्देनापीत्यर्थः[12] । मन्त्रवर्णा[13] ब्राह्मणवादाश्च भवन्ति—

अहन्नहिमन्वपस्ततर्द[14] । तथा—

अग्निर्वृत्राणि[15] । इति ।

ऐतिहासिकपक्षे एको वृत्रः, कुतो बहुत्वम् ? नैरुक्तपक्षे त्वदोषः । विवृद्ध्या शरीरस्येत्यादि, निगदव्याख्यातम्[16] । ब्राह्मणमपि चास्मिन्नर्थे दृश्यते-'स ईषुमात्रं[17] विष्वङ्ङ्वर्धत'[18] इति । एतदर्थाभिवादिनी एषा ऋग्भवति ।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
षोडशः खण्डः[19] ]

---

१–[ ऋ० १०।५४।२ ] 'यदचरस्तन्वा० विवित्से' इत्येव प्रतीकम् D.
२–०स्य वार्षम् C. ३–चरसी C.
४–'वर्धमानः' त्रुटितम् D.
५–तच्छ्रूतं ना० ( र्ना० C. ) B. C.
६–यापि B. C. यान् D.
७–आहुरिति शेषः । ८–०तत्रस्व B.
९–'न के' इति त्रुटितम् B.
१०–[ धा० ६।१३८ ]
११–'एव ? न' त्रुटितम् D. १२–आदिश० D.
१३–मन्त्रा ब्रा० B. C.
१४–[ ऋ० १।३२।१ ]
१५–[ ऋ० ६।१६।३४ ] १६–०ख्यानम् D.
१७–'इषुमात्रं' इति द्विर्लिखितम् C. 'विष्वङ्' इति नास्ति D. विस्पन्द व० C.
१८–[ तै० सं० २।५।२।२ ]
१९–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ सप्तदशः खण्डः[1] । ]

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥[2]

हिरण्यस्तूपस्यार्षम्[3] । दासः कर्मकरः श्रान्त उपक्षीणशक्तिः, तं वीतश्रम[4]व्यावृत्तिकरणेन[5] पालयन्तीति[6] दासपत्न्यः । अथवा-दासो मेघः, तस्य पालयित्र्यः, ताभिर्हि[7] मेघो भवति, तत्कृतं तस्य मेघत्वमित्यर्थः[8] । अहिगोपाः-अहिर्मेघो गोपायिता यासां[9] ताः । अतिष्ठन्-तिष्ठन्ति, तेन निरुद्धा आपः पणिनेव वणिजेव विक्रयार्थे[10] वीथ्यादौ[11] गावः, तासामपां निर्गमबिलम्, अपिहितं घट्टितं[12] यदासीत्, वृत्रं मेघं जघन्वान्, अपतद्ववार अपावृतवान् तदिन्द्रः ।

दासो दस्यतेः, उपदासयति कर्माणि उपक्षयति कर्माणि । क्षय आन्तं गमनम् । एवं हि तत् क्षीणं भवति । यद्यन्तं नीतम्[13], अर्थार्थत्वात् प्रवृत्तेः[14] । अन्यथा पुनः प्रवर्तत एव । अहिरयनात्-गमनात्, एति गच्छत्यन्तरिक्षे । अयमपीतरोऽहिः सर्प एतस्मादेव[15] एतेः । असावपि हि[16] भूस्यामेति । यद्वा आहन्ति भोगेनेत्याहिः[17] सन् उपसर्गह्रस्वत्वेन अहिः । पणिर्वणिगित्यभिधेयवचनम् । पणनादिति शब्दनिर्वचनम् । क्रयविक्रयव्यवहारः पणनम् । पर्याय[18]प्रसङ्गादाह वणिग् वन्यं वननीयं[19], पण्यं नेनेक्ति शोधयति, क्रयविक्रयः स्यादिति । बिलं भरं बिभर्त्तेः बिलं[20] बिभर्त्ति हि तदुदकादि । वृत्रो वृणोतेराच्छादनार्थस्य[21], आच्छादयति ह्यसौ कृत्स्नं

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ ऋ० १।३२।११ ] 'दासपत्नी० ववार' इत्येव प्रतीकम् D.
३—०पार्षम् D.
४—०शम० D.
५—०करेण D.
६—'इति' नास्ति D.
७—० भिर्निर्मेघो D.
८—०घः त्व० B.
९—सामताः B. C.
१०—०यर्थे C. ०यार्थं D.
११—व्रीह्यादौ B. C.
१२—उद्घटितं D. अत्र 'अनुद्घटितं' इति युक्तः पाठो भवेत् ।
१३—०न्तर्वी० B.
१४—प्रवृत्तिः D.
१५—एकस्मा० C.
१६—भि B.
१७—०त्यादि स० D.
१८—'पर्याय' इति त्रुटितम् D.
१९—वनयीयं D.
२०—भरं यत् वि० B.C.
२१—[ धा० ५।८ ]

नभः। वर्ततेर्वा[1] गत्यर्थस्य[2], गच्छति ह्यसौ नभः। वर्धतेर्वा[3] वृद्ध्यर्थस्य। ब्राह्मणदृष्टास्त्रयो[4]ऽपि निर्वचनप्रकारा इति दर्शयति-'यदिमाँल्लोकानावृणोत् तद्वृत्रस्य वृत्रत्वमिति विज्ञायते[5]। यथा[6] यद्वर्तयत् तथा इषुमात्रमवर्धत[7]' इति।

इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ[8]
सप्तमस्या-(द्वितीयस्या-) ध्यायस्य
पञ्चमः पादः।

---

[ सप्तदशः[9]
खण्डः ]

---

१–निघण्टौ वर्ततिर्गतिकर्मसु पठितः।

२–गर्थस्य B.

३–[ धा० १।७९६ ]

४–०णं दृष्ट्वास्त्वयो० D.

५–"विज्ञायते' नास्ति B. C.

६–तथा D.

७–[ cf. तै० सं० २।५।२।२ ]

८–टीकायां D.

९–आदर्शपुस्तकेषु खण्डसमाप्तिनिर्देशो न विद्यते

# [ अथ षष्ठः पादः।

## अष्टादशः खण्डः[19]। ]

रात्रिनामान्युत्तराणि दिङ्नामभ्यस्त्रयोविंशतिः। आदित्यनिमित्तत्वसम्बन्धात्। दिक्सम्बन्धः[1] श्यामवर्णा। श्यावीत्यादि प्रतिनाम[2] निर्वचनम्। ऊधरिति सन्दिग्धेषु, निर्णयोदाहरणम्-'यो अस्मै घ्रंस'[3]। इति। अहःसाहचर्यादर्थसामान्याच्च रात्रिरिति गम्यते। एवं[4] सर्वत्र। अर्थादेशप्रसक्तं निर्वचनम्-रात्रिः कस्मात्? इति। प्ररमयति प्रक्रीडयति[5] भूतानि नक्तञ्चराणि कौशिकपिशाचादीनि। उपरमयति कर्मभ्य इतराणि दिवाचराणि। ध्रुवीकरोतीत्यर्थवचनम्। प्रोपविष्टस्य[6] रमेः[7] रात्रिः। रातेर्वा[8] दानार्थस्य स्यात्। अत्र हि रूपसिद्धिलाघवमर्थपौष्कल्यञ्च[9]। प्रदीयन्तेऽस्यां[10] मध्यमेन[11] अवश्यायाः[12], अवश्यमायन्तीत्यवश्यायास्तुषारा इत्यर्थः, ते हि रात्रौ निपतन्ति[13]। रातेर्दानार्थोपपत्तिवचनम्[14]।

रात्रिसम्बन्धादुषोनामानि षोडश, विभावरीत्यादीनि। उषाः कस्मात्? उच्छतीति सत्याः। उच्छेतिर्विवासे[15], विवासनादुषाः। रात्रेरपरः काल इत्यभिधेयकथनम्[16]। नास्मात्परं रात्र्यवयवोऽस्ति पञ्चदशो मुहूर्तः। तञ्च[17] केचिदहर्भागं मन्यन्ते। केचिद्रात्रिभागम्। केचिदुभयसाधारणम्। केचिदुभयव्यतिरिक्तम्[18]। यथा चायं रात्रेरपरस्तथैव एषा ऋग्भवति।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
अष्टादशः खण्डः[19]। ]

---

१–दिसम्ब० D. ०म्बन्धा B.

२–०नामानि B. C.　३–[ ऋ० ५।३४।३ ]

४–एव एवं B. C.　५–'ड' इति त्रुटितम् D.

६–०विषयस्य D. अत्र 'प्रोपसृष्टस्य' इति समीचीनः पाठो भवेत्।

७–रामे B. C.

८–[ धा० २।४८ ]　९–० ल्यत्वात् D.

१०–०यते B. C.　११–'मध्यमेन' नास्ति D.

१२–०श्यायविप्रुषः B. C.

१३–अवश्यमायन्तीत्यादिरयं निपतन्तीत्यन्तः पाठो न दृश्यते B. C.

१४–०नार्थस्य पत्ति० D.

१५–उच्छ विवासे C. D. 'तिर्' इति त्रुटितं स्यात्। धातुपाठे तु 'उच्छी विवासे' [ धा० १।२३१ ] इत्येवं दृश्यते।　१६–वचनम् D.

१७–ताश्च B. तश्च C.　१८–०तिरेकम् D.

१९–आदर्शपुस्तकेष्वत्र खण्डप्रारम्भसमाप्तिनिर्देशो नास्ति।

# [ अथैकोनविंशः खण्डः । ][1]

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक्[2] ॥

कुत्सस्यार्षम् । उत्तरा च । इदं श्रेष्ठम्-अतिशयेन प्रशस्तम्[3], ज्योतिषां ग्रहनक्षत्रादीनां[4] मध्ये[5], ज्योतिः-उष आख्यम्, आगात्-उद्गतम् । आदित्यो हि तापकः प्रकाशकश्च, चन्द्रमास्तु शीतः प्रकाशकश्च । इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकञ्चेत्येवमादित्यादीनामिदमेव श्रेष्ठमागच्छतीत्यर्थः[6] । उदिते च तस्मिन् चित्रः[7]-चायनीयः पूजनीयो दर्शनीयो वा[8], प्रकेतः-प्रज्ञानं प्रकाशाख्यम्, अजनिष्ट-जातम् । विभ्वा-विभुतमम्[9], इदमतिमहत्त्वाद्विभूतमं[10] विस्तीर्णतमम्, इतराणि परिच्छिन्नतराणि ज्योतींष्यपेक्ष्य[11], सर्वव्यापीत्यर्थः[12] । किञ्च यथा प्रसूता उत्पन्ना सवितुः सकाशात् स्वयमेव रात्रिः । सविता ह्यस्तमयेन[13] रात्रिं जनयति, तेन सा तत[14] उत्पन्नेत्युच्यते । सवाय एवा-एवं[15], रात्री-रात्रीः[16][17], उषसे-उषसोऽर्थाय, सवाय-सवो जन्म तदर्थमित्यर्थः । योनिम्-स्थानमात्मैकदेशम्, अपररात्र्याख्यम् । आरैक्[18]-आरेचितवती कल्पितवतीत्यर्थः[19] ।

एतदुक्तं भवति-यथा आदित्योऽस्तं गच्छन्नात्मनस्तिरोभावेन रात्रेरवकाशं ददाति, एवं रात्रिरुषसे । अथवा-यथा प्रसूतेत्युषा[20] उच्यते न रात्रिः, सवितुरित्येतदपि सवायेत्येतेन सम्बध्यते[21], यथा प्रसूता[22] उत्पन्ना उषाः सवितुः सवाय जन्मने[23], उषसो ह्युत्पत्त्य-

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।

२—[ ऋ० १।११३।१ ] 'इदं श्रेष्ठं० मारैक्' इत्येव प्रतीकम् D.

३—०येन श्रेष्ठं प्रशस्यं B. C. ४—०त्राणां B.

५—D. पुस्तके 'मध्ये' इति पदं 'ग्रहनक्षत्रादीनां' इत्यस्मात्पूर्वं विद्यते ।

६—'आदित्यो हि तापकः' इत्यादिः 'आगच्छतीत्यर्थः' इत्यन्तः पाठो नास्ति B. C. दुर्गवृत्तावप्ययं पाठो दृश्यते । ७—चित्र B. चित्रं C.

८—'चायनीयः पूजनीयो दर्शनीयो वा' इति पाटस्त्रुटितः B. C. लिङ्गभेदेन दुर्गवृत्तावप्ययं पाठो वर्तते । ९—विभूत० D.

१०—'विभुतमं' 'विभूततमं' इति वा पाठो युक्तः स्यात् ।

११—'इदमतिमहत्त्वात्' इत्यारभ्य 'अपेक्ष्य' इत्यन्तः पाठो नास्ति B. C. एतदानुपूर्वीकः पाठो दुर्गवृत्तावपि वर्तते । १२—सव्यापी० C. ०र्वस्यापी० D.

१३—भ्यास्त० C. १४—तत्र D.

१५—'एवा' त्रुटितम् D. १६—'रात्री' त्रुटितम् D.

१७—रत्रीः C. 'रात्रिः' इति पाठ उचितः ।

१८—अरैक् C. १९—'कल्पितवती' त्रुटितम् C.

२०—०सूयतेत्यु० D. २१—०म्बन्ध्य० D.

२२—'प्रसुता' नास्ति D. २३—०न्मनो ह्युत्प० D.

नन्तरं सविता जायते, तेनेयं तदर्थमेवोत्पन्ना इत्युच्यते । एवमेव रात्रिः प्रसूता उषसे, उषसो[1] जन्मार्थमुत्पन्नेत्यर्थः[2]। यतः स्थानमस्या रेचितवती।

अथवा यथाश्रुत एव सम्बन्धः। यथा प्रसूतोत्पन्ना। क्वासौ[3] ? अपरभागा रात्रिः सवितुरादित्यस्य सवाय[4] जन्मने, एवमेव विनापरभागेन उष आख्येन रात्रिस्तस्यैवापरभागस्य उष आख्यस्य जन्मने बहुलतमोरूपात्मोपसंहारेण स्थानं रेचितवतीत्यर्थः। एवमत्र रात्रेर्मन्दतम[5]प्रकाशात्मकोऽपरभाग उषा इति सिद्धम्। रात्रिरादित्यस्य[6] सकाशादिति शेषः प्रथमे व्याख्याने । द्वितीये तु व्याख्याने रात्रिरादित्यस्येति तदेकदेश[7]भूता उषा उच्यते। शिष्टं भाष्यं मन्त्रव्याख्यानेनैव गतम्।

योनिशब्दस्योक्तनिर्वचनस्यापि स्थितित्वसम्बन्धेन लिङ्गान्तरत्वख्यापनार्थमाह अभियुत[8]:, अनीत्य[9] स्थितो[10] वैनां योनिं स्त्रिया गर्भ इति। योनिशब्दो मन्त्र उभयलिङ्गो दृष्टः।

समुद्रं वा प्र हिणोमि स्वां योनिम्[11]।
अयं ते योनिर्ऋत्वियः[12]।

तदुभयप्रदर्शनार्थमुभय[13]यथा[14] निरुक्त इति । तस्या[15] एवोक्तविभागाया उषस एषापरा, अनन्तरा ऋग्भवति ।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
एकोनविंशः खण्डः[16]। ]

---

१—उषार्थं उष० D. २—'र्थमुत्पन्नेत्य' इति त्रुटितम् B.C.
३—क्वासौ सा D. ४—'सवाय' नास्ति D.
५—०न्दता प्र० D. ६—०त्रि आदित्यसका० D.
७—०देशं माता D. ८—०ति न स० B. C.
९—अति० B. C. १०—हि इत्यस्थि० D.
'अभीत्य' इति पाठः स्यात् अभिव्याप्येत्यर्थः।
११—[ अथ० १०।५।२३। वेदे तु 'वा' इत्यस्य स्थाने 'व:' इत्येव पाठः। १२—[ऋ० ३।२९।१० ]
१३—०भया प्र० B. १४—'उभयथा' त्रुटितम् D.
१५—अत्र केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते। स चेत्थम्—
"दुर्गवृत्तौ-'यथा प्रसूता प्रकर्षेण सूता प्रसवमनुप्राप्ता। सूतिशब्दः प्रसवार्थः । रात्रिरादित्यस्य प्रसवाय आदित्योत्सृष्टे देशे जायते, एवमेव रात्रिरुषसोऽपि जन्मार्थं योनिं स्थानमवकाशम्-उषस आत्मलाभायारैक् आरेचयति ददातीत्यर्थः। यथोषा आदित्यस्य जन्मनो हेतुस्तदनन्तरत्वादेवं रात्रिरुषसो जन्मनो हेतुरित्येवमस्यामृचि रात्रेरेवापरः काल उषःसंज्ञित इति गम्यते। स्थानं योनिशब्देनोच्यते । यद्धि यस्मिन्निधीयते तत्तेन साकं युतं भवति । मिश्रीभूतमित्यर्थः। इयमपीतरा स्त्रीयोनिरेतस्मादेव । किं कारणम् ? अभियुतो हि गर्भं एनां भवति। आमिश्रीभूतमि- ('त इ' मु० पा०) त्यर्थः' एवं दुर्गः।"
१६—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

भवतीति स्मृतौ कृतविचारः। अस्मिंश्च[1] पक्षे निगममपि दर्शयति।

अमूर्या यन्ति जामयः सर्वा लोहितवाससः।
अभ्रातर इव[2] योषास्तिष्ठन्ति हतवर्त्मनः[3] ॥

अयमाथर्वणे[4] वेदे मन्त्रः। स्त्रीणां लोहितवाहक[5]व्याधि[6]व्यावृत्त्यर्थे कर्मणि विनियुक्तः। अमूः-एता लोहितधाराः सिरा[7] वा, यायान्ति[8]-अति सुष्ठु वहन्तीत्यर्थः। जामयः-भगिन्यः, एकस्मात्[9] स्त्रीयोनिप्रदेशाज्जातत्वात्[10]। ताः सर्वा लोहितवाससः-लोहितस्य वर्णस्य वासयित्र्यः[11], लोहितवर्णा इत्यर्थः। यथा अभ्रातृका योषाः, याः[12] उत्पन्नास्तत्रैव पितृकुले सन्तानकर्मणे पिण्डदानाय च तिष्ठन्ति,[13] तद्वत्तिष्ठन्त्यनेन कर्मणा। हतवर्त्मनः[14]-हतवहन[15]-मार्गाः स्थेयासुः, मा[16]स्रास्नुरित्यर्थः। अभ्रातृकाया अनिर्वाहे अबहिर्गमने औपमिक उपमाप्रयुक्तः[17]। तरयोतरा भूयसे। पुंस एतीत्यर्थे[18] भूयस्त्वम्।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
चतुर्थः खण्डः।[19] ]

---

१-अस्तिंश्च C.
२-इतीव B. C.
३-[ cf. अथर्व० १।१७।१ ] '०वर्चसः' इत्यपि पाठः B. ०वर्त्तसः C. अमूर्या यान्ति० हतवर्त्मसः D.
४-०णवे० D. ५-०वाहे D.
६-'व्याधि' द्विर्लिखितम् C. D.
७-'सिरा' द्विर्लिखितम् C.
८-'या' नास्ति D. 'यायन्ति' इति भाति।
९-एतस्मा० B. C. १०-०त्वाच्च D.
११-आच्छादयित्र्य इत्यर्थः। वसित्र्य B. वसित्र्यं C. विचित्र्यो D.
१२-यत B. C.
१३-अत्र वाक्य एकवचनान्त एव पाठः। D.
१४-वर्मसः C. वर्त्मसः D.
१५-'न' त्रुटितम् D.
१६-बाहु० D.
१७-०प्रयक्तं B.
१८-एधीत्यर्थः B. C.
१९-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न निर्दिष्टा।

## [ अथ पञ्चमः खण्डः । ][1]

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥[2]

कक्षीवत आर्षम् । यथा[3] अभ्रातृका स्त्री[4] येभ्य उत्पन्ना, तानेव पुंसः पितॄन्, एति-[5] गच्छति, सन्तानकर्मणे पिण्डदानाय च । एवमुषा यत उत्पन्ना तमेवादित्यं गच्छति, तत्रैव प्रलीयते[6] इत्यर्थः । प्रतीची-प्रत्यग्गामिनी, गर्तारुगिव-[7]यथा[8] दक्षिणापथे क्वापि प्रदेशे अपुत्रा अपतिका वा अपस्मारा[9] रोहिणी स्त्री, सनये लाभाय, धनानाम्, भर्तुः स्वभूतानां, सर्वलोकप्रकाशमास्फारं[10] गच्छति तद्वत् । जायेव पत्ये-द्वितीयार्थे चतुर्थी, पतिम् । उशती-कामयमाना, सुवासाः-निर्विशङ्कं[11] परया प्रीत्या युक्ता गच्छति तद्वत् । किञ्च[12] हस्रेव-यथा हसनशीला स्वदन्तान् निरिणीते-रिणातिर्गतिकर्मा, निः[13] प्रकर्षे, अन्तर्नीतण्यर्थश्चायम्,[14] प्रकर्षेण गमयति प्रकाशयति ज्ञापयतीत्यर्थः । एवमुषा निरिणीते[15] । किम् ? अप्सः-रूपं कृत्स्नस्य जगतः ।

गर्तारोहिणीति ताच्छील्ये क्विप् 'अन्येभ्योऽपि दृश्यन्ते'[16] इति । गर्तारोहिणीति भाष्ये ताच्छीलिकेनार्थप्रदर्शनात् । दक्षिणाजी[17]-दक्षिणां दिशं देशं वा अजिता गता जाता वा तत्र दक्षिणाजी, तस्या अपत्यं स्त्री दाक्षिणाजी । दक्षिणेन[18] वा कितवानां गच्छतीति । गर्तः-सभास्थाणुरित्यभिधेयकथनम्,[19] अक्षनिवपनपीठः[20] । सभास्थानमिति[21] पाठान्तरम्[22] । सभा च द्यूतसभा कितवस्थानम् । गृणातेरिति[23] निर्वचनम् । सत्यसंगर[24] इति धात्वर्थोप-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न निर्दिष्टः ।
२–[ ऋ० १।१२४।७ ] 'अभ्रातेव० अप्सः' इत्येव प्रतीकम् D.
३–यत्र D. ४–स्त्रि C.
५–'एति' नास्ति D. ६–प्रतीय० C.
७–कर्त्ता D. ८–'यथा' त्रुटितम् D.
९–आस्पारो रो० B. C.
१०–०स्पारं B. ०स्मारं D.
११–०शंकया D.
१२–'किञ्च' नास्ति D.
१३–'निः' त्रुटितं भाति D. अग्रे 'प्रकर्षेण' इति पाठः ।
१४–०र्णीत० C. ०र्हित० D.
१५–इदं वाक्यं नास्ति D.
१६–[ पा० ३।२।७५ ]
१७–दक्षिणा० B. C. १८–०क्षिणो वा D.
१९–'न' त्रुटितम् D. २०–अन्तरिक्ष० B. C.
२१–०नवी C. २२–सहा० B. C.
२३–[ धा० ९।२८ ]
२४–०रो भवति D.

पत्तिवचनम् । सत्यं हि[1] तत्र[2] संगीर्यते । कथम् ? पुनर्दे[3]विष्यामिति कृतमा[4]तृहस्तग्रहणादिना कृत[5]शपथोऽपि[6] व्यसनेनैवाकृष्यमाणो गीत्य[7] शपथं[8] खादयित्वा दीव्यत्येव कितवः, सङ्कुर इत्यन्ये पठन्ति, संकीर्यते हि तत्र सत्यमनृतेनानेव विधेन । तं गर्तं तत्र या[9] अपुत्रा अपतिका सारोहति । दक्षिणापथे किलैवं[10] क्वचिद्देशधर्मः । कितवानां दक्षिणत आस्पारे[11] तिष्ठति । तत्राक्षैरा[12]घ्नन्ति, सा रिक्थं लभते पतिबन्धुभ्यः । यो वा तां प्रथममाहन्ति स वैनां गृह्णाति[13] । सा च धनं लभत इति ।

शब्दसारूप्यात् प्र[14]सक्तमाह-श्मशानसंचयोऽपि गर्त उच्यते गुरतेरपगूर्णो भवति[15] । श्मशानसञ्चयोऽपि गर्तः, गुरतेर[16]पगूर्णो भीषणः । यद्वा अमङ्गलत्वात्तं प्रत्युद्यम[17]नं गमनं[18] न भवत्यतोऽपगूर्णो गमनवर्जित इत्यर्थः । श्मशानं श्मशयनम्, यकारलोपेन[19] सवर्णदीर्घत्वेन च श्मशब्दस्याभिधेयमाह-श्म[20] शरीरम्, तत् शृणातेर[21]र्थपौष्कल्यात् । शम्नातेर्वा[22] यदा कदाचित् शाम्यति हि तत् । प्रसङ्गादाह-श्मश्रु लोमेत्यर्थकथ[23]नम, श्मनि शरीरे श्रितमिति निर्वचनम् । लोम-लुनातेः[24], लूयते हि तत् । लीयतेर्वा[25] श्लिष्टं हि तत् । श्मशानस्य गर्तवाच्यत्वे निगमः ।

'नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद् गर्तेष्ठाः स्यात् ।
प्रमायुको यजमानः[26]' इत्यपि निगमो भवति[27] ॥

यूपस्यातिष्ठ[28]प्रदेश उपर उच्यते । तमेव[29] प्रदेशं पांसुभिश्छादयन्नास्य किञ्चित् प्रकटं कुर्यात् । यदि कुर्याद् गर्तेष्ठाः श्मशानप्रतिष्ठ इत्यर्थः । पुरा आयुषः[30] प्रमायुको मरण-

१–स हिं B. C. २–तत् D.
३–०नस्ते वि० D. ४–०मात्र० B.
५–'कृत' द्विर्लिखितम् C.
६–०थो हि अनेनै० D. ७–गीत्या D.
८–०थमु D. ९–त D.
१०–०लैव D. ११–आस्फारे D.
१२–०त्राक्षेणा० C. १३–पृणाति D.
१४–'प्र' इति त्रुटितम् B. C.
१५–इदं मूलवाक्यं नास्ति C. D.
१६–[ cf. धा० ६।११७ ]
१७–०त्युध्वध्वम० D.
१८–'गमनं' नास्ति B. C.
१९–यलोपेन D. २०–'श्म शरीरम्' त्रुटितम् D.
२१–[ cf. धा० ९।१८ ]
२२–[ cf. धा० ४।९२ ] शम्मति० B. C.
२३–०त्यर्थः । कथं B.
२४–[ cf. धा० ९।१३ ]
२५–[ cf. धा० ४।३१ ]
२६–[ cf. मैत्रा० सं० ३।९।४ cf. काठकसं० २६।६ ]
२७–इदं मूलवाक्यं नास्ति C. D. 'नोपरस्येत्यादि' इत्येव प्रतीकम् D.
२८–०स्यानष्ठ० B. C. २९–तमवटे पां B. C.
३०–पुरुषः D.

धर्मा यजमानः स्यात् । प्रसङ्गादाह-रथोऽपि गर्त उच्यते, गृणातेः स्तुत्यर्थस्य, स्तुततमोऽश्वा[2]-दिभ्यो यानेभ्यः सुखगमनेन । 'वनस्पते वीड्वङ्गः'[3] इत्यादौ स्तुतत्वात्[4] । उदाहरणम् ।

हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च[5] ॥

श्रुतविदं आर्षम्[6] । हिरण्यरूपमुषसो व्युष्टौ व्युच्छन[7]वेलायाम्, अयःस्थूणम्-अयोमयी स्थूणा[8] अतिस्थूला[9] वा यस्य तम्[10] । उदिता-उदय[11]वेलायाम् । सूर्यस्य आरोहथो युवां हे[12] वरुण ! हे मित्र ! गर्तं रथमात्मीयम् । अतश्चानन्तरमिति शेषः । चक्षाथे-पश्यथः । अदितिं दितिञ्च[13] । दीङ्[14] क्षये, क्षीण[15]मक्षीणञ्च कर्म । अथवा अदितिं दितिं चेति ददातेरेते[16] रूपे, अदातारं दातारं च हविषाम् । लोकपालौ[17] हि मित्रावरुणौ, यश्च यत् करोति शुभमशुभं वा तत्सर्वं पश्यथः । अस्मिन् मन्त्रे चतस्र उपमाः । अभ्रातृकाविषयस्यैव द्रढिम्नः कारणमाह-नाभ्रात्री-[18]मुपयच्छेत गृह्णीयात्, यस्मात्तोकमपत्यम[19]स्याः[20] पितुरेव तद् भवति न गन्तुर्भर्तुः ।

अथवा नाभ्रात्रीमुपय[21]च्छेत, अपत्यलिप्सया । उक्तकारण[22]त्वाद् दृष्टार्थत्वेन[23] प्रतिषिध्यते । एवं प्रतिषेधः प्रत्यक्षः । पितुश्च पुत्रभावः । पूर्वत्रोभयमानुमानिकम्[24] । एवम्-अभ्रातृको वाद इत्यपरे-इत्येतद्दर्शनमवस्थितम् । ततश्च 'शासद् वह्निः' इत्ययमर्धर्चोऽभ्रातृमतीविषय एव व्याख्येयो न दुहितृमात्रविषय इति निश्चयः ।

इदानीमस्मिन् दर्शन उत्तरार्ध[25]र्चो व्याख्यायते । कदा पुनर्दुहितुः पुत्रभावं शास्ति नप्तारं चावगच्छति तस्याः पुत्रे[26] उच्यते । पिता यत्र-यस्मिन् काले, दुहितुः सेकम्-सेक्तारं

१-[ cf. धा० ९।२८ ]
२-०ममश्वा० B. ०तमश्वा० C.
३-[ ऋ० ६।४७।२६ निरु० ९।१२ ]
४-स्तुतवान् D.
५-[ ऋ० ५।६२।८ ] पूर्वार्धं एव प्रतीकत्वेन निर्दिष्टः D.
६-०विदार्षं० B. C. ७-व्युष्टन० D.
८-०मयीं स्थूणां B. ९-'अति' द्विर्लिखितम् B
१०-त B. C. ११-उदित० D.
१२-'हे' नास्ति B. C.
१३-'दितिं' त्रुटितम् C.
१४-[ धा० ४।२६ ] उन्दि क्षये B दीङ् क्षिक्षये C.
१५-क्षिणमक्षि० C. १६-[ cf. धा० ३।९ ]
१७-०पालनौ B. १८-नाभात्रिमुभ० C.
१९-'अपत्यं' नास्ति B. २०-अस्यै B. C.
२१-०मुभय० C.
२२-प्रकरणत्वा B. C.
२३-अत्र सर्वेष्वादर्शपुस्तकेषु 'दृष्टार्थं न प्रतिषिध्यते' इत्येव पाठः । परमर्थविरुद्धत्वात्सोऽस्माभिर्नादृतः ।
२४-०नुभाविक० B. C.
२५-०त्तरोर्ध० D.
२६-अत्र 'पुत्रः' इत्यस्य स्थाने 'पुत्रम्' इति पाठो युक्तः

रेतसः, ऋञ्जन-अर्जेरिदं[1] रूपम्, प्रार्जयति[2] जामातरं प्रतिगृह्णातीत्यर्थः। समित्युपसर्गो दधन्वे[3] इत्याख्यातेन सम्बध्यते[4]। तदेवं[5] व्यावृत्तानपत्यदुःखत्वात्, शग्म्येन[6] सुखतमेन मनसा[7] संदधन्वे[8] जामात्रा सह। अभ्रातृकामिमां तुभ्यं दास्यामि, अस्यां यो जनिष्यते गर्भः स[9] मम स्वधाकर इत्येवं रूपमात्मनः सन्धानं करोमि। यतश्चाभ्रातृकाविषयं दायादत्वम्, अत एवैतां वक्ष्यमाणामृचं जाम्या भगिन्याः स्त्रियाः सामान्येन भगिनीमात्रस्य रिक्थ[10]प्रतिषेधे अदायादत्वे उदाहरन्ति। अतोऽपि गम्यते पुत्रिकैव दायादेति। प्रथमकृतायां तु पुत्रिकायां यद्यौरस[11] उत्पद्येत, तदा[12] तत्रापि ज्येष्ठांशभागित्वं पुत्रिकाया इत्येके स्मरन्ति।

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः[13] ॥

इत्यन्ये।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
पञ्चमः खण्डः।[14] ]

---

१–[ धा० १।१८९ ] ऋते० B. अर्त्तं० C. अंजे० D.
२–प्राजय० C. प्रार्जयन् D.
३–'न्वे' नास्ति B. दधनु C.
४–'सम्बध्यते' नास्ति D.
५–तदेव B. C.
६–संशग्म्ये० D.
७–'मन' त्रुटितम् B,
८–०धध्वे D.
९–'स' नास्ति D.
१०–रिक्त० C.
११–यत् द्यौर० C.
१२–तदा नास्ति B. C.
१३–[ मनु० ९।१३४ ]
१४–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

## [ अथ षष्ठः खण्डः । ][1]

न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम् ।
यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन्[2] ॥

न, जामये-भगिन्यै, तान्वः-तनुभवः औरसः पुत्र इत्यर्थः । रिक्थं-पित्र्यं धनम्, आरैक्[3]-प्रारिचत्[4] प्रादात् ददातीत्यर्थः[5]। किन्तर्हि ? चकार-करोत्येनाम्, गर्भम्-षष्ठ्यर्थे द्वितीया । गर्भस्य निधानं स्थानं सनितुः संभक्तुः, तस्या एव स्वभूतस्य भर्तुरित्यर्थः । कुतः ? उच्यते, यदि[6]-शुद्धोऽप्ययमपिशब्द[7]सहितस्यार्थे द्रष्टव्यः[8], यद्यपि मातरः-'पिता मात्रा'[9] इति पितुः शेषे प्राप्ते छान्दसो मातुः शेषः, द्विवचनस्य[10] स्थाने बहुवचनम्, मातापितरौ जनयन्त[11] जनितवन्तौ । वह्निम्-वोढारं स्वभार्यायाः पुमांसं स्त्रियश्चेति शेषः । तथा चाह भाष्य-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो नास्ति ।

२–[ ऋ० ३।३१।२ ] 'न जामये० ऋन्धन्' इत्येव प्रतीकम् D. एतत्प्रतीकानन्तरं केवलं D. पुस्तके व्याख्यारम्भात्प्रागेव माधवीयमेतदृचो व्याख्यानमुद्धृतं वर्तते । तथाहि—

"श्रीमाधवीये-अभ्रातृकादुहितुः पुत्रिकाकारणात् सा रिक्थभाक्, इत्युक्ताभ्रातृमत्यास्तस्या रिक्थभाक्त्वं नास्तीति ब्रूते । तान्वस्तनूज औरसः पुत्रो जामये भगिन्यै रिक्थं पित्र्यं धनं नारैक् प्रेरयति न प्रददाति । किन्तर्हि ? सनितुरेनां भजमानस्य भर्तुः गर्भं षष्ठ्यर्थे द्वितीया गर्भस्य निधानं रेतः सेकनिधानीं चकार पाणिग्रहणेन संस्कृतामेनां करोति, न तु तस्यै रिक्थं ददातीत्यभिप्रायः ।

'असंस्कृता च संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः । भगिन्यश्च निजादंशाद्दत्वांशं तु तृतीयकम् ॥'

इति याज्ञवल्क्यस्मरणात् । स्त्रीपुंसलक्षणस्यापत्यस्यैकोत्पाद्यत्वात् पुमपत्यस्य को (?) विशेषं दर्शयति-यदि यद्यपि मातरौ मातापितरौ वह्निः । अवह्निः स्त्री । वह्निः पुमान् । स्वभार्याया वोढृत्वात्, अवह्निश्चावह्निः (?) तादृशं स्त्रीपुंसलक्षणमपत्यं जनयन्त जनयत तथापि तयोर्मध्येऽन्यः पुंलक्षणः सुकृतः शोभनस्य पिण्डदानादेः कर्मणः कर्ता भवति । अन्यः स्त्रीलक्षण ऋन्धन् वस्त्रालंकारादिना ऋध्यमान एव भवति । पिण्डदानादिकर्तृत्वात् पुत्रो दायादा (?) र्हः । दुहितुस्तथात्वेपि न दायार्हता । सा तु केवलं परस्मै दीयते ॥ एवं माधवः ॥"

३-अरे प्राक् B. आरे प्रात् C.

४–प्रारिजत् B. C.

५–न ददा० D.

६–'यदि' त्रुटितम् D.

७–'शब्द' नास्ति D. ०ब्दः स० B. C.

८–दृश्यते D.

९–[ पा० १।२।७० ]

१०–चने बहु० D.

११–०यन्तु B. C.

कारः-वर्हिं पुत्रमवह्निश्च स्त्रियमिति । तथाप्यन्य एकः कर्ता-सन्तानकर्मणः, तयोः सुकृतोः शोभनस्य कर्मणः कर्त्रोः[1] । कतरः ? पुमान्, ततश्च स दायार्हः[2] । अन्यः-परस्तु[3], ऋन्धन्-वस्त्रालङ्कारादिदानेनाराध्यते[4] च, न च केवलं दीयते परस्मै । कतरः ? स्त्री । ततश्च सा न दायार्हा[5] । अतोऽस्या अनर्हत्वान्न ददाति । जामिः कस्मात् ? अन्ये असगोत्रा अस्यां[6] जनयन्तीति जामिः । जीनं[7] क्षीणं पुत्रिकापेक्षयाऽपत्यं जामिः । जमतेर्वा[8] स्याद् गत्यर्थस्य । निर्गमनप्राया हि सा[9] भवति । प्रायवचनं[10] पुत्रिकाभिप्रायम्, सा हि न निर्गच्छति । पितृकुलएवावतिष्ठत इति ।

इति महेश्वरविरचितायां निरुक्तभाष्यटीकायां
अष्टमस्या-( तृतीयस्या- ) ध्यायस्य
प्रथमः पादः[11] ।

———

[ इति षष्ठः खण्डः[12] ]

———

१—कर्ता B.
२—दायादार्हः B.
३—अपरस्तु D.
४—०ने दाप्यते B. C.
५—दयादार्हा B.
६—'न' त्रुटितम् B. C.
७—जानं D.
८—[ धा० १।४९९ अयमद ] नार्थः । निघण्टौ जमतिर्गतिकर्मसु पठितः ।
९—निर्गमप्राया भवति D.
१०—अत्र 'प्रायोवचनं' इति युक्तः पाठो भवेत् ।
११—'इत्यष्टमस्य प्रथमः पादः' इत्येव D.
१२—नास्त्यादर्शपुस्तकेषु ।

# [ अथ तृतीयोऽध्यायः ।

## द्वितीयः पादः ।[21] ]

अपत्यसम्बन्धादाह-मनुष्यनामान्युत्तराणि पञ्चविंशतिः-मनुष्या नर[1] इत्यादीनि । विशो हरय इत्यादिषु साधारणश्रुतिषु[2] लिङ्गात् मन्त्रवाक्यपदान्तरसम्बन्धसामर्थ्यान्निर्णयः[3] कर्तव्य इत्युक्तम् । धातुजत्वप्रतिपत्त्यर्थमाह-मनुष्याः कस्मादिति । मत्वेत्यादि, मतेः सिवेश्च[5][6] द्विधातुजत्वं[7] प्रदर्शयति । ज्ञात्वा-अनेनेदमिति-साध्यसाधनभावं कर्माणि सीव्यन्ति तन्वन्ति[8] न[9] यथा पश्वादयः । मनस्यमानेन[10] वा प्रजापतिना सृष्टाः । मनस्यतिः कस्मिन्नर्थ[11] इत्याह-मनस्वीभावे । प्रशंसायां मत्वर्थीयः । प्रशस्तं[12] मनः प्रसन्नं सत्त्वप्राधान्यात् । अतः प्रसन्नमनस्केन सृष्टा इत्यर्थः । तथा च श्रुतिः-'स पितॄन् सृष्ट्वाऽमनस्यत् तदनु मनुष्यानसृजत'[13] इति । नित्यपक्षेऽप्यसति[14] स्रष्टरि, कार्ये सौमनस्यं दृष्ट्वा कारणमनुमास्यते, कारणानुविधायित्वात् कार्यस्य । 'मनोर्जातौ'[15] इति वैयाकरणाः । जातिश्च प्रत्ययान्तोपाधिः । मनोरपत्यं जातिश्चेत्यतौ । अपत्यमात्रविवक्षायामणेव-मानव इति ।

मनुषो वा षकारान्तमेव[16] प्रातिपदिकमस्ति, एतदन्ताद्[17] व्युत्पादयति, न प्रत्ययसन्नियोगेन षुगिति स्मरणान्तरम्[18] । विनापि प्रत्ययेन षकारान्तत्वप्रयोगदर्शनात्[19] । 'समि॑द्धो अ॒द्य मनु॑षो दुरो॒णे'[20] इति व्याख्यास्यते मन्त्रः ।

---

१–नरा B. C.
२–०रणा श्रु० D.
३–०न्धासाम० D.
४–०तु तत्व० D.
५–[ धा० ४।६७,८।९ ] मनेः D.
६–[ धा० ४।२ ] सिदेवश्च D.
७–०तु त्वं दर्श० D.
८–मं तन्व० D.
९–'न' त्रुटितम् D.
१०–मन्यस्य० C.
११–'कस्मिन्' द्विर्लिखितम् D.
१२–शस्तः म० D.
१३–[तै० सं० २।३।८।३ cf. 'स''' पितॄनसृजत''' स देवान्त्सृष्ट्वामनस्यतेव तेन मनुष्यानसृजत' मै० सं० ४।२।१ ]
१४–०त्यवः क्षप्य० B. ०प्यति स्र० D.
१५–मनोर्जातावञ्यतौ षुक् च [Fragment of पा० ४।१।१६१ ]
१६–षान्त० D.
१७–अतदन्तद् C. अतस्तदन्तं D.
१८–'स्मरणम्' इत्येव B. C.
१९–षान्त० D.
२०–[ ऋ० १०।११०।१ निरु० ८।५ ]
२१–नास्त्यादर्शपुस्तकेषु ।

तत्र पञ्चजना इत्येतस्य[1] सन्दिग्धस्य विवेकार्थं निगमाः । सन्देहश्च मनुष्यमात्रनामसु[2] पाठात् । पञ्चशब्दश्च[3] जनशब्देन समानाधिकरणः[4] । तत्र यदि देवदत्तादिमनुष्यविषयः स्यात्[5], गन्धर्वादिपञ्चकविषयो वा, न मनुष्यमात्रनामविषयताऽस्य स्यात्[6] । मनुष्यमात्रनामैतदित्याचार्यमतम्[6], तत्सिद्ध्यर्थं मतान्तरप्रदर्शनाय पदद्वयमिदं मनुष्यपदार्थे वर्तत इति वैचित्र्यप्रदर्शनार्थं उपन्यासः ।

ननु मनुष्यमात्रनामत्वे[7] पञ्चशब्दस्य परिमाणावधृतसंख्येयविशेषविषयता प्रसिद्धा बाध्येत[8] ? उच्यते । अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयस्त्वात् अश्वजकर्णादिवत्[9] बासायामप्यदोष[10] औपमन्यवदर्शनेन पञ्चजनशब्दो[11] न समानाधिकरणो[12] मनुष्यसन्ततिविषयोऽन्वर्थप्रायो[13] मनुष्यनामत्वेन च[14] द्रष्टव्यः । एकीयमतेन चाष्टौ देवनिकाया उच्यन्ते । तत्र पक्षे नागानां गन्धर्वेषु, यक्षाणामसुरेषु, पिशाचानां रक्षस्वन्तर्भावादष्टत्वाविरोधः ।

[ इत्यष्टमस्या-( तृतीयस्या-)[15] ध्यायस्य
सप्तमः खण्डः । ]

---

१–इत्यस D.
२–मनुं मनु० B.
३–०ब्दस B.
४–सामानाधिकरण्यः D.
५–०यत्वात् सात् B. C.
६–०ष्यनाममात्रना० B. C.
७–'ष्य' त्रुटितम् B. C.
८–बाध्यते B.
९–अजकर्णायमप्यादि D.
१०–बाधादिया० C. बाधोयम० D.
११–'जन' त्रुटितम् D.
१२–०करणे D.
१३–०न्वर्षं प्रा० D.
१४–'च' नास्ति B. C.
१५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न निर्दिष्टा ।

# [ अथ अष्टमः खण्डः । ][1]

तदद्य वाचः[2] प्रथमं मसीय येनासुराँ अभि देवा असाम ।
ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम् ॥

सौचीकस्याग्नेर्विश्वेषां देवानां संवादः । होतृजपश्चायम् । तदद्य-अस्मिन् कर्मणि, वाचो[3] मध्ये, प्रथममुत्कृष्टं स्वरसौष्ठवार्थसतत्त्वदेवतादिविशिष्टम् । मसीय[4]-जानीयाम, येन ज्ञानेना[5]सुरान् यज्ञविघ्नं कुर्वतः, हे देवाः ! अभ्यसाम अभिभवेम । किञ्च यूयमपि हे ऊर्जादः ! अन्नादाः ! उत-अपि, यज्ञियासः-यज्ञस्य सम्पादयितारः । पञ्च[6]जनाः-आचार्यस्य[7] मतेन ऋत्विग्भूमनुष्याः । औपमन्यवस्य निषादस्थपतिः,[8] इष्टौ[9] निषादानां यज्ञसम्पादित्वमस्ति । शूद्रस्याप्योदनसवे-'आयुरसि'[10] इति शूद्राय[11] प्रयच्छति, 'तत्ते प्रयच्छामि'[12] इति शूद्रः प्रतिगृह्णातीत्येवमादि । तथा 'दासी[13] पिनष्टि[14] पत्नी वा'[15] इत्यादेर्व्यापारादस्त्येव[16] यज्ञियत्वम्[17] । एकीयमतेन पञ्चयज्ञाङ्गभूता देवगन्धर्वादयः साधनभावेन यज्ञसम्पादिनः । अत उच्यते, मम होत्रं-होतृकर्म, [ जुषध्वम्-सत्कुरुतेत्यर्थः । अन्ये मन्यन्ते-यदेकीयमतं यच्चौपमन्यवस्य तदुभयमप्याचार्यस्येति । तथा च मन्त्रव्याख्यानम् ऊर्जादो ब्राह्मणादयः, यज्ञिया देवगन्धर्वादयः सर्वेऽपि मम होत्रं स्वेन स्वेन व्यापारेण सेवध्वमिति । असुरा असुरताः स्थानेषु[18] ] स्वेषु, उत्कृष्टोत्कृष्ट[19]तरस्थानान्तरलिप्सायामसंपद्यमानायाम् । अस्ता वा क्षिप्ताः[20]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न निर्दिष्टः ।

२–[ ऋ० १०।५३।४ ] 'तदद्यवाचः प्रथमं० जुषध्वम्' इत्येव प्रतीकम् D.

३–वाच C. वाचं D.

४–मसिय B. C.

५–'नेन' त्रुटितम् C.

६–'ज' त्रुटितम् C. ७–'स्य' नास्ति D.

८–निषादस्य निषादस्य प्रति B. निषादस्य पति C.

९–ष्टौ B. ष्टौ C. अष्टौ D. अत्रार्थानुसारित्वात् 'इष्टौ' इत्येव पाठोऽस्माभिरादृतः । D. पुस्तके 'स्थपतिरष्टौ' इत्यमानुपूर्वी वर्तते । तत्र रेफेकारमात्रा लेखकप्रमादान्नष्टा स्यादिति सम्भावयामः । B. C. पुस्तकयोस्तु 'रि' इत्येव नष्टं स्यात् ।

१०–[ अथर्व० २।१७।४ । तै० ब्रा० २।७।७।७ ] आसि B. C.

११–शूद्रप्राय B. C.

१२–[ तै० ब्रा० २।७।७।७ ] पृच्छामि B. C.

१३–दासि विन० B. C. १४–पत्ती D.

१५–[ अनुपलब्धमूलमिदं वचनम् ]

१६–दस्त्वेव B. C. १७–यज्ञीयं० D.

१८–[ ] एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः B. C.

१९–'तर' त्रुटितम् D.

२०–क्षिप्याः D.

स्थानेभ्यो लोकेभ्यः। 'ते देवा असुरान् प्राणुदन्त'[1] इति श्रुतेः। अस्यन्त इत्यसुराः 'असेरुरन्'[2] औणादिककर्मसाधनः। अपि वा असुरिति प्राण उच्यते, स ह्यस्तः[3] शरीरे[4], रो मत्वर्थीयः, भूम्नि चायम्[5]। अत आहतेन तद्वन्त इति।

सम्प्रति ब्राह्मणोक्तं निर्वचनं प्रदर्शयति-सोः[6] प्रशस्ताद्देशात् देवानसृजत तत्सुराणां[7] सुरत्वम्। 'मुखाद्देवानसृजत'[8] इति विज्ञायते। एवम्, असोः-अप्रशस्ताद्देशादसुरान्[9]। 'जघनादसृजत' इति विज्ञायते[10]। ऊर्ध्वश्च नाभेः पुरुषस्य मेध्यत्वस्मरणात्[11]।

ऊर्गित्यन्ननामसु पठितमपि[12] निर्विवक्षयाह-ऊर्जयति[13] बलं करोतीति, सतः कर्तरि पक्वमिति वा पकारलोपं कृत्वा शब्दं व्यत्यस्य[14] वकारस्योठि[15] कृते रुगागमे च ऊर्गिति भवति। सुप्रवृक्णमिति[16] वा, व्रश्चेरशब्दलोपे[17] कृते संयोगादिलोपे च वकारस्योठि[18] रुकि कुत्वे च ऊर्गिति[19] भवति। सुच्छेदं हि तद् भवति, मृदुत्वात्, सुसंस्कृतत्वात्. निषादः कस्मात्? निषद्य हन्तीति निषादः, प्राणिवधजीवकः, प्रतिलोमजन्मा कश्चित्। निषण्णम्[20], निशब्दः[21] प्रकर्षे, प्रकर्षेण सन्नं[22]गतं व्यवस्थितं पापकमिति[23] नैरुक्ताः। सौधन्वना रथकारा निषादशब्दवाच्या इत्यन्ये। 'वर्षासु रथकारस्य'[24] 'एतया निषादस्थपतिं याजयेत्'[25] इत्येवमादि-

---

१–[ cf. ताण्ड्य० ब्रा० ९।२।११ असुरा वा एषु लोकेष्वासँस्तान् देवा ऊर्ध्वसद्मनेनैभ्यो लोकेभ्यः प्राणुदन्त। ]
२–[ उणा० १।४३ ]
३–अस्तः क्षिप्त इत्यर्थः।
४–'रे' त्रुटितम् D.
५–वायम् B.। मतुबर्थनिरूपणावसरे—
'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥
इति मतुप् [ पा० ५।२।९४ ] सूत्रे भाष्यकारः।
६–'सोः' त्रुटितम् D. ७–'सुरा' द्विर्लिखितम् B.
८–[ तै० ब्रा० २।२।९।७ ]
९–'देशात्' नास्ति D.
१०–[ cf. तै० ब्रा० २।२।९।४ स जघनादसुरानसृजत ] 'विज्ञायते' नास्ति D.
११–'त्व' त्रुटितम् C. मध्येत्व० D.
१२–०मपीति B. C. १३–०यात वां जेति D.
१४–शब्दव्यत्ययस्य D.
१५–'वकारस्य' नास्ति D.
१६–सुवृक्णमिति व्या० D. १७–वृत्तेश्चेरकश० D.
१८–वस्योठि D. १९–ऊर्गिरिति B. C.
२०–निषन् B.
२१–'शब्दः प्रकर्षे' त्रुटितम् D.
२२–संण्णं D. संगतं B. २३–पापमि० D.
२४–द्रष्टव्यम्-पूर्वमीमांसाशाबरभाष्ये [ ६।१।४४-५० ] का० श्रौ० कर्कभाष्ये [ १।१।९ ] ऋभूणां त्वेति रथकारस्य [ cf. तै० ब्रा० १।१।४।८ ]
२५–[ का० श्रौ० १।१।१२ ] स्थले कर्कभाष्ये द्रष्टव्यम्। योज० D.

दर्शनात्। 'सौधन्वना ऋभवः'[1] इति मन्त्रवर्णात्[2]।

सम्प्रत्यसाधारणं मनुष्यमात्रनामत्व एव निगमं दर्शयति।

यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत।

अस्तृणाद् बर्हणा विपो३र्यो मानस्य स क्षयः[3]॥

प्रगाथस्यार्षम्[4]। यत्-यदा,-पाञ्चजन्यया-पञ्चजनेषु मनुष्येषु भवया विशा[5], स्त्रीलिङ्गनिर्देशो जात्यपेक्षः, मनुष्यजातेरित्यर्थः[6]। अथवा-ब्राह्मणादीनि चत्वारि मनुष्यजातीनि[7], निषादः सर्वापसदोपलक्षणार्थः[8]। एतावन्तश्च मनुष्याः। अतः पञ्चस्वपि मनुष्यजातिषु भवया[9] विशेति, पञ्चभिरपि मनुष्यजातैरित्यर्थः[10]। इन्द्रे-वृष्ट्यर्थे[11] वर्षे भट्टारकदेवेत्येवमा[12]दयो घोषाः-शब्दाः, असृक्षत-सृज्यन्ते[13], तदा अस्तृणात्-स्तृणाति[14] आच्छादयति कृत्स्नं जगत्, बर्हणा-परिवृद्धेन वर्षेण। विपः[15]-मेधाविनामैतत्, मेधावी। अर्यः-ईश्वरश्चेन्द्रो यतः, मानस्य गर्वस्य[16] पूजायाः, स क्षयः[17]-निवासः। एवञ्चाकुर्वतः कीदृशो [18]गर्वः कुतो वा पूजा।

अथवा-मानं निर्माणं तस्य निवास आश्रयः कारणमिन्द्रः। स चासति वर्षे [19]न शक्तः किञ्चिदपि निर्मातुम्। पञ्च-इति निर्वाच्यम्[20], पृक्ता-इति[21] निर्वचनम्, संख्या इति विषयकथनम्, सम्बन्धात् सर्वलिङ्गैरित्याह-लिङ्गत्रययोगेऽप्यविशिष्टेति।

ननु षडादीन्यप्यविशिष्टानि? उच्यते, प्रत्ययोपात्तरूढ्यर्थसम्बन्धस्वार्थाभिधानाददोष इत्युक्तम्। अपि च न या पृक्ता[22] सा पञ्चेति, किन्तु या पञ्च सा पृक्तेति[23]।

---

१–[ ऋ० १।११०।४। cf. ३।६०।४ ]

२–०वर्णाः B.

३–[ ऋ० ८।६३।७ ] 'यत्पाञ्चजन्यया विशेन्द्रे ह (क्ष) यः' इत्येव प्रतीकम् D.

४–प्रमाथस्या० D. ५–पिशा B.

६–'रि' त्रुटितम् B. C. अत्र ०'जातैः' इति तृतीयान्तपाठो युक्तः स्यात्।

७–०जातानि B. C.

८–०पशदो० B. C. ०पशब्दो० D. अयं 'अपसद' शब्दः संकरजातिपर्यायः [ See मनुः १०।८ ] अधमपर्यायो वा दन्त्यमध्य एव दृश्यते। अतस्तालव्यमध्योऽस्माभिर्नादृतः।

९–भरया D. १०–०जातेरि० D.

११–०र्थे च व० D. १२–हट्टार D.

१३–सृज्यते B. C.

१४–'स्तृणाति' त्रुटितम् D.

१५–विपत् B.

१६–गन्धर्वस्य D.

१७–संक्षयः B.

१८–गन्धर्वः D.

१९–वर्षेण B. वर्षेण न D. २०–हि ऋच्यम् B. C.

२१–वृक्ता इनि B. ०क्ता इनि C.

२२–वृक्ता B.

२३–वृक्तेति B.

मनुष्यसम्बन्धा[1]दुच्यते-अथ[2] बाहुनामान्युत्तराणि द्वादश आयती, च्यवाना, इत्येवमा[3]दीनि । सन्दिग्धविचारा[4] निगमा[5]श्चोपेक्ष्या[6]: । प्रबाधते-निष्ठां गमयत्याभ्यां कर्माणीति बाहुः ।

एतत्सम्बन्धादेवाङ्गुलिनामान्युत्तराणि द्वाविंशतिः, अग्रुवः-अण्व्यः-इत्येव[7]मादीनि[8] । अग्रगामिन्यः-अग्रे गच्छन्तीति, हस्तस्य पूर्वं वा कर्मसु[9] व्यापारं गच्छन्ति । अग्रशब्दाद्-कारेफावाद्य[10]न्तौ कृत्वा गमेराद्यन्तविपरीतस्य मकारगकारौ[11] मध्ये उपधाव्यापत्त्या अकारस्योकारः, रेफस्य लत्वम् , इकारो नामकरणस्ताच्छील्ये इति रूपसिद्धिः । उत्तरेष्वपि निर्वचनेषु वर्णाक्षर[12]लुप्तिर्यथार्थं योजनीया । अग्रेण गा[13]लयन्त्युदकानि । प्रथमं वा कार्याणि कुर्वन्ति । अङ्कना वा-अङ्को लेखा[14]दिस्ताभिः क्रियते । धान्यराशिर्वाङ्क्य[15]ते । अञ्चते[16]रङ्कनाः, अञ्जते[17]र्वा, अभ्यञ्जनादेव, सममन्धकारेऽपि अभ्य[18]ञ्जते, ताभिः स्पृश्यत इति शेषः ।

उक्तमनेकनिर्वचनप्रयोजनमादावेव शास्त्रस्य । तासामेषा । किमर्थम ? अवनिशब्दस्य नदीपृथिव्योः, कक्ष्याशब्दस्य रज्ज्वाम्, योक्त्रशब्द[19]स्य योजनशब्दस्य चाध्वपरिमाणे, अभीशुशब्दस्य च बाह्वोः, एवमर्थान्तरप्रसिद्धानामिहाङ्गुल्यर्थतां प्रदर्शय[20]न्नाह ।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
अष्टमः खण्डः ।[21] ]

---

१—०धादित्युच्य० D.
२—'अथ' नास्ति C. D. ३—०मादि D.
४—विकारा B. C. ५—०राश्चेत्यापे D.
६—उपेक्ष्या विचारणीया अन्वेषणीया वेत्यर्थः ।
७—इत्यादीनि D. ८—'इति' नास्ति D.
९—'वा कर्मसु' नास्ति B. C.
१०—'न्तौ' त्रुटितम् C. ११—मगौ D.
१२—वर्णान्तर D.
१३—अग्रेणाल० B. C.
१४—लेखादिः B. 'दि' त्रुटितम् C.
१५—वाक्येते C. वाक्यते D.
१६—[ धा० १।२०३, ९१५ ]
१७—[ धा० ७।२१ ]
१८—भ्यञ्जिष्यते B. C.
१९—'रज्ज्वाम्, योक्त्रशब्दस्य' त्रुटितं भाति D.
२०—'प्रदर्शयन्ती आह' इति युक्तः पाठो भवेत् । अस्य हि कृदन्तक्रियापदस्य, वाक्यादावेव पठितं 'तासामेषा'-इत्यत्र 'एषा' इति कर्तृपदम् । अन्यथा वाक्यानन्वयापत्तेः । इदानीं तु तासामङ्गुलीनां प्रतिपादिका एषा ऋक् अवन्यादीनां नद्यादिनामभिः सन्दिग्धानामङ्गुल्यर्थतां प्रदर्शयन्ती आह इत्यन्वयः संगच्छते ।
२१—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न निर्दिष्टा ।

# [ अथ नवमः खण्डः ।][1]

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।

दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥[2]

ग्रावस्तुतिरेषा । अर्बुदस्यार्षम् । दशावनयोऽङ्गुलयो ग्राहकत्वेन सम्बन्धिन्यो येषामभिषवग्राव्णां[3] ते दशावनयः । ता एव दशकक्ष्यास्थानीया[4] योक्त्रस्थानीया योजनस्थानीया, अभीशवो रश्मयः, तत्स्थानीयाश्च तत्कार्यकरत्वात्ताद्दशकक्ष्यादिशब्दैरुच्यन्ते[5] । सर्वत्र चतुर्थी द्वितीयार्थे, तान्[6] अर्चत स्तुत । अजरेभ्यः-जरावर्जितान् । कियन्तः[7] ? उच्यते[8] दश ।

ननु[9] अभिषवग्रावाणः पञ्च, दशशब्देन बहुत्वमात्रप्रतिपादनपरेणावयवलक्षणया पञ्च[10] प्रतिपाद्यन्ते । किं कुर्वतः ? उच्यते, धुरो दश, प्रथमातृतीयार्थे, धूर्स्थानीयाभिर्दशभि[11]-रङ्गुलीभिः[12] । युक्ताः[13]-प्रथमा द्वितीयार्थे, युक्तान् । वहद्भ्यः-वहतः[14], स्वकर्मण्यभिषवाख्ये व्याप्रियमाणानीत्यर्थः[15] ।

अवनयोऽङ्गुलयः, अवन्ति[16] गच्छन्ति कर्माणि प्रति । कक्ष्याः प्रकाशयन्ति-अनुष्ठानेन फलेन वा कर्माणि । ख्यतेः[17] कक्ष्या इत्युक्तनिर्वचनम् । योक्त्राणि योजनानीत्यादि निगदव्याख्यातम्[18] । अभीशवो हि व्याप्नुवन्ति[19] कर्माणि । धूः-धूर्वतेर्वधार्थस्य[20] । ध्वरति धूर्वति इति[21] वधकर्मसु पाठात् । धूर्वन्ति घ्नन्ति उपक्षेपयन्ति[22] कर्माणीत्यर्थः । इयमपीतरेति-सारूप्यप्रसङ्गादाह[23], युगादि-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न निर्दिष्टः ।

२–[ ऋ० १०।९४।७ ] 'दशावनिभ्यो दशकक्ष्येभ्यः० वहद्भ्यः' इत्येव प्रतीकम् D.

३–'षव' त्रुटितम् B.

४–०क्षावस्था० D.

५–०त्तादिश० B. ६–ताः C.

७–क्रियन्तः B. 'कियतः' इति युक्तः पाठः ।

८–उच्यन्ते B. C.

९–न तु D. १०–सप्रपञ्चं B. प्रपञ्च C.

११–भू D.

१२–०लिभिः D.

१३–युक्तान् D.

१४–वहत्रः B. C.

१५–०णानित्य० C.

१६–[ cf. धा० १।६३१ ]

१७–[ cf. धा० २।५१ ] ख्यायतेः D.

१८–०ख्यानम् D.

१९–भिव्या० D. 'व्या' त्रुटितम् C.

२०–[ निघ० २।१९ ]

२१–'इति' नास्ति D.

२२–०क्षेप० D. 'प' त्रुटितम् B.

२३–'प्र' त्रुटितम् B. C.

सम्बन्धीनि[1]। विहन्ति वहं स्कन्धमनडुहोऽश्वस्य वा । धारयतेर्वा[2] धूः, धार्यते हि सा[3] बलीवर्दैः । अङ्गुलयोऽपि धार्यसुवर्णनवोपलादीनि[4] धारयन्तीत्युभयप्रकारेण निर्वचनम्[5]।

कान्तमप्यङ्गुलीभिरेव[6] क्रियत इत्याह-कान्तिकर्माण इच्छार्था धातव आख्यातान्यष्टादश, वश्मि-उश्मसि-इत्यादयः।

काम्यानां प्रथममन्नमित्याह[7]-अन्ननामान्युत्तराण्यष्टाविंशतिः, अन्यः-वाजः-इत्यादीनि । वाजः पय आदीनामन्यसाधारणानामर्थाद्[8] विशेषाध्यवसायः। अन्नसानतं जातमात्रेभ्यो भूतेभ्य उपनतं कर्मवशात्। आनमेर्निर्ह्रसितोपसर्गस्यान्नम्[9]। अत्तेर्वा[10], अद्यतेऽत्ति च तस्मादन्नम्।

तदन्नसम्बन्धादेव-अत्तिकर्माणो धातवो दश, आवयति भर्वतीत्यादयः । अत्र-बब्धाम्[11]-इति पृथक्पाठे प्रयोजनं मृग्यम्।धात्वन्तराभिप्रायं वा। धातूनाम[12]धातुजत्वात्सर्वत्र प्रश्नानुपपत्तिः।

अन्नसम्बन्धाद् बलनामान्युत्तराण्यष्टाविंशतिः, ओजः-पाजः-इत्यादीनि[13] । बलं बिलेन व्याख्यातम्। बिल[14]शब्दश्च[15] सप्तमे निरुक्तः[16]-'बिलं भरं भवति बिभर्त्तेः' [17]इति।

बलवतां धनसम्बन्धादाह-धननामान्युत्तराण्यष्टाविंशतिरेव। पूर्वैस्तुल्यसंख्यात्वादेवकारः। मघं रेक्ण इत्यादीनि। सर्वधनाभिप्रायश्चैतत्[18], हिरण्यस्य विशेषेणोक्तत्वात् । धिनोति[19] प्रीणयति हि तद् दृश्यमानमपि किमङ्ग पुनर्भज्यमानम्।

धनविशेषत्वाद् गवामाह-गोनामान्युत्तराणि नव[20], अघ्न्या-उस्रा-इत्यादीनि । निरुक्तत्वाद्[21] गोशब्दस्य प्रश्नाभावः[22]।

---

१–०न्धीनी C.
२–[ cf. धा० १।९४८ ] ३–स C. सा च D.
४–'र्ण' त्रुटितं भाति C. ०सवर्णनलोपलादि D.
५–'च' त्रुटितम् C. ६–०लिभि० C.
७–'आह' नास्ति D. ८–'नाम' त्रुटितम् B. C.
९–अनमेन्निर्ह्रि० C. अनमेनिर्षसितोपसर्जस्या० D.
१०–[ धा० २।१ ] 'अद्यतेऽत्ति च भूतानि, तस्मादन्नं तदुच्यते' [ तै० उ० २।२ ]
११–बभ्याम् B. C. १२–धातुना० B. C.
१३–इत्यादि D. १४–बल D.
१५–शब्दस्य B.
१६–०क्तम् B.
१७–[ निरु० २।१७ ] इदं निर्वचनवाक्यं नास्ति D.
१८–०र्वथाभि० B. ०र्वधाभि० C.
१९–हिनोति प्रण० D.
२०–'नव' नास्ति D.
२१–[ निरु० २।५ ]
२२–प्रश्नभावः B.

गोमिनां धनवतां च क्रोधः सम्भवतीत्याह-क्रुध्यतिकर्माणो धातवो दश[1],-रेळते-हेळते-इत्यादयः।

क्रुध्यतिसम्बन्धात् क्रोधनामान्युत्तराण्येकादश, हेळः हरः-इत्यादीनि । इच्छानिमित्त-श्चेतसः कालुष्यं क्रोधः, स च सत्त्वभूतः, अतो[2] नामानीत्याह।

क्रोधः प्रायेण गमनहेतुरित्याह-गतिकर्माण उत्तरे धातवो द्वाविंशं शतम्, वर्तते अयते-इत्यादयः, चलन[3]देशान्तरप्राप्ति[4]सामान्याद् गमिनात्रा[5]पदिश्यन्ते । तथाहि-वर्तते चक्रम्, लोटते कुसूलम्, कसति पयः, सर्पति गोधा, स्रवत्युदकम् इत्यादीनां शब्दमाहात्म्य-निबन्धनो भेदः।

चलनस्यैव प्रतीतिः प्रायेण क्षिप्रगत्यादि[6]गुणत्वादेवाह[7]-क्षिप्रनामान्युत्तराणि षड्विंशतिः, नु[8] मङ्क्षु-इत्यादीनि। गुणस्य चैतानि क्षिप्रस्य[9], तद्वतो वा सत्त्वस्य[10]। तथा च 'भुरण्युः शकुनिः' इति वक्ष्यति[11] । क्षिप्रं संक्षितोऽल्पीकृतः, विकर्षो दूरचिरत्वलक्षणः, चिरकाल[12]-साध्यमल्पेन[13] क्रियते यत् तत् क्षिप्रम्। क्रियावयवानां द्रुतकारण[14]त्वात्।

क्षिप्रसम्बन्धादन्तिकत्वस्याह[15]-अन्तिकनामान्युत्तराण्येकादश, तळित्, आसात्[16]-इत्यादीनि। अन्तिकमा[17]नीतमिव, तत्सन्निकृष्टत्वात्।

सन्निकृष्टानामेव संग्रामो भवतीत्याह-संग्रामनामानि षट्चत्वारिंशत्, रणः, विवाक्[18], विखादः-इत्यादीनि। संग्रामः संगमनात्, एकीभवन्ति तत्र सैनिका युध्यमानाः कचाकचि। संगरणाद्वा-ना[19]म गोत्रादेः संशब्दनात् । संगतौ ग्रामौ समूहौ सैनिकानामिति । ग्रामशब्दः

---

१–'दश' नास्ति D.
२–भूतमतो B. 'त अ' त्रुटितम् D.
३–चलनं B.
४–प्राप्त D.
५–०मिमात्रावादि० B. ०नात्रोप० C.
६–०त्यादीनि B.
७–०त्वादाह B.
८–अत्र 'पाके' इत्यधिकः पाठः B.C. किञ्च C. पुस्तके 'नु' स्थाने 'उ' पाठः।
९–हिप्रस्य D.
१०–सवस्य D.
११–[ निरु० १२।२२ ]
१२–'चिरकाल' त्रुटितम् D.
१३–०ल्पेनि B. C.
१४–दूत० B. C.
१५–०त्वस्यह B. ०त्वस्याह D.
१६–आरात् B.C.
१७–०क नामानित० B.
१८–पाकः C. 'विवाक्' इत्यस्याग्रे 'जवतुः' इत्यधिकः पाठोऽस्ति D.
१९–'ना' त्रुटितम् C.

समूहवचनः, वणिग्ग्रामादिप्रयोगदर्शनात् । वाजसाता[1]वित्यादीनामन्नसदनोद[2]कादि-साधारणानां प्रदर्शनार्थमाह-तत्र खल इत्येतस्य सञ्चयस्थाने प्रसि[3]द्धस्य संग्रामविषयत्वेन निगमा भवन्ति । तेष्वपि प्रदर्शना[4]र्थं कश्चिदुदाह्रियते ।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
नवमः खण्डः[5] । ]

———

१–०समादीना० C. B.

२–'द' त्रुटितम् D. ०दकारादि० B. C.

३–प्रसिद्धया D.

४–प्रथमार्थं D.

५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न निर्दिष्टा ।

## [ अथ दशमः खण्डः । ][1]

अभी३दमेकमेको अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति ।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥[2]

इन्द्रो[3] वैकुण्ठः[4] स्वसामर्थ्यमाचष्टे । अभिराख्यातेन[5], अभ्यस्मि-अभिभवामि, इदं सर्वमहम् । कथम् ? एकन्तावदेक एव । निष्षाट्-निःशब्दोऽत्र प्रकर्षे[6], निःशुक्लो नीरक्त[7] इति यथा । सहिरभिभवे[8], प्रकर्षेणाभिभविता सपत्नानाम् । अभी[9] द्वा-अभिभवामि द्वावप्येवम् । किमु त्रयः करन्ति किं मे त्रयोऽपि कुर्वन्ति । त्रीनप्येक एवाभिभवामीत्यर्थः । खले न[10] पर्षान्[11]-यथा खले पर्षान्, 'पॄ पालनपूरणयोः'[12] इत्यस्येदं रूपम् । कर्षस्य पूरयितॄन् गोधूमादीन् बलीवर्दः पादैः, एवं प्रतिहन्मि भूरि बहूनपि, ईदृशं सन्तं किं मा निन्दन्ति शत्रवोऽनिन्द्राः, अविद्यमानो[13] ज्ञेयतया[14] इन्द्रो येषु ते, ममेन्द्रस्याज्ञातार इत्यर्थः । मत्तो[15] वा इन्द्रादन्ये[16], अन्यस्येन्द्रत्वाभावादेव[17][18], मत्तो न्यूना इत्यर्थः । अथवा अनिन्द्राः-अनायकाः ।

एवन्तु व्याख्यायमाने घोटारूढस्य[19] विस्मृतो[20] घोट[21] इत्येतदापद्यते । खलशब्दस्य संग्रामवचनस्य निगमप्रतिज्ञानात् सस्यसंचयस्थानवचनस्य च दृष्टान्तत्वेनोपन्यासात् पूर्वमुत्तरेण[22] न संगच्छते । अतोऽन्यथा व्याख्यायते-अभिभवामीदं शत्रुसैन्यमेकमेव, युद्धैकरसमित्यर्थः । एकोऽहमसहाय एव । कथम् ? निष्षाट्[23]-निष्षहमाणः, सहिरभिभवे, तेन चात्र तत्पूर्वकत्वाद् वधो लक्ष्यते, निष्कृष्य घ्नन् । अभी[24] द्वा-अस्मीत्यनुषङ्गः, द्वेधाभूतानपि[25] सैनिकान् घटाद्वयसन्निवेशेन[26] व्यूढसैन्यानपि[27][28] अभ्यस्मि, किमु[29] त्रयः-किञ्च मम

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भो न निर्दिष्टः ।
२-[ ऋ० १०।४८।७ ] 'अभीदमेक० निन्द्राः इत्येव प्रतीकम् D.
३-'ऐन्द्रः' इत्यपि पाठः B. ४-देवकुण्ठ C.
५-'अस्मि इत्यनेन सम्बध्यते' इति शेषः ।
६-०त्रापक० C. ७-निरुक्त० B.C.
८-सहातिभ० B. सहर० C.
९-अभि B.C. १०-'न' त्रुटितम् C.
११-वर्षान C.
१२-[ धा० ३।४ ]
१३-'अ' त्रुटितम् D. ०माने B.
१४-'यत' त्रुटितम् B. १५-उक्तो D.
१६-०दन्यो D. ०न्द्रान्ये C.
१७-इन्द्रस्ये० B. १८- भवा० C.
१९-घोढा० C. २०-विस्तृतो B. C.
२१-योट B. घोड C. २२-'वैमु' त्रुटितम् C.
२३-निष्षट् D. २४-अभि B. C.
२५-०तानभि D. २६-घाद्व० C. पटाद्व० D.
२७-व्यूह० D. २८-न्यान्यपि C.
२९-किर B.C.

त्रयोऽपि कुर्वन्ति। बहुधापि[1] व्यूहरचनावस्थिता:[2] किं मां कुर्वन्ति। दर्पादाक्षिपन्नित्यं मम रोमाण्युत्पाटयितुं न शक्नुवन्तीत्य[3]भिप्रायः। खले न-सम्प्रत्यर्थे नकार: संग्रामे। पर्षानिति पर्षच्छब्दस्य संघातवाचिनो विकृतनिर्देशश्छान्दसत्वात्। संघातान् प्रति हन्मि, भूरि बहूनपी[4]त्यादि समानम्।

आचार्यस्यायमभिप्राय:-न शब्दः सम्प्रत्यर्थे नोपमायाम्। यत आह-खल इति संग्रामनामेति। प्रसङ्गाच्चान्यार्थप्रदर्शनम्-अयमपीतर इति। यत्तु-खल इव पर्षान्[5]-इति वचनम्, न[6] तदुपमानप्रदर्शनार्थम्। किन्तर्हि? प्रसिद्धसम्प्रत्यर्थेनेव[7] शब्देनास्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः। इहेव निधेहीति यथा, इति[8] सम्प्रत्यर्थे प्रदर्शयितुम्। तथा 'सुविदुरिव'[9] इति वाक्यपूरणत्वेन प्रयोगः। लोकेऽपि[10] च-क इव दोष:-इति। तस्मादुपक्रमोपसंहार[11]गतेरुपपन्नमेतद् व्याख्यानम्।

पूर्वत्रापि व्याख्याने ग्रन्थ[12]मित्थं नयन्ति[13]-तत्र खल इत्येतस्य संग्रामनामसु[14] पठितस्यान्यत्रापि निगमा भवन्ति। अन्यत्र चेदमुदाहरणमभिहितम्। खल इति संग्रामवचनस्य तावन्नि[15]र्वचनम्। अयमपीतर इति, इतरस्यान्यस्य धान्यखलस्येति। तदेतद् यदि संगच्छते, तथाऽस्तु[16]।

एकपदनिरुक्तम्-एक इता संख्या, इतेति निर्वचनम्, संख्येत्यभिप्रायवचनम्। इता अनुगता उत्तरां संख्याम्। एकत्वप्रचयमात्रं हि द्वित्वादिसंख्या। द्वौ द्रुततरा इतरेतरेत्यर्थः, एकस्याम्[17]। त्रयस्तीर्णतमा, द्वावेकं चापेक्ष्य।

सम्प्रति प्रसङ्गादाह-चत्वारश्चलिततमा, पूर्वापेक्षया। पञ्च व्याख्याता[18]-पृक्ता संख्येति।

---

१-'अपि' नास्ति B.C.

२-व्यूह्य स्थिता: D.

३-'इति' नास्ति B.C.

४-०नवीत्या० B.C.

५-अत्रादर्शपुस्तकेषु 'वर्षान्' इत्येव पाठः, परमस्माभिरसंगतत्वादुपेक्षितः।

६-'न' त्रुटितम् भाति B.C.

७-०नैव० B.C.

८-इहि B. C.

९-[ काठ० सं० ८।३॥८।१३ निरु० १।१०] उदाहृतः। सुदिवुरिति वा B.

१०-लोपि च ( प B. ) B. C.

११-०संचार० D.

१२-श्रन्थ० B. ग्रन्य० C.

१३-नयति B.C.

१४-वचनसु B.

१५-वाव D.

१६-तथास्त ( स्थ C. ) B. C.

१७-एकस्मात् C. D. अत्र 'एकस्याः' इति युक्तः पाठो भवेत्।

१८-[ निरु० ३।८ ]

षट् सप्त च व्याख्यास्यति । 'षट् पुनः सहतेः, सप्त सृप्तेः'[2] इति । अत एतावुत्सृज्य अष्टा-वश्नोतेः[3] । व्याप्नोति हि[4] सा पूर्वाः संख्याः[5] । नव-न वननीया, असंभजनीया,[6] अमङ्गल्या हि सा, यतो लोकस्तां परिहरति । नावाप्ता वा, दश संख्यां न प्राप्तेत्यर्थः[7] । नव वननीयेति, पूर्वापेक्षया बहुत्वात् स्तवनीयेत्यर्थः । दश दस्ता[8], उपक्षीणा, दशान्तैव हि संख्या यतः[9] । एकाद्युपचयेन दश संख्यायां[10] एवावृत्तेरेकादशादिसंख्योपजनः । विंशत्यादयश्च दशावृत्तिरूपा एव दृष्टार्था वा, सर्वत्र [11]एषैव दृश्यते उत्तरासु । ततश्च पश्यतेर्वा[12] दश, दंशयतेर्वेत्यर्थः[13] ।

विंशतिः-द्विर्दशभिः । द्विरावृत्तैर्दशभिर्विंशतिः । द्विर्दशादिति पाठान्तरम् । द्विरावृत्तो दशवर्गो[14] विंशतिः । द्विर्दशत इत्यपि पाठान्तरम्[15], दशतो दशवर्गस्य द्विरावृत्तिरिति ग्रन्थ-योजना । अर्थस्तु स एव । द्विर्दशेति तु समञ्जसम्[16] । शतं दशदशतः, दशदशवर्गः[17] शतम् । सहस्रं सहस्वत् सहो बलं तत्संख्येये दृष्टं संख्यायामध्यस्यते । अभिभवति हि सहस्रं पूर्वं संख्याः । अयुतमित्यादि, तत्तत् सहस्रादि दशकृत्वोऽभ्यस्तम्[18] । कुत एतत् ? शते दशकृ-त्वोऽभ्यासस्य दर्शनात्, दशसंख्यायाश्च दृष्टार्थत्वात्, तदुपचयमात्रात्मकत्वाच्चा[19]-युतादीनाम्[19] ।

सम्प्रत्यर्बुदशब्दनिर्विवक्षया सारूप्यादम्बुदशब्दं[20] निराह-अम्बुदो मेघो भवति । अरणमम्बु अर्तेः[21], बुर्नामकरणः[22], तस्मिन् गुणे रपरत्वे च रेफस्य मकारः, तद्दः । अम्बरो मेघ इति पाठे अम्बुराद्युकारस्याकारः[23], रातेश्चार्थं ददातिना दर्शयति, तद्ददातीत्यर्थः । सारूप्यादेवाम्बर[24]शब्दमन्तरिक्षवचनं निराह । निरुक्तस्य च प्रयोजनम्-यन्नासत्या परा-वति । यद्वास्थोऽध्यम्बर[25] इति नानात्मकत्वान्निर्वचनभेदः । अम्बुमद्भ्रातीति[26] वा, राजतेरर्थे

---

१-[ निरु० ४।२७ ] २-[ निरु० ४।२६ ]
३-[ धा० ५।१८ ] ४-'हि' नास्ति D.
५-पूर्वसंख्याः B. C.
६-'असंभजनीया' नास्ति B. C.
७-'प्रा' त्रुटितम् C. ८-'द' त्रुटितम् C.
९-पयतः B. १०-यथा वृ० B. C.
११-'एषा' नास्ति B.
१२-[ cf. धा० १।१०३७ ]
१३-[ cf. धा० ४।१०४ ]
१४-'व' त्रुटितम् B. C.
१५-०न्तरे B. C. १६-०ञ्जसः C. D.
१७-'दश' त्रुटितम् B. १८-०त्वो न्यस्तः D.
१९-'य' 'यु' इति त्रुटितम् C.
२०-'शब्दं' नास्ति B.
२१-[ cf. धा० १।९८३ ]
२२-बुन्नाम० D.
२३-रात्युका० D.
२४-०वान्तर० D.
२५-'अधि' नास्ति B. मध्यम्बर D.
२६-०वद्भ्रा० C. D.

भातिनाऽऽचष्टे । खच्छस्तिमितसरोऽम्बुवदवभासते, कलितोपमानं[1] चैतत् । यथा—

पुञ्जीकृतमिव ध्वान्तमेष भाति मतङ्गजः ।
सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोज्झितम्[2] ॥

परमार्थतः स्वरूपमवकाशम् । अम्बुमद्[3] भवतीति वा, रो मत्वर्थे, सः अम्बुदोऽम्बरो वा खेनावयवेन यथा[4] महान् क्रमेणोपचीयमानो बहुना व्यापी अपर्यन्तधारा[5]त्मना भवति वर्षन्, तद्वद[6]र्बुदं क्रमेणोपचीयमानं महद् व्याप्तृ च, पूर्व[7]संख्यानां संख्ये[8]यधर्मेणायमपदेशः ।

खल इति संग्रामनाम, खलतेर्वा[9] मथनार्थस्य, मथ्यन्ते हि[10] तत्र योधाः, स्खलतेर्वा, स्खलन्ति हि तत्र योधाः । अयमपीत्यादि, एतस्मादेव खलतेः । तत्रापि हि[10] संमथ्यन्ते क्षुद्यन्ते[11] सस्यानि । स्खलन्तीति[12] वा, स्खलन्ति[12] त्वरमाणास्तत्र कर्षकाः[13] । समास्कन्न इति निर्वचनान्तरम् । संप्राप्तो ह्यसौ[14] मृज्यमानो[15] धान्यकणैः[16] । इतरस्मिन्नपि दुर्जने समानम् । स[17] हि साधून् मथ्नाति, स्खलयति वा दोषदृष्टिपर[18]त्वात् । अन्यथा सन्तमर्थमन्यथा भाषमाणः श्रेयसो वा प्रस्खलति[19] भ्रश्यते[20] । समास्कन्नो वा पापेन ।

संग्रामे परस्परं व्याप्तेः व्याप्तिकर्माण उत्तरे धातवो दश, इन्वति नक्षत्या[21]दयः । शाकपूणेरतिरिक्ता एते-विव्याक विव्याच[22] उरुव्यचाः विप्र[23] इति व्याप्तिकर्माणः । तेषु द्वे नामनी आख्यातशङ्का व्यावृत्त्यर्थमाह-आन्नाणः, आपानः एतयोरर्थमशिना आपिना चाचष्टे शानजन्तेन क्रमेण-आरनुवान आप्नुवान इति ।

तत्र व्याप्तानां वध इति वधकर्माणो धातवस्त्रयस्त्रिंशत्, दभ्नोति श्नथतीत्यादयः । तेषु वियात इत्येतन्नाम इति शेषः । तस्य शब्दसमाधिमर्थं चाचष्टे-वियातये[24]यत इति वा वियातयेति वा, विविधं याति शत्रूनिति वियाता[25], तस्य सम्बोधनम् । विपूर्वस्य यातयतेर्वा शो

---

१–कल्पितोपमं D.
२–[ अनुपलब्धमूलमिदं वचनम् ]
३–०वद् B. C. ४–यदा D.
५–'धारा' द्विर्लिखितम् B.
६–०दम्बुदं B. D. ७–पूर्वकं D.
८–संख्यान D.
९–[ धा० १।५।७८ ] अयं सञ्चयार्थः । खजतेः B. C.
१०–'हि' नास्ति D. ११–हुद्यन्ते D.
१२–०लय० D. १३–कर्मकाः B. C.
१४–'हि' नास्ति D. १५–मृद्यमानो B. C.
१६–करणैः B. C. १७–'स' त्रुटितम् D.
१८–'पर' नास्ति B. C. १९–०लयति D.
२०–दृश्यते भ्रस्यते D.
२१–ननक्षेत्या० B. C.
२२चिव्याच D.
२३–विवृ D.
२४–'यत' त्रुटितम् D. ०तरिति वा B. C.
२५–'ता' त्रुटितम् B.

प्रत्यये वियातरिति[1]। वियातयेति वा वियातरिति चेति[2] पाठान्तरम् । यथा चायमेवं तडिदाखण्डलशब्दावपि[3] नामनी । तत्राखण्डलशब्दस्यात्र वक्तव्यस्य तडिच्छब्दात् पूर्वं निगमेन नामत्वं[4] दर्शयति ।

शाचिगो शाचिपूजनायं रणाय ते सुतः ।
आखण्डल प्र हूयसे[5]

इरिम्बिठेरार्षम् । शचीति कर्मनाम[6], तत्रभवा शाची । गौः-स्तुत्याख्या वाक्, शाची गौर्यस्य[7] स शाचिगुः । छान्दसत्वात् पुंभावो[8] ह्रस्वत्वञ्च[9] । तयैव[10] शाच्या यः[11] पूज्यते[12] स शाचिपूजनः[13], तत् सम्बोधनं हे शाचिगो ! हे शाचिपूजन ! अयं रणाय संग्रामार्थं ते तव स्वभूतोऽयं, सुतः-अभिषुतोऽस्माभिः सोमः । अतः हे आखण्डल ! आखण्डयितः शत्रूणाम्, प्रहूयसे-प्रकर्षेण हूयसे[14] त्वमस्माभिः । शाचिगो शाचिपूजनेत्येतत्सामानाधिकरण्यादिन्द्रस्य चाखण्डलकृतसम्बन्धान्नामत्वं[15] वधकर्मत्वञ्च,प्रतीत्या आखण्डयितरिति ।

तडिदित्यन्तिकवधयोः, नामेति वाक्यशेषः । यतश्चैतदेवमतोऽन्तिकवधलक्षणे[16] कर्मणि अस्य तत्संसृष्टकर्म । संसृष्टनामेति[17] पाठान्तरम् । अत्र स्वशब्देनैव नामत्वं साधारणत्वं चोक्तं भवति । ताडयतीति[18] सत इति वधकर्मनिर्वचनम् । इतरत्र ताडयतिरेव सन्निकर्षार्थ[19]त्वात् । सन्निकर्षार्थस्य निर्वचनम् ।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
दशमः खण्डः ।[20] ]

---

१-अस्याग्रे D. पुस्तके 'वा वियातये रावति तस्य सम्बोधनम्' इति भ्रष्टविपर्यस्तवर्णमात्रः पाठः । B. C. पुस्तकयोस्तु 'प्रत्यये' इत्यनन्तरमेव 'धारयः पा ( वा C. ) रय इति वक्तव्य-(नास्ति C. ) स्य सम्बोधनम्' इति पाठोवर्तते ।

२-वेति B. C.

३-तथाख० D.    ४-वा सर्वे D.

५-[ ऋ० ८।१७।१२ ] 'शाचिगो शाचिपूजना० प्र हूयसे' इत्येव प्रतीकम् D.

६-[ निघ० २।१ ]    ७-गौरस्य C.

८-पुं त्रुटितम् D.    ९-०त्वस्य D.

१०-'एव' नास्ति D.    ११-०च्यार्थः B.

१२-आज्यके B. C.    १३-जनम् B.

१४-भूतः D.    १५-चचलकृती B. C.

१६-तयश्चै० C.

१७-'संसृष्ट' त्रुटितम् D.    १८-ताल्हय० B. C.

१९-कृष्टार्थत्वात् । जीकेर्षा० D. अत्र 'सन्निकर्षार्थः' इति युक्तः पाठो भवेत् ।

२०-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ एकादशः खण्डः । ][1]

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।

या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥[2]

गृत्समदस्यार्षम्[3]। त्वया सहायेनानुगृह्यमाणा[4][5] वेति वाक्यशेषः[6]। वयं सुवृधा-वृधिरन्तर्हितण्यर्थः[7], शोभनेन[8] वर्धयित्रा, हे ब्रह्मणस्पते ! स्पार्हा-स्पृहणीयानि वसूनि, मनुष्या-पञ्चम्याः स्थान आकारः[9], मनुष्येभ्यः सामर्थ्यात् शत्रुभूतेभ्यः, आददीमहि[10] गृह्णीम इत्यर्थः। किञ्च या नः-अस्माकम्, दूरे तळितो[11] या अरातयः, दूरे शब्दसन्निधानात् दूरान्तिकवर्तिनश्च शत्रोर्विनाशस्या[12]काङ्क्षितत्वात् तळिदित्यत्रान्तिकनाम, तात्स्थ्यात्ताच्छब्द्यम, अन्तिकस्थाश्च याः। स्त्रीलिङ्गनिर्देशात् अरातिर्जायते[13] इत्यभिप्रायः। अभिसन्ति-अभिभवन्ति, सामस्त्यार्थो वास्तिः, याः काश्चन सन्ति सर्वास्ताः। जम्भय[14]-नाशयेत्यर्थः। अनप्नसः[15]-अप्न[16] इति रूपनाम, अरूपाः प्रनष्टसर्वरूपाः कुर्त्वे[17]त्यर्थः। अरातयः-अविद्यमानदानक्रियाः, अन्यमपि[18] वा ददतं[19] वारयन्ति[20] ताः, अदानप्रज्ञाः[21]।आप्नोतेरप्नः[22], तद्धि कृत्स्नमाश्रयं व्याप्नोति।

विद्युत्तडिद् भवतीति शाकपूणिः। तथा लोकप्रसिद्धेः। तत्रापि[23] वधकर्मत्वमेवोरीकृत्य[24] प्रवृत्त इति दर्शयति-सा ह्यवताडयति जनस्य चक्षूंषि,यस्य चोपरि निपतति हन्ति[25] च। दूराच्च दृश्यत इति अन्तिकनामत्वाभावं दर्शयति। अपि त्विदमित्यादि,अपिः सम्भावनायाम् तुशब्दो वधकर्मपक्षात् पक्षान्तरं दर्शयितुम्, इदमिति बुद्ध्याधिकरणवक्ष्यमाणमन्त्र[26]विषयम्[27], तडिन्नाम[28] पदापदेशार्थम्, एवशब्दोऽवधारणे, अभिप्रेतामिति निर्विचिकित्सावचनम्। दूरे

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न दृश्यते ।
२–[ ऋ० २।२३।९ ] 'त्वया वयं० अनप्नसः' इत्येव प्रतीकम् D.
३–०दार्षम् D. 'आर्षम्' नास्ति B. C.
४–'ना' त्रुटितं भाति B. ०नानुपगृ० D.
५–०माणान् B. C. ६–'वाक्य' नास्ति D.
७–०रन्तर्नी ( र्णी C. ) त० B. C.
८–शोभेन B. शोभने C. ९–०कारम् B. C.
१०–०दद्न्रिमही C. ११–तद्रियातो C.
१२–शत्रुर्विनाशश्चा० D. १३–०तिजातप D.
१४–जम्भया भयनाशा० B.
१५–अनप्ससः C. १६–मनप्र B. अनप्र C.
१७–'कुरुत' इत्यपि पाठः B. कृते० C.
१८–अन्यदपि B. C. १९–तद D.
२०–पारय० B. २१–०न प्रजाः B. C.
२२–रप्नम् B.
२३–तत्रासि B. C. २४–वोदुकृ० B. C.
२५–अन्ति D. २६–०तिक० C.
२७–०मन्तर्वि० B. ०मन्तवि० C.
२८–तडिदिन्नाम B. 'तडित्' नास्ति C.

चित् सन्निधानात् अन्तिकनामत्वं तडितो निर्विचिकित्सितम् । सोऽयमाचार्यमतान्तर[2]-वचनोपन्यासः[3]-विद्युत्तडिदिति-स्वमतमेव द्रढयितुम् । सर्वसाधारणशब्देषु निगमः पदान्तरसम्बन्धसामर्थ्यान्निश्चयप्रतिपत्त्यर्थम्, न पुनर्मतान्तरं दर्शयितुम् ।

यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन्तळिदिवाति रोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव[4] ॥

कुत्सस्यार्षम्[5] । यो विश्वतः-सर्वतः, सुप्रतीकः-प्रतीकं[6] मुखं[7] दर्शनपर्यायो वा,[8] सुमुखः[9] सुदर्शनो वा । सदृङ्ङसि-सदृशश्चासि[10],अगृह्यमाणविशेषत्वात् । दूरे चित् चित्[11]शब्दोऽप्यर्थे, दूरेऽपि सन, तडिदिव-अन्तिक इव । अतिरोचसे-सुष्ठु दीप्यसे । रात्र्याश्चित्-रात्रेरपि अन्धंतमः[12]-अत्युपसर्गात् ल्यबन्त[13]क्रियापदाध्याहारः-अतीत्य, देव ! पश्यसि दृश्यसे । यस्य तव तमसापि[14] दर्शनशक्तिर्न प्रतिहन्यत इत्यर्थः । तस्य[15] तव हे अग्ने ! सख्ये स्तुत्यस्तोतृत्वलक्षणे वर्तमाना[16] इति शेषः, मा रिषाम-मा हिंसिष्महि[17] केनचिद् वयमित्येतदाशास्महे ।

वधसाधनत्वाद् वज्रस्य तन्नामान्यष्टादशेत्याह-दि[18]द्युत् नेमिः[19] हेतिः[20]-इत्यादीनि[21] । वर्जयतीति[22] सतः । वर्जयति[23] प्राणैरिति केचिद् वाक्यशेषमध्याहरन्ति । अन्ये वर्जयतिमेव विनाशार्थे वर्णयन्ति । धनुराद्यायुधमात्र[24]वचनश्च वज्रशब्द इति केचित्, इन्द्रसम्बन्ध्येव च[25] विशिष्टमुभयमिति[26] । त्रिशूलमित्यन्ये । धनुरादिषु तुल्यस्तुत्यर्थतया प्रयोगः । तत्रार्क-वृकतुजादयो[27]ऽनेकार्थाः, तेषां प्रदर्शनार्थमेतन्निर्ब्रवीति[28]-तत्र[29] कुत्स[30] इत्येतद्यदा[31] वज्रः, तदा कृन्ततेः[32], छिनत्तीति कुत्सः, ऋकारस्योकारः सो नामकरणः । यदा तु ऋषिः कुत्सस्तदा-

---

१–दूरेऽपि तत्स० B.
२–'चा' त्रुटितम् B. ३–०न्यासे B. C.
४–[ ऋ० १।९४।७ ] 'यो विश्वतः० वयं तव' इत्येव प्रतीकम् D.
५–कुत्स्यार्षम् C. कुत्सार्षम् D. ६–सुप्र० B. C.
७–सुखं D. ८–'वा' त्रुटितम् B. C.
९–'मु' त्रुटितम् D. १०–चाङसि B. C.
११–'चित्' त्रुटितम् B. C. १२–अन्यतम B. C.
१३–०सर्गल्य० B. C.
१४–तपसा B. दूरतमस्यापि D.
१५–तन्नु C. १६–०न इत्यर्थः D.
१७–०सिष्म्य C. १८–विद्युत् B.
१९–'नेमिः' नास्ति D. २०–'हेति' नास्ति B. C.
२१–इत्यादि B. C. २२–'वर्जयति' नास्ति B.
२३–०यन्तिमे० B. C. २४–०मात्राव० D.
२५–'च' नास्ति B. C.
२६–०भयस्त्रि० B. ०यतस्त्रि० C.
२७–०प्र ( B. ) क तुंजानयोरे का० B. C. तुंडाद० D.
२८–ह्यदर्श० B. २९–०वीतीर्ति B.
३०–'तत्र' नास्ति C. D. ३१–'द्य' त्रुटितम् B.
३२–[ धा० ६।१४१ ]

कर्ता स्तोमानामित्यौपमन्यवः। करोतेरकार[1]स्योकारः[2], स्तोमशब्दात् सकार[3]तकारौ व्यत्यस्तौ[4]।

स्वमतमाह-अत्राप्युभौ[5] अस्य कुत्सशब्दस्य वधार्थ एव प्रवृत्तिनिमित्तं युक्तं भवति। कुतः ? सति सम्भवेऽनेकनिमित्ततायाँ अन्याय्यत्वात्। 'तत्सख इन्द्रः शुष्णं जघान'[6] इति च दर्शनाद् वधार्थतयोपपत्तेः। तदृषिसहित इन्द्रः शुष्णं शोषयितारमसुरं मेघं वोदकाप्रदानेन सस्यं, हनवान्। स च[7] स्तुत्या वीर्यवि[8]वृद्धिं कुर्वन् मेघवधे साहाय्यकर्म प्रतिपद्यते। 'यामि कुत्सेन'[9] इति च मन्त्रलिङ्गात्।

शत्रुवधादैश्वर्यं सम्भवतीत्याह-ऐश्वर्यकर्माणश्चत्वारो धातवः-इरज्यति पत्यते[10]-इत्यादयः।

ऐश्वर्यसम्बन्धादेवेश्वर[11]नामानि चत्वारि-राष्ट्री अर्यः-इत्यादीनि। तत्र-इन-इत्येतदेवं निर्वक्तव्यम्-सनितः सम्भक्तः सङ्गत एकीभूतो विभक्तः सर्वथा इन एवेत्यर्थः। निजैश्वर्येणायमणिमादिना परमात्मा आदित्यो वा[12], तस्य[13] पारमा[14]र्थिकमैश्वर्यम्, तदपेक्षयान्यत्र भुवनाधिपत्यमपि तृणवदसंप्रख्यम्[15]। तथा चाह[16]।

इदं फेनो न कश्चिद्वा बुद्बुदो वा न कश्चन।
मायेयं तव दुष्पारा विपश्चिदिति पश्यति॥
मायामात्रमिदं सर्वमद्वैतं परमार्थतः[17]॥ इति।

लौकिकस्तु[18] लवमात्रेणैवैश्वर्यव्यवहारः। सनितम[19]वरुद्धमनेनैश्वर्यमिति, अन्येषां तदनुग्रहलवमात्रकं स्यात्। कर्मकर्तृव्यापारभेदप्रदर्शनमात्रेण च[20] व्याख्याविकल्पः। समितमित्यन्ये पठन्ति, तेषाम् इणे[21] उपसर्गार्थविशिष्टात् 'भावे क्तः'[22]। एकीभूतमैश्वर्येण यस्मिन्त्स उच्यते। इन आदित्यः परमात्मा वेति निगमः।

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य
एकादशः खण्डः।[23] ]

---

१–[ धा० ८।१० ] २–०कारं B. C.
३–सककार० B. सनौ D. ४–०त्यस्तौ C.
५–०यामन्या० D.
६–[निरु० ३।११]
७–ततः B. ८–'वि' नास्ति D.
९–[ऋ० ४।१६।११] १०–'पत्यते' नास्ति D.
११–०देवमीश्व० B. १२–'वा' त्रुटितम् D.
१३–कस्य D. १४–०मार्तिक० C.
१५–०पद० D. ०वभ० C.
१६–आहेत्यनन्तरं केवलं B. पुस्तके 'श्लो' इति लिखितं वर्तते। तत्र 'श्लोकः' इति पाठो भवेत्।
१७–[ अनुपलब्धमूलमिदं वचनम् ]
१८–०कास्तु B. १९–०नियतमविरु० B. C.
२०–'च' नास्ति B. C. २१–[ धा० २।३६ ]
२२–[ Fragment of पा० ३।३।११४ ]
२३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ द्वादशः खण्डः । ][1]

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश[2] ॥

दीर्घतमसः । अधिदैवतं तावदस्या ऋचोऽर्थः । यत्रेति सप्तमीश्रुतेः । स्थिता इति शेषः । सुपर्णा इति रश्मिनाम, यस्मिन्[3] आदित्यमण्डले स्थिता रश्मयः । अमृतस्य-प्राणिनां जीवनहेतुत्वादमृतसदृशस्य अमरणधर्मणो[4] वा भौमरसलक्षणस्योदकस्य । भागम्-अंशं स्वं स्वम्[5] । अनिमेषम्-निमेष[6]वर्जितम, महतादरेण सातत्येन वेत्यर्थः । विदथा-वेदनेन, देवतामाहाभाग्यात्[7] स्वेन केनापि विज्ञानेन[8] । अभिस्वरन्ति-'स्वृ[9] शब्दोपतापयोः[10]' आभिमुख्येनोपतापयन्ति शोषयन्तीत्यर्थः ।

अथवा स्वरति[11]रत्र गतिकर्मस्वपठितोऽपि गत्यर्थः । भागमिति द्वितीया[12]श्रुतेरादायेति शेषः । यस्मिन्नादित्यमण्डले उदकस्यांशं स्वं रसमादाय गच्छन्ती[13]त्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः[14] । तत्र स्थित इन ईश्वरो विश्वस्य सर्वस्य भुवनस्य भूतजातस्य, गोपाः-गोपायिता[15] च, य इति शेषः परस्तात्[16] तच्छ्रुतेः । स मा मां धीरः प्रज्ञावानादित्यः, पाकम्-अर्थित्वाद्[17] भक्तित्वाद[18]पक्वप्रज्ञत्वाच्च[19] वक्तव्य[20]प्रज्ञं[21] मामत्रादित्यमण्डले आविवेश आवेशयतु प्रापयत्वित्यर्थः ।

सुकृतिनां[22] हि तत्[23]स्थानम् । तेन तत्र प्रापणमर्थ्यते इत्युपनिषद्वर्णः । रहस्यविद्या[24]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न दृश्यते ।
२–[ ऋ० १।१६४।२१ ] 'यत्रा सुपर्णा० विवेश' इत्येव प्रतीकम् D.
३–'स्मिन्' त्रुटितम् D. ४–धर्माणो B.
५–स्वं मिति, नि० D. ६–निमिष D.
७–'त्' त्रुटितम् D. ८–विज्ञाने D.
९–स्व ऋ C.
१०–[ धा० १।९७९ ]
११–स्वरन्ति C. सरस्वति D.
१२–०यार्थेति श्रु० D. १३–०च्छती० D.
१४–अस्य वाक्यस्य स्थाने D. पुस्तके 'यच्छ्रुतेस्तत्' इत्येव पाठः ।
१५–व B. १६–०स्तास्त० C. D.
१७–०त्वाभद् C. १८–०त्वात् प० C.
१९–प्रज्ञात्वा०C. । 'अपक्व'इति पदानन्तरं'प्रज्ञत्वाच्च' इत्यत आरभ्य D. पुस्तकं नास्ति । इतः परं खण्डितं तदाग्रन्थसमाप्तेः ।
२०–अत्र 'पक्तव्य' इति पाठो युक्तः ।
२१–प्राज्ञं C.
२२–०'तिना' इति तृतीयान्तपाठः B.
२३–'त्' त्रुटितं भाति B.
२४–विद्वा B.

उपनिषत्, वर्णनं वर्णः, तद्विषयं व्याख्यानं नैश्रेयसं ज्ञानमुपनिषद्वर्णः । तदर्थं वोपनिषीदन्त्याचार्याः । तेभ्यश्च[1] वर्णयन्त्याचार्या इति उपनिषद्वर्णो भवति, इत्यधिदैवतम् । विभक्त्यर्थेऽव्ययीभावः[2] । देवतायामित्यर्थः । देवताविषयं विज्ञानं तादूभाव्यापत्ति[3]श्रुतेर्नैश्रेयसत्वाद् उपनिषद्वर्ण उच्यते । भाष्यं मन्त्रव्याख्यानेन गतम् ।

अथवोपनिषद्वर्णता-'असौ वा आदित्यो मधु[4]' इत्यादि अध्यात्ममप्यस्या ऋचोऽर्थः[5] । यत्र-यस्मिन्[6] शरीरे स्थिताः, रश्मयः-प्रकाशकत्वाद्रश्मिसदृशानि चक्षुरादीनीन्द्रियाणि, अमृतस्य रूपादेर्ज्ञेयस्य विषयस्य भागं स्वं स्वमंशं-चक्षू रूपं श्रोत्रं शब्दं घ्राणादीनि गन्धादीनि[7], अनिमेषं विज्ञानेनोपतापयन्ति, आत्मानं प्रकाशयन्तीत्यर्थः । तत्र भोक्तृत्वेन स्थित इन ईश्वरः सर्वस्येन्द्रियग्रामस्य गोपा यः स धीरः प्रज्ञावान्, पाकं वक्तव्य[8]प्रज्ञमत्रैव स्थितमाविशतु मम प्रकाशीभवत्वित्यर्थः ।

अथवा[9] यत्रेत्यात्मा निर्दिश्यते न शरीरम् । भागमित्यत्र च[10] पूर्ववदादायेति शेषः । स्वरतिश्च गत्यर्थः । यस्मिन्निहितानीन्द्रियाणि[11] विषयस्यांशं स्वमादाय विज्ञानेनोपलम्भ्यार्थ[12]मभिगच्छन्ति । ईश्वरो गोपायिता च स मामाविशत्विति । अनिमिषमिति गतम् । आत्मगतिमात्मज्ञानम् । अयमप्युपनिषद्वर्ण एव । पूर्वो देवता[13]विषयः । अयमात्मविषय इति विशेष[14] इति ।

इत्याचार्यमहेश्वरविरचितायां निरुक्तभाष्यटीकायाम्

अष्टमस्या-( तृतीयस्या- ) ध्यायस्य

द्वितीयः पादः[15] ।

[ द्वादशश्च खण्डः[16] ]

---

१-'तेभ्यश्च वर्णयन्त्याचार्या इति' इदं वाक्यं नास्ति B.

२-[ cf. पा० २।१।६ ] ३-तान् भा० B.

४-[ cf. छा० उ० ३।१।१ असौ वा आदित्यो देवमधु ]

५-त्याध्या० B. C.

६-'यत्र यस्मिन्' त्रुटितम् B.

७-'नि गन्धा' इति त्रुटितम् B.

८-अत्र 'पक्तव्य' इति पाठो युक्तः ।

९-अथ B. १०-'च पूर्व' इति त्रुटितम् B.

११-यन्निनि हि० B.

१२-०लम्भार्थ० B. १३-०वतताविं० C.

१४-'विशेष इति' नास्ति B.

१५-'इत्यष्टमस्याध्यायस्य द्वितीयः पादः' इत्येव B, इत्यष्टमस्य द्वितीयः पादः C.

१६-नास्त्यादर्शपुस्तकेषु ।

# [अथ तृतीयः पादः।

## त्रयोदशः खण्डः।[26]]

ईश्वराणामेव बह्वित्याह-बहुनामान्युत्तराणि द्वादश-उरु पुरु-इत्यादि[1]। बहु प्रभवति पर्याप्नोति व्रतनिवृत्तये[2]।

बह्वपेक्षयैवाल्पव्यपदेश इत्याह[3]-ह्रस्वनामान्येकादश[4], ऋहन्[5] ह्रस्व-इत्यादीनि। ह्रस्वाल्पयोर्मात्रापचय[6]सामान्येऽभेदोऽभिप्रेतः। अनायामवैपुल्य[7]लक्षणो विशेषः। ह्रस्वो ह्रसतेः[8], आरोहपरिणामाभ्याम्।

ह्रस्वविपर्ययप्रसङ्गादाह-महन्नामानि पञ्चविंशतिः, महत्[9] ब्रध्नः ऋष्वः[10]-इत्यादीनि। महान्[11]-मानेन स्वगुणेन परिमाणेन अन्यान्[12] यदपेक्षमस्य महत्त्वं[13] तान् जहाति अतिक्रामति, मानशब्दा[14]ज्जहातेश्चे[15]ति शाकपूणिः। निर्वचनलाघवात्[16] मंहतेः पूजाकर्मणः, पूजनीय इत्याचार्यः[17]। तेषु ववक्षिथ विवक्षसे इत्येते आख्यातपदे इति शेषः। ते तु[18] वक्तेर्वा[19] वहतेर्वा साभ्यासात्[20]-सन्नाभ्यासस्य द्वे अपि न यथासंख्येन[21]। अर्थरूपस्य चोभयत्र सम्भवात्[22], अतिशयवतो वचनाद्वहनाद्वा महत्त्वस्यापि प्रतीतेः, महन्नामसूपपन्नः पाठः। योऽभिविश्वं वक्तुं वोढुं[23] वा समर्थः[24] महानसौ। तच्चेदं निगमपदान्तरसम्बन्धसामर्थ्यादुन्नीयत इत्युभयत्र निगमौ प्रदश्येते। ववक्षिथे[25]त्यस्य।

---

१-'इत्यादीनि' इति पाठो युक्तः।

२-निमित्तये B. ३-शुत्याह C.

४-०कद० C. ५-रीळ्ह C.

६-स्वात्मयोर्मात्रप० B. C.

७-ह्रस्वे आयामो दैर्घ्यं न भवति, अल्पे च वैपुल्यं महत्त्वमिति विशेष इत्यर्थः।

८-[cf. धा० १।७४३]

९-महो C. १०-ऋष्य: B.

११-महान् C.

१२-अन्यान् B. C. यद् (न) पेक्ष० B.

१३-मह्ह० C. १४-०शब्दो० C.

१५-[cf. धा० ३।८] १६-माहवा० C.

१७-इत्यार्यः B. इत्याचा C.

१८-तेषु B. १९-वक्ते C.

२०-०साक् C. अग्रे 'सन्नाभ्यासस्य' इत्यस्य स्थाने 'साभ्यासस्य' इति पाठो युक्तः। साभ्यासादिति षष्ठ्यर्थे पञ्चमी इति भावः।

२१-०सः ख्यन B. २२-०वत् C.

२३-योढुं B. योटुं C. २४-०मर्था: B. C.

२५-चिविक्षि० C. २६-नास्त्यादर्शपुस्तकेषु।

# [ अथ चतुर्विंशः खण्डः[1] ]

हविषा जारो अपां पिपर्ति पपुरिर्नरा ।
पिता कुटस्य चर्षणिः[2] ॥

प्रस्कण्वस्य । हविरित्युदकनाम । हविषा उदकेन जारो जारयिता आदित्यः । कस्य ? अपाम् । पिपर्ति[3] आश्विनत्वात् सूक्तस्य युवामेवं द्यावापृथिव्यादिरूपावश्विनौ[4] पूरयत्वि[5]त्युच्यते । रश्मिभिर्भौमरसलक्षणमाददानो दिवं प्रत्यर्पयन्[6] पृथिवीं च यदासावादित्यादि[7]ना चर्म[8] वर्षकर्म समानमेतदुदकमग्नेरिति वक्ष्यति । पिता पितृभूतः पालयिता वा कृत्स्नस्य जगतः । कुटस्य कृतस्य च सामर्थ्यात् शुभाशुभस्य च कर्मणः । चर्षणिः[10] चायिता द्रष्टा । सर्वं चैतल्लोकत्वात् 'सूर्य आत्मा जगतस्तस्थुषश्च[11]' इति चात्मरूपत्वादादित्य उपपन्नम् । एवं च मन्त्रब्राह्मणवर्णाः । 'अग्नौ प्रास्ताहुतिः[12]' इति च स्मरणात् । आदित्यस्य वृष्टिद्वारेण चाश्विर्हविषा[13] तर्पणात् प्राधान्ये सत्यश्विनीत्वमुव[14] इति सर्वमुपपन्नम् । 'दिवं जिन्वन्त्यग्नयः[15]' इति च । एवमुपपत्तौ सत्यां यदन्यथा केश्चिद् व्याख्यायते यास्कमतं चापोद्यते तदाहोपुरुषिकामात्रमिति मन्यामहे ।

शम्ब इत्यनवगतार्थम् । वज्रोऽभिधेयः । शमनः शात इति चेत्यवगमः । उदाहरणम-

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन ।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम्[16] ॥

कृष्णस्याङ्गिरसस्यार्षम् । आराच्छब्दोऽयं सन्निकर्षविप्रकर्षवचनः । तस्य सर्वस्य सामर्थ्यादर्थविशेषोऽध्यवसेयः । आरादपीय[17] इति तुल्यजातीयापेक्षत्वात् प्रकर्षप्रत्ययस्य दूरतरमित्यर्थः । इह तु दूरप्रतियोगित्वात् सन्निकृष्टे चापायभूयस्त्वाशङ्कया शत्रोर्दूरापगमः प्रार्थ्यत इति सन्निकर्षवचनो गम्यते । तेनायमर्थः । सन्निकृष्टादस्य शत्रुमप-

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भानिर्देशो न दृश्यते ।
२—[ ऋ० १ । ४६ । ४ ] 'हविषा जारः' इत्येव प्रतीकम् B. C.
३—विपर्त्ति B. विपात्तिः C.
४—'नौ' इति नास्ति B. C.
५—'त्वि' इति न दृश्यते C.
६—प्रत्यपयन् B. C.
७—'आदित्यात्मना' इति युक्तं स्यात् ।
८—अत्र 'चर्म' इति पदस्य प्रयोजनं न ज्ञायते ।
९—वर्म कर्म B. १०—चर्माणि B.
११—[ऋ० १ । ११५ । १]
१२—[मनु० ३ । ७६] प्रस्ता प्रस्ता हुतिः C.
१३—'चाश्विनोर्हविषा' इति युक्तं स्यात् ।
१४—'मुपपद्यत' इति युक्तं स्यात् ।
१५—[ऋ० १ । १६४ । ५१]
१६—[ ऋ० १० । ४२ । ७ ] 'आराच्छत्रुं' इत्येव प्रतीकम् B. C.
१७—सान्दिग्धमिदं पदम् ।

बाधस्व अवगमय[*] दूरम् । अन्ये वर्णयन्ति शत्रोरवस्थानं[1] बहुदोषत्वादनिष्टमिति दूरवचन एवाराच्छब्दो दूरशब्दश्चात्रान्तर्नीत[2]प्रकर्षार्थः । दूरादप्यस्य शत्रुमपनय दूरं दूरतम[3]मित्यर्थः । तेनोच्यते उग्रोऽप्रसह्यः[4] क्रूरो वा यः शम्बो वज्रः । पुरुहूत हे बहुभिराहूत । तेन किञ्च अस्मे अस्मभ्यं धेहि यवमद् गोमत् । प्रदर्शनं चेदं यवादिभिर्धान्यैर्गवादिभिश्च पशुभिस्तद्वत्[5] संयुत[6]मित्यर्थः । अथवा वाजरत्नां वाज[7]वतीं रत्नवतीं चेत्यर्थः ।

केपय[*]मित्यपरोक्षवृत्तित्वादत्यन्तानवगतम् । तस्य परोक्षवृत्तिना कपूया भवन्तीति इदम[8]र्थप्रदर्शनम् । एवमपि न विज्ञायते पूया इति । अत उभयोरन[9]योरक्षरवर्णसामान्येन शब्दार्थौ निराह । कपूय[+] कमिति च पूयमिति च कर्मोच्यते । तेन च पुनातिकर्मणोः कर्मविशेषेण कर्मसामान्यं लक्ष्यते । कुत्सितमिति कशब्दार्थप्रदर्शनम् । स्पष्टार्थमाह । दुष्पूया[10]मिति दुःशोभन[11]धनं दुष्पानमिति चेत्यर्थः । तेन कपूयशब्दवाच्ये कर्मणा तद्वन्ते[12] तस्यानुष्ठातारः कपूयाः । आकारो मत्वर्थीयः, कपूयास्सन्तः[13] केपयः[14] कुत्सितकर्मानुष्ठायिनः पापकर्माण इत्युच्यन्ते । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
चतुर्विंशः खण्डः ।[15] ]

———

* —'अपगमय' इत्युचितम् । १—शक्रोरव C.
२—न्तर्णीत C. ३—'म' इति त्रुटितम् C.
४—उग्रमप्रसह्य क्रूरोपायं शम्बद्वज्र B.
५—'पशुभिश्च' इत्येवमत्र चकारोऽधिक एव वर्तत आदर्शपुस्तकेषु ।
६—संयुकमि C. 'संयुक्तमित्यर्थः' इति वा पाठोऽत्र भवेत् ।
७—वाजयतीं B. C. ८—'म' इति त्रुटितम् C.
*—'केपयः' इति सम्यक्
९—रावयो B. C. +—'कपूयं' इति युक्तम् ।
१०—द्युपूय B.
११—द्युशोभन B. दुःभोभन C.
१२—अत्र 'तद्वन्तः' इति पाठो युक्तो भवेत् ।
१३—अत्र 'कपूयास्सन्तः' इत्यर्थानुसारी पाठो युक्तो भाति । अयं पाठो नास्त्येव B.
१४—केवयः C.
१५—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ पञ्चविंशः खण्डः ][1]

पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा ।
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः[2] ॥

कृष्णस्यैव । पृथक् कर्मकृतत्वान्नाना असहायभूताः प्रायन् प्रगताः, कम् ? सामर्थ्यात् स्वर्गम् । प्रथमाः मुख्याः । के ? उच्यन्ते । देवहूतयो देवान् प्रत्याह्वानं[3] येषां ये देवानां* ह्वयन्ति देवानाह्वातारः । आह्वानेन च[4] यागो लक्ष्यते यष्टार इत्यर्थः । अकृण्वत कृतवन्तश्च श्रवस्यानि श्रवणीयानि आस्तिक्य[5]श्रद्धोपग्रहविशेषाद् विशिष्टानि साधनानि यशांसि दुष्टरा दुस्तराणि[6] दुष्प्रापाणि दुरनुकरणानि चान्यैर्ये यज्ञमयीं नावमारोढुं शक्नुवन्तस्त[7] एवमुच्यन्ते । अथ न ये[8] शेकुः शक्नुवन्तस्त एवमुच्यन्ते यज्ञमयीं नावमारुहमारोढुं यागदानादि कर्तुमित्यर्थः । तदशक्त्या चात्र विहितविपरीतप्रतिषेधं सेवनं च लक्ष्यते[9] । ये विपरीतं प्रतिषिद्धमासेवन्त इत्यर्थः । ईर्मैव इहैव सर्वमर्यादा[10]तिक्रमहेतौ दारिद्र्येण गुणेन वा सह । 'यज्ञेन देवानाम्[11]' इति श्रुतेः । अस्मिन्नेव वामकृष्य[12] लौकिके न्यविशन्त नीचैर्नीचैस्तरामविशन्त अधोगतिं गता इत्यर्थः । के ? उच्यन्ते । केपयः कपूयाः पापकर्माण इत्यर्थः ।

पृथग्विस्तरार्थस्य[13] पृथग्भूतानाम्[14]भिविस्तरस्यावश्यम्भावात् शब्दसारूप्य[15]प्रसङ्गादाह । ईर्म इति बाहुरुच्यते । स ह्यङ्गान्तरेभ्यो[16] विक्षिप्ततमो भवति । अन्येऽपीर्मशब्दं[17] प्राणप्रचनं वर्णयन्ति । दक्षिणमीर्मस्य दक्षिणमङ्गस्य व्रणितं व्याधेनेति दक्षिणेर्मा[18] मृग इति ।

तूतुमाकृषे इत्येते नावगते[19] । शीघ्रगत्यर्थस्य तूर्णमित्यवगमः, कृषे[20] इत्यस्योपाकुरुष[21] इति । उदाहरणमुभयोरेकम् ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १०।४४।६] 'पृथक् प्रायन' इत्येव प्रतीकम् B. C.
*'देवानाह्वयन्ति' इत्युचितम् ।
३–ह्वानदं येषां देवदेवानां B.
४–'च' इति नास्ति B.
५–अस्ति B. आस्ति C.
६–दुष्टराणि B. दुष्टरा स्तराणि C.
७-रोढुमशक्नुवन्त अत एव B.
८–न यो शंकुः C.
९.–यक्ष्यते C. १०–सर्वमायादां C.
११–[ अनुपलब्धमूलमिदम् ] देवाम् B.
१२–संन्दिग्धमिदं पदम् ।
१३–'पृथग्विस्तरार्थस्य' इति नास्ति C.
१४–अस्यार्थो नावबुध्यते ।
१५- शब्दस्यारुच्य प्र C.
१६- सह्यं वा ( B. C. ) गान्तरेत्यो B.
१७–अन्यपीर्मशब्द प्रणव वच C.
१८–दक्षिणेर्मा लुब्धयोगे [पा० ५।४।१२६]
१९–तेनवगते B.
२०–'आकृषे' इति स्यात् ।
२१ स्य वा कुरु B. स्यो वा कुरु C.

एता विश्वा सर्वना तूतुमाकृषे स्वयं सूनो सहसो यानि दधिषे।
वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः ॥

वैकुण्ठ* इन्द्रस्यार्षम्। एता एतान्यर्थितानि[2] विश्वा सर्वाणि सवनानि[3] प्रातस्सवनादीनि[4] वापस्थानानि[5] यज्ञानीत्यर्थः+। तूतुमा[6] तूर्णं कृषे करोषि[7] स्वयं क्षिप्रमागच्छ हे सूनो सहसं[8] इन्द्रस्यात्यन्तबलवत्त्वात् 'ओजसो जातम्'[9] इत्यादौ च मन्त्रान्तरे दर्शनाद् बलादेव जात इति गम्यते। तेनैवमामन्त्र्यते[10] सूनो सहस इति। यानि वृष्टिप्रदानद्वारेण द्युलोकादीनि यागाङ्गतारूपत्वेन वा दधिषे धारयसि। किञ्च वराय श्रेष्ठाय ते तुभ्यं पात्रमिदं[11] सोमस्य पूर्णमिति शेषः। धर्मणे धारयित्रे[12] सर्वस्य जगतः। तना धननामैतद् धनं वास्मदीयम्[13]। अयं च प्रकृतो यज्ञो मन्त्रश्च ऋग्यजुरादिः। ब्रह्म अन्ननामेदम्, अन्नं च सवनीयपुरोडाशादि ह्येतत्[14]। यच्चेदमसूक्तं[15] वचः स्तुतिलक्षणं यावत् किञ्चित् सर्वं त्वदर्थं उपाकुरुष इत्युपसर्गद्वयापेक्षं[16] भाष्यकारो दर्शयति तूर्णमुपगत्याभिमुख्येन[17] करोषीति।

अंसत्रमित्यनवगतमनेकार्थम्। पार्ष्णित्रमित्यवगतमिति[18] केचित्। अत आह अंसत्रमहंसस्त्राणम्। अंहःशब्देन पापमुच्यते। अन्ते निरूढोपधादित्युक्तत्वात्। त्राणमिति च यदि कर्तरि ल्युट् अंहसस्त्रायत इति 'आतोऽनुपसर्गे कः'[19] इति अंहस्त्रमिति प्राप्तम्। अथ करणे ततः[20] षष्ठीसमासः[21]। धनुर्वा कवचं वाभिधेयम्। तयोर्धनुर्निर्विवक्ष्यति। कवचं प्रविभज्य ब्रवीति कुं[22] अञ्चितमिति। कुशब्दस्य कुत्सार्थस्याञ्चतौ लुप्तनकारे उकारस्यादेशः। तद्धि स्वभावकुटिलमिति। कवचं[23] कारुत्सेति चेत् कौटिल्यमेवं[24]। ईषदर्थे वा कुः[25]। ततश्च काञ्चितं सत् कवचम्। काये वाञ्चितं कायशब्दात् पूर्वपदादित्यर्थः। उदाहरणम्।

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
पञ्चविंशः खण्डः।[26] ]

---

१–[ऋ० १०।५०।६] एता ( एव C. ) विश्वा' इत्येव प्रतीकम् B. C.

* 'वैकुण्ठस्येन्द्रस्य' इति युक्तं स्यात्।

२–'एकार्थितानि' इत्येव B. C.

३–स्वनानि B. ४–'दी' इति त्रुटितम् B.

५–वायस्था B. वागस्था C.

+ 'यज्ञा इत्यर्थः' इति युक्तम्।

६–तूतुमातृणां कृषेः B. त्रतुमातृणां C. ७–करोति B.

८–सहसा B. ९–[ऋ० १०।७३।१०]

१०–मादचत्येतत् B. ११–वातमिमं B.

१२–आरयित्रे B. C. १३–अधन वास्म B. C.

१४–ह्येतं F. C. १५–यच्छेदमसून् कृत B.

१६–द्वयात् पक्षं B 'द्वयाक्षेपं' इत्युचितम्।

१७–गभ्याभिमु C.

१८–पार्ष्णिमात्रमि B. वार्ष्णीत्रमि C.

१९–[पा० ३।२।३] २०–'ततः' इति नास्ति B.

२१–समासे B. C. २२–ब्रवीतीति कवञ्चित B. C.

२३–कवचः C. २४–मेवं B.

२५–'कुः' इति नास्ति B.

२६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते

## [ अथ षड्विंशः खण्डः । ]

प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित् कृणुध्वम् ।
द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ॥

सोमपुत्रस्य बुधस्यार्षम् । प्रीणीत प्रीणयताश्वान् स्नानपानयोग्याशनैः संग्रामयोग्यान् कुरुतेत्यर्थः । हितं जयाथ हितमिति क्रियाविशेषणम् । कथं जयत ? हितबन्धुसुहृज्जनैव-र्जितं जयं प्राप्नुतेत्यर्थः । स्वस्तिवाहं स्वस्तीत्यविनाशिनाम अविनाशवाहनं कृत्वाश्वं सारथिं च [10]तेत्यनेन सम्बध्यते । कृणुध्वं कुरुत । तेन च गत्वा संग्रामभूमिं द्रोणाहावमित्यादीनि द्वितीयान्तानि रूपसंख्यासंग्रामविशेषणानि सिञ्चतेत्यनेन सम्बध्यते । द्रोणं द्रुममयं स एव रथ आहावमाहवस्थानीयो यस्य संग्रामस्य तमवतं रूपनामैतत्, रूपसंग्रामाख्यमश्म-चक्रमश्ममयम् । अशनो वा व्यापकोऽक्षरस्य । असनो वा व्युदसनं भ्रमणचक्रं लोके नाम । असनानि वा क्षेपणानि चक्राण्यायुधविशेषा यस्मिन् तम् । अंसत्रकोशम्, अंसत्राणि धनूंषि कवचानि कोशस्थानीयानि यस्मिन् तम् । सिञ्चत उत्सिञ्चत । नृपाणं पीयत इति पानं यस्मिन् योधाम उदयति पीयन्ते मार्यन्त इत्यर्थः, तम् । वैश्वदेवत्वात् सूक्तस्य विश्वे-षां देवानां प्रसादेन हे सैनिकाः सर्वमेतत् कुरुतेत्यभिप्रायः ।

हितं जयाथ इत्यस्यार्थकथनं सुहितं नयत इति । ततोऽपि विस्पष्टतरमाह । जयेन वो हितमस्तु देवानां प्रसादेनेत्यभिप्रायः । आहाव आह्वानात् ह्वयन्ते हि तत्र पानार्थं गवादयः । उदकप्रसङ्गाद् आहवमिति । तत् पर्यायं निराह आहवनात् । आभिमुख्येनोह्यते तस्मिन्नुदके

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १०।१०१।७ ] 'प्रीणीताश्वान् ( णिताश्वात् C. )' इत्येव प्रतीकम् B. C.
३–प्रीणित प्रीणियताश्वान् C. ४–जायथ C.
५–'हित' इति द्विर्लिखितम् C.
६–जुयत C. ७–सुहृद्वनर्वर्जितम् C.
८–स्वस्तिवातां B. C. ९–'अ' इति नास्ति B.
१०–अत्र कश्चन पाठस्त्रुटितः । ११–द्रोणाभावमि B.C.
१२–सिञ्चते अनेन B. C.
* 'संबध्यन्ते' इति युक्तं स्यात् ।
१३–रथं आहवं B. 'आहव आहवे स्था०' इति पाठो युक्तः स्यात् ।
१४–'अ' इति नास्ति B. C. १५–व्युसदनं C.
१६–लोन्नाकम् B. १७–अंतत्र कोशं B. C.
१८–सन्त्राणि B. सत्राणि C.
१९–सञ्चित C.
२०–'त' इति नास्ति B.
२१–'पा' इति त्रुटितम् B. C.
२२–याद्धाम C. अत्र 'योद्धारः' इति स्यात् ।
२३–मूलनिरुक्ते 'जयथ' इति पाठः ।
२४–'ज' इति त्रुटितम् B. C.
२५–भूयन्ते C. 'आहूयन्ते' इत्युचितम् ।
२६–'आवह इति' इति पाठः स्यात् ।
२७–'आवहनात्' इति मूलानुसारी पाठो युक्तः ।

रथोऽपि तत्स्थानीयः। आहूयन्ते तत्रस्थैर्योद्धारः, ऊह्यन्ते* वा जित्वानेन परधनानीति। अर्वतो[1] रूपं स हि वन्यमान[2] उपचितकल इत्यर्थः। महान् भवतीत्यर्थप्राप्तार्थवचनम्। नाशकल्पत्वं च धनुरादेः[3]। यो व्रजिनो[4]त्सेधनसामान्यात्। कुष्णातेर्विकुषित इव ह्यसौ भवति। अन्तस्सुषिरत्वात्। अयमपीतरः कोश एतस्मादेव धातोर्वृद्ध्यर्थस्येति शेषः। कुत एतत्? यत आह सञ्चयः सञ्चयरूपो धनं निकाशः संवृतं हि धनं कोश इत्युच्यते। सञ्चयमर्थकथनप्रसङ्गादाह। आचितमात्र उपचितलक्षणमित्यर्थः। महानित्यर्थप्राप्तार्थवचनम्।

काकुदमित्यनवगतम्। तालु[5]मित्याचक्षते। प्रसिद्धमिदमस्याभिधेयमिति दर्शयति जिह्वा जुहुवा[6]। किमाम्रान् पृष्टः कोविदारानाचष्टे? काकुदशब्दप्रसङ्गे जुह्वानि ब्रवीति। इष्यते काकुदशब्दनिर्विवक्षयैवायमुपन्यासः। काकुदशब्दस्य जिह्वाशब्दो नापि जोहुवाशब्दो निर्वचनाङ्गम्। कस्तर्हि? कोकुवाशब्दस्तस्य पर्यायो जिह्वा। अतो निर्विपत्ति काकुदशब्दनिर्वचनाङ्गभूतस्य कोकुवाशब्दस्यार्थकथनप्रसङ्गेन जिह्वाशब्दं तावन्निराह[7]। जिह्वा[8] कस्मात्? जोहुवा आह्वयतेर्जुहोतेर्वा यङ्लुगन्तस्य 'ह्वः सम्प्रसारणम्[9]। अभ्यस्तस्य च[10]' इति सम्प्रसारणे च पचादिकेऽचि तद्रूपम्[11]। पुनः पुनराह्वयति शब्दं करोति, रसान् वादत्ते, जुहोति वात्मनीति सास्मिन् धीयते सा शब्दान्तरवाच्या सती अस्मिन् शब्दोऽभिव्यक्तये धीयते इत्यधिकरणसाधनम्। कोकुवा नाम जिह्वा इत्येव सम्बन्धक्रमो द्रष्टव्यः।

अथ कोकुवा[12] कस्मात्? कोकूयमाना[13] हेतौ शानचि[14] मुक्। छान्दसत्वात् प्रथमासमानाधिकरणेपि क्वचिद्दर्शनात्। अधीयमानोऽधीयत इति यथा। कोकूयते यस्माद् अतः कोकुवा कवतेः शब्दकर्मणः कोकुवेति पूर्ववच्चर्करीतवृत्तम्। पुनः पुनः कवते शब्दं करोति अतः कोकुवानं सत् काकुदं वर्णव्यापत्त्यादिना। कोकूयमान[16] एतं तुदतीति वेति निर्वचनान्तरम्। एतदिति तालुनोऽन्वादेशः। तालुपर्यायप्रसक्तमाह। तरतेः[15] कुणिप्रत्यये रेफलकारापत्त्या। विस्तीर्णतमं हि तदास्यान्तर्गतेभ्योऽङ्गान्तरेभ्यः। लततेर्वा नैरुक्तधातोरुण्येव

* 'उह्यन्ते' इति युक्तम्

१–अपतः रूपं B. अवतः C.

२–पन्यमान B. ३–राददत् B.

४–व्रजीनो B. अत्र कश्चन पाठस्त्रुटितः।

५–तालमित्या B. C.

६–जुह्वा C.

७–निरुह्य B. निरुह C.

८–'जिह्वा' नास्ति B. 'ज़ि' नास्ति C.

९–[पा० ६।१।३२] 'ह्वः' नास्ति B.

१०–[पा० ६।१।३३]

११–'त' इति नास्त्यादर्शपुस्तकेषु।

१२–कोरु वा B.

१३–कौ (B. C.) तूयमान B.

१४–शर्चे B. शच C.

१५–त्वतेः C.

१६–'कोकूयमाना तुदतीति' इति मूलपाठः।

प्रत्यये वर्णविपर्ययेणैतद्रूपम्। अर्थप्रतीतये दार्ढ्यार्थमाह । यथा तलं पादतलं भूमितल-मिति । विश्लिष्टं[1] हि तद् भवति । लतेत्यपि पर्यायः[2] । सा हि वृक्षे श्लिष्टा[3] भवति । सर्वथा साधर्म्येण प्रोक्तस्यार्थस्य दार्ढ्यं दर्शितम् । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या-) ध्यायस्य
षड्विंशः खण्डः[4] ]

———

१—विशिष्टं B.
२—'लतेत्यविपर्ययः' इति मूले पाठः ।
३—शिष्टा B.
४—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ सप्तविंशः खण्डः । ][1]

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनु क्षरन्ति काकुदं सूर्म्यं सुषिरामिव[2] ॥

प्रियमेधस्य । शोभनस्त्वं देवोऽसि हे[3] वरुण समुद्राधिपते यस्य ते तव सप्त सिन्धवो नद्यो गङ्गाद्या अन्तरिक्षनद्यो वा । अम्बा अलोलेत्येवमाद्या अन्तरिक्षनद्यः । अवर्धः[4] वरुण उत्तमस्थान आदित्यः, सिन्धवोऽपि रश्मयः, तेऽनुक्षरन्ति अनुगच्छन्ति आपूरयन्ति वा । किम् ? काकुदं तालु । आदित्यपक्षे तालुस्थानीयं तालुमण्डलमभिप्रेतम् । कथमिवानुक्षरन्ती-*ष्यते । सूर्म्यं सुषिरामिव[5] शोभनांसूर्मिं[6] छान्दसत्वात् यणादेशः, सूर्मिं काष्ठानां संघातं सुषिरामिव मत्वर्थीयकल्पनया सुषिरवतीं यथा अग्निरिति शेषः । अनुगच्छेदापूरयेद्वा[7] तद्वदित्यर्थः ।

समस्तमन्त्रपाठे प्रयोजनं मृग्यम् । अनवगतस्य पदान्तरस्याभावात् । यत्र तु तदस्ति तत्र तदवगमप्रयोजनं समस्तपाठो द्रष्टव्यः । इह प्रदर्शनमन्यत्रापि समस्तो मन्त्रो व्याख्यायत इति ।

बीरिटं इत्यनवगतमनेकार्थं च । अन्तरिक्षं गणोऽसौ मनुष्याणामभिधेयः । भियो वा नक्षत्रादीनां वा भासः । ततिस्तननं यस्मिन् तत् भीस्तननं[8] भास्तननं वा बीरिटम्[9] । अनालम्बनान्तरिक्षे भीतिः कस्य न जायते । वन्दनं नरेन्द्राय ते हि तस्मात्तत्रापि तद्द्वयम् । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
सप्तविंशः खण्डः[10] । ]

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२—[ऋ० ८ । ६९ । १२] 'सुदेवो असि' इत्येव प्रतीकम् B. C.

३—नो वरुण B.

४—अवर्धं B. अत्र 'अथवा' इति पाठः स्यात् ।

*—अत्र 'कथमिवानुक्षरन्ति ? उच्यते' इति पाठः स्यात् ।

५—सूर्यं ( र्म्यां C. ) सुषिरमिव B. C.

६—शोभादूर्मि B. C.

७—च्छेदापूरं यद्वा B. च्छोदापूर C.

८—भिस्तननं B.

९—विरीटं B. विरिटं C.

१०—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ अष्टाविंशः खण्डः । [1] ]

प्र वांवृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते ।

विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् [2] ॥

व्रजि[3]स्तरणार्थः । ततः कर्मणि लट् प्रव्रज्यते[4] प्रस्तीर्यते । सुप्रया[5] सुखं गम्यते यस्मिन् देवताभिः[6] । किं पुनस्तत् ? बर्हिर्वेदि[7]रास्तरणाद्दर्भात्मकस्य । इदं बर्हिरेषामृत्विग्यजमानानां स्वभूतम् । विस्तीर्णे च तस्मिन् आकार इयाते इत्यनेन सम्बध्यते, विश्पतीव[8] संप्रत्यर्थत्वात् पदपूरणः[9], विश्वशब्दस्य[10] वलोपेन च विश्पती[11] सर्वस्य स्वामिनौ पातारौ[12] बीरिटे[13] अन्तरिक्षे सप्तमीश्रुतेः स्थितौ सन्तौ । पञ्चम्यर्थे वा सप्तमी । ततो बीरिटाद्[14] यज्ञं प्रति आ इयाते आगच्छतम्[15] । अथवा विशां पतीविश्पती राजानौ कौचित् । बीरिटोऽपि[16] मनुष्यगण इव स्वार्थ एव । यथा कौचिद् विशां पती राजानौ बीरिटे[17] स्वस्मिन् सैनिके मनुष्यगणे स्थितौ ततो वा आगच्छेतां तद्वदागच्छतम्[18] । विशामित्येतत् पूर्वहूता[19]वित्येतेन व्यवहितेनापि सामर्थ्यात् सम्बध्यते । कस्मिन् काले आगच्छतम्[20] ? उच्यते । अक्तो रात्रिनामेदम् । रात्रेरुषस उषसश्चापि वा स काल इति विशां मनुष्याणामृत्विग्यजमानानाम् । पूर्वहूतौ[21] पूर्वस्मिन्नाह्वाने[22] । कौ इयाते ? वायुः पूषा नियुतो वायुरित्यादिष्टोपयोजनत्वान्नियुत्वानित्येव* हितमपि वायुना सम्बध्यते । वायुश्च नियुत्वान् पूषा च । किमर्थमागच्छतम्[23] ! स्वस्तये अविनाशाय[24] यज्ञस्यास्माकं चेत्यभिप्रायः । सर्वस्यात्मा[25] पालयितारौ वा कृत्स्नस्य नियुक्तत्वात् । कस्मान्नियुज्यन्ते ? अस्याश्चा[26]दिष्टोपयोजनं दर्शयति । नियुक्तः कस्मात् ? नियमनाद्वा युजेर्वा ।

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२—[ऋ० ७।३९।२] 'प्र वाष्ट (मा प्र C.) जे' इत्येव प्रतीकम् B. C.

३—प्रजिस्तर० C.　　४—प्रप्रज्यते C.

५—सुपूयाः B.

६—वताभीः C.

७—'रा' नास्त्यादर्शपुस्तकेषु ।

८—विवतीव B. C.　　९—पूरणं C.

१०—ब्दस्य च वलो C.

११—विश्पतिं B. विश्पतिः C.

२—१पातादौ B. C.　　१३—बिरीटे B. C.

१४—बिरीटात् ( भ् B. ) B. C.

१५—च्छतः C.

१६—बिरीटोऽपि B. C.

१७—बिरीटे B. C.　　१८—च्छतः C.

१९—पूर्वभूतामित्ये B. पूर्वभूतां विपत्ये C.

२०—च्छतः C.

२१—पूर्वभूतौ B. C.　　२२—स्राह्वने C.

* '०त्येतद्व्यवहित०' इति पाठः स्यात् ।

२३—च्छतः C.　　२४—अपिनाशाय C.

२५—सर्वस्यात्म B.

२६—श्चा इत्यादिष्टो C.

अच्छेति निपातत्वाच्च संस्कारादनारम्भादनवगतोऽनेकार्थश्च* । अत इहोपन्यस्तः । स पुनरयमहेरर्थे[1] आभिमुख्यादौ । आप्तुमित्यस्यार्थ इति शाकपूणिः । तथा चैवोदाहृतं बहुश इत्युदाहरणोपन्यास इति ।

परि ईम् सीमिति व्याख्यातं[2] षाष्ठिके निपातप्रकरणे । अनेकार्थत्वादिहोपन्यासः ।

एनमिति एनामिति च पदद्वयमेतत् । अस्या अस्येत्येतेन पदद्वयेन उदात्तं प्रथमादेशे अनुदात्तमन्वादेश इत्येवं नवमे[3] व्याख्यातः । पुराऽनवगतस्तत्रोक्तः । इहानेकार्थत्वा[4]दुपन्यासः । त्रित एनमापुनगित्येवमादीन्युदाहरणानि व्याख्यातानि ।

सृणिरित्यनवगतम् । । अङ्कुशोऽभिधेयः[5] । सरणादिति व्युत्पत्तिवचनम् । सरणाद् गमनात्[6] सरणः सन् सृणिः[7] । पर्यायप्रसक्त[8]मङ्कुशं निराह । अश्नतेरश्नति[9] ह्यसौ हस्तिपकहस्तात् हस्तिमस्तकं नित्यम् । आकुश्चितो वासौ भवति 'कुञ्च कौटिल्ये[10]' घट्टनाविशेषेणाभिमुख्येन कुटिल इत्यर्थः । निगमेन[11] हस्त्यङ्कुशस्यासंगतेः क्रियामात्रादत्राङ्कुशोऽभि[12]प्रेतो लोपितव्यः[13] । प्रतिसारणात् सृणिः अश्नादङ्कुश आकुटिलाकाराद्वा । तथाच क्वचिदेवासौ दात्रमङ्कुश इति भाष्ये । उदाहरणम्[14]—

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्यः पक्वमेयात्[15] ॥

बुधस्य[16] सोमपुत्रस्यार्षम् । युनक्त हे हालिकाः सीराः सीराणि हलानि । तदर्थं च वियुगस्ततुध्वं वितनुत च युगानि । तदनन्तरं हलबलीवर्दसंयोगोपपत्तेः । तैश्च सीरैः कृते च संस्कृते कृष्ट इत्यर्थः । तेनायमर्थः । सदा धान्यशलाकाः सपरा वार इति श्रीयमाण[17]त्वात् फलमुच्यते संभृतफला[18] आपूरितबृहच्छीर्षकेत्यर्थः । असत् लोडर्थे लिङ्, भवतु । नोऽस्माकम् । किञ्च नेदीयोऽन्तिकतरं सन्निकृष्टतरं च । इत् पदपूरणः । सृण्यो[19]ऽङ्कुशात्

---

* '०नेकार्थश्च' इति स्यात् ।

१–'मभेरर्थे' इति पाठो युक्तः ।

२–अत्र 'व्याख्याताः' इति बहुवचनान्तः पाठो युक्तः स्यात् । परि [निरु० १।३] ईम् [निरु० १।७] सीम् [निरु० १।९] इत्येते व्याख्याताः ।

३–[ निरु० ४ । २५ ]

४–इहानकार्थ C. ५–'अ' इति त्रुटितम् C.

६–'गमन' इत्येव B. C. ७–सृणिम् B.

८–पर्यास प्रस C.

९–'अश्नति' इति नास्ति B.

१०–[धा० १।१८५]

११–नियमेन C.

१२–क्रियामादात्रमात्रांकुशो C.

१३–लोपितव्यः C.

१४–'उदाहरणम्' इति नास्ति B.

१५–[ऋ० १० । १०१ । ३ ॥ यजु० १२ । ६८] 'युनक्त सीरा' इत्येव प्रतीकम् B. C.

१६–युध सोमपु C. १७–मृयमाणत्वात् C.

१८–संभृतफल C.

१९–सृण्या: B.

प्रागेव दात्रलवनादित्यर्थः । मुष्टिन गृहीतमात्रमेवेत्यभिप्रायः । पक्वं सत् । किम् ? सामर्थ्याद् यवादि धान्यम् एयाद् आगच्छतीत्याशास्महे ।

सृणिशब्दस्य स्वव्यापारे लक्षणतां दर्शयति । अङ्कुशाभावादिति । अङ्कुशाकर्षणादित्यर्थः । द्विरभ्यासोऽध्यायपरिसमाप्तिज्ञापनार्थ इति सिद्धम् ।

इति [ आचार्यमहेश्वरकृते ] निरुक्तविवरणे
दशमो-[ पञ्चमो- ] ध्यायः
समाप्तः ।

---

१–गृहतमामेत्रेवत्यभिप्रायः C.
२–'त्' इति त्रुटितम् C.
३–घृणिशब्दस्य B. C.
४ अत्र 'अङ्कुशादायादिति' इति मूलानुसारी पाठो युक्तो भवेत् ।
५–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।
६–'समाप्तः' इति नास्ति B.

## [ अथ षष्ठोऽध्यायः[1] । प्रथमः पादः । ]

आशुशुक्षणिरित्यनवगतमनेकार्थं च । अग्निर्वा मनुष्यो वाभिधेयः । यदा अग्निराशुशुक्षणिस्तदा[2] सनिता[3] वेत्यवगमः[4] । यदा मनुष्यस्तदा[5] शुशोचयिषोरिति । उदाहरणम् ।

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥[6]

गृत्समदस्यार्षम् । त्वं हे अग्ने द्युभिरहोभिर्जा[7]यस इत्यर्थः । सप्तम्यर्थ एषा[8] तृतीया । द्युषु दिवसेषु अमावास्यादिषु आधानकाल[9] इत्यर्थः । अरणिजो[10] निर्मथ्यमानो वा जायसे[11] । त्वं[12] त्वमेव चाशुशुक्षणिः आशुशुचा दीप्त्या । कस्य[13] ? सामर्थ्यात् तमसः[14] । सनिता वा संभक्ता वा सर्वस्य पाकदाह[15]प्रकाशनादेर्व्यापारस्य । अलौकिकस्यात्मना वा जायसे । पञ्चम्यर्थे वा आशुशुक्षणि[16]रित्येषा प्रथमा । अस्मिंश्च पक्षे आङ्पूर्वस्य शुचेर्दीप्तिकर्मणः सनि एतद्रूपम् । आदिदीपयिषोः पुरुषात् तेन मथ्यमानो जायस इत्यर्थः । एवंच कृत्वा पक्षद्वयेऽप्यर्थभेदाद् भेदप्रदर्शनार्थत्वाच्चावग्रहस्य अन्यतरपक्षपरित्यागकारणाभावात् पक्षद्वयापेक्षया एतत्पदं पदकारा नावगृह्णन्ति । त्वमद्भ्यस्त्वमेवाद्भ्यो वैद्युतात्मना । त्वमश्मनस्त्वमेव पाषाणादस्यान्तरेण लोहेन वाभिहन्यमानात् । परि[17] त्वं वनेभ्यस्त्वमेव वृक्षेभ्यो वायुना परस्परं संघु[18]ष्यमाणेभ्यः । त्वमेव शरवशादिभ्य ओषधीभ्यः । एवं त्वं ततस्ततो नृणां मनुष्या[19]णामर्थायेति[20] शेषः, हे नृपते मनुष्यपते सर्वतो जायसे शुचिर्दीप्तः । अथवा नृपतिशब्दो निरस्तपूर्वापरविभागः स्वामिवचनत्वेन रूढः । तेन नृणां पते[21] नृपते मनुष्याणां स्वामिन्नि[22]त्यर्थः ।

---

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B अयं सर्वोपि पाठोऽध्यायाद्यारम्भात्मको नास्ति C.
२–ता B. C.
३–'आशुशुक् सनिता वा' इति युक्तं स्यात् । ततश्च वाकारोऽपि संगच्छते ।
४–त्यनवगमः B. C. ५–तद C.
६–[ऋ. २।१।१] 'त्वमग्ने' इत्येव प्रतीकम् B. C.
७–'भ' इत्येवादर्शपुस्तकपाठः ।
८–एषा स तृती C.
९–अथवा काल B. आथान काल C.
१०–अरणिनो C.
११–जयसे C.
१२–'त्वं' इति नास्ति B.
१३–तस्य B. १४–तमसा C.
१५–वाकदाह B.
१६–वा वाशुशु C. १७–उपरि त्वं B.
१८–'सं' इति नास्ति C. 'संघृष्यमाणेभ्यः' इत्युचितम् ।
१९–मनुष्यायेणां C.
२०–'अत्वायेत्रि' इत्यादर्शपुस्तकपाठः ।
२१–'नृणन्नृपते' इत्येव C.
२२–स्वामिनीत्यर्थः C.

प्रविभज्य निराह आशु इति । प्रासङ्गिकमेतत् । शुनो वायुरित्यर्थयुज्यते । क्षिप्रनाम इत्यत्राख्यं क्षिप्रनामसु पाठात् । निर्विवक्षयोपन्यास इति चेन्न निपातत्वात् । तस्मात् क्षिप्रनामनी इति नित्यानुवादः । क्षणिरुत्तरः अत्राप्युत्तम इति न्याय्यम् । मध्यमस्यापि शु इत्येतस्यापि भावात् । क्षणोतेः 'क्षण हिंसायाम्' इत्यस्य ।

अथवा एवमन्यथा स्यात् । पञ्चम्यर्थे प्रथमेयं विभक्तिराशुशुक्षणिरित्याह । किं पुनः कारणं प्रथमैषा सती पञ्चमीत्वेन विपरिणम्यत इति ? उच्यते । तथाहि वाक्यसंयोगः । तेन हि प्रकारेण पञ्चमीत्वेन विपरिणतस्यास्य शब्दस्य अनेन वाक्येनार्थसंगतिर्भवति नेतरथा यथावस्थितस्य । आह कथं कृत्वेति ? उच्यते । त्वमद्भ्यः, त्वमश्मनः, वनेभ्य इत्येतान्युत्तराणि बहूनि पदानि पञ्चम्यन्तानि । तस्मादनेनापि पञ्चम्यन्तेनैव भवितव्यमित्युपपद्यते पञ्चमीत्वेन विपरिणाम इति । आशुशुक्षणिरित्येतस्याक्षरपञ्चकस्य य एष पुरस्ताद् आ इत्युपसर्गः शुशुक्षणिरित्युत्तरश्चतुरक्षर एष चिकीर्षितः सन्नन्त इत्यभिप्रायः । अथ समस्तस्य कोऽर्थ इति ? उच्यते । यः कश्चिदाशुशोचयिषुरादिदीपयिषुर्भवति स आशुशुक्षणिस्तस्माद् आशुशुक्षणे त्वं भगवन् हे अग्ने जायसे लोकप्रसिद्धः । शुचिराषाढोऽयं ग्रैष्मो मास इत्यस्मादेव धातोर्दीप्तत्वान्निर्मलत्वादिति वैयाकरणा मन्यन्ते । निष्षिचेर्नैरुक्ता इत्याह । निःक्षारितं कात्स्न्येनापनीतमस्मात् पापकम् । सिचेः शुचिरित्याह ।

आशा इत्यनवगतम् । यथादृष्टं वेदे तथा पठितम् । दिशोऽभिधेयाः । आसदनादिति व्युत्पत्तिवचनम् । शादिर्गत्यर्थः । तं तमर्थं प्रत्यागमनात् । आशाना इत्यवगमः । उपदिश इत्यतोऽनेकार्थता । अभ्यशनात् परस्परं दिग्भिरहोभिः संव्याप्तेः । उदाहरणम्—

> इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् ।
> जेता शत्रून् वि चर्षणिः ॥[14]

गृत्समदस्यार्षम्[15] । इन्द्रः आशाभ्यो दिग्भ्यः । परि करदित्येतेन सम्बध्यते सर्वाभ्यो दि-

१–'प्र' इति नास्ति B. २–'त्र' इति त्रुटितम् B.
३–[धा० ८।३] 'क्षणु' इति धातुपाठे पाठः ।
४–संहतिर्भवति B. C. ५–इतीति C.
६–'त् आ इत्युपसर्गः शु' इति त्रुटितम् C. 'इत्युपसर्गः' एतावदेव त्रुटितम् B.
७–'इति' इति नास्ति B.
८ शुचिः पुरुषमग्रैष्मो B. C.
९–निष्टीचैर्निरुक्ता B. निष्फिचेर्नैरुक्ता C.
१०–निष्कारित कात्स्न्येनापरीतमस्यात् B. निक्षारित कात्स्न्येनावनीयतं अस्मात् पावकम् C.
११–'स' इति त्रुटितम् B. C.
१२–अभ्ययनात् B. १३–रहेतोभिः B.
१४–[ऋ० २।४१।१२] 'इन्द्र आशाभ्यः' इत्येव प्रतीकम् B. C. १५–'आर्षम्' इति नास्ति C.
१६– तनूः B. तन्दः C. १७–दिश्यः C.
१८–कर इत्येतेन B.

भ्यः। दिग्भिरत्र तन्निवासिनो लक्ष्यन्ते[1]। सर्वदिङ्निवासिभ्यो भयंकरेभ्यो रक्ष आदिभ्योऽस्माकमभयं परिकरत सर्वतः करोत्वित्यर्थः। कीदृश इन्द्रः? जेता ताच्छीलिकस्तृनयम्। तृन्प्रयोगे च षष्ठीप्रतिषेधाद्[2] द्वितीयैव शत्रूनिति। शत्रून् जेता एवंशीलः। विचर्षणिः पश्यतिकर्माऽयम्। द्रष्टा यो लोकपालत्वात्[3] कृत्स्नस्य जगतः।

काशिरित्यनवगतम्। मुष्टिरभिधेयः। प्रकाशनादिति निर्वचनम्। प्रकाश्य इत्यवगमः। प्रसक्तं मुष्टिं निराह कोचनादेव मोक्तव्यो ह्यसौ भवति। मोषणाद्वा मुष्टिर्मुषितमिवे[4] तदन्तर्गतादर्शनसामान्यात्[5]। मोहनाद्वा किमत्रेत्यज्ञान् मोहयतीति मुष्टिः। उदाहरणम्[6]—

उताभयं पुरुहूत श्रवोभिरेको दृह्ळमवदो वृत्रहा सन्।
इमे चिदिन्द्र रोदसी अपारे यत् संगृभ्णा मघवन् काशिरित्ते ॥[6]

विश्वामित्रस्य। परोश्च[7] तिस्रः। उताप्यर्थे। अभव इत्यपि सामर्थ्याल्लुप्तोपमं द्रष्टव्यम्। अभयमिव भवतीत्यर्थः। कस्मिन्? संग्रामे। पुरुहूत बहुभिराहूत श्रवोभिः श्रवणीयैः शब्दैरेकस्त्वं दृढं[8] सुष्ठु उच्चैरित्यर्थः। अवदो वदसि[9] युद्धायां वयसि सिंहनादं नंदसीत्यर्थः[10]। वृत्रहा वृत्राणां शत्रूणां[11] हन्ता[12] सन् शत्रुवधवेलायामित्यर्थः। चिदिति[13] वार्थे इमे वा इन्द्र रोदसी द्यावापृथिव्यौ। किंविशिष्टे? अपारे[14] सत्यपि द्यावापृथिवीनामगुणत्वे गुणनिमित्तत्वमस्य द्रष्टव्यम्। अविद्यमानं पारमन्तं ययोस्ते अपारे इत्यर्थः। यत यस्मान्मुष्टिना संगृभ्णा संगृह्णासि[15] हे मघवन्। यस्मादिति श्रुतेस्तस्मादित्यध्याहारः। तस्मात् काशिरित[16] इच्छब्दोऽत्र महत्त्वे अहो मुष्टिस्ते तव महान्।

रोदसी कस्मात्? रोधसी[17] सत्यौ रोदसी। द्यावापृथिव्यावभिधेये। विरोधनादिति[18] निर्वचनम्। ताभ्यां हि विविधं रुद्धानि[19] सर्वभूतानि ततो बलिनोऽभावात्[20]। सारूप्यप्रसक्तं रोधः। कूलमित्यभिधेयम्। तदपि निरोधनादेवेत्याह निरुणद्धि वहत्[21] स्रोतः। अनुप्रसक्तं कूलं

१—वक्ष्यन्ते C.
२—[ पा० २ । ३ । ६९ ]
३—दृष्ट्वायलोपाल B. दृष्टाय लोक C.
४—मुष्टितमिव C.
५—दर्शनसामर्थ्यात् B.
६—[ऋ० ३।३०।५ ]'उताभये' इत्येव प्रतीकम् B. C.
७—वराश्च C.
८—'दृढं' इति त्रुटितम् B. न्द्र C.
९—अवदसि C.
१०—नन्दसी C.
११—श्रवाणां B. श्रवणां C.
१२—हता C.
१३—इमे चव इन्द्र B. इमे चितीति वार्थे इमे चर्वो इन्द्र C.
१४—व्यापारे B.
१५—संगृह्णाः B. C.
१६—काशिद B. काशित .C
१७—रोदसी C. 'रोधसी सत्यौ' इति त्रुटितम् B.
१८—'ति' इति त्रुटितम् B.
१९—रुत्वानि B. रुन्धानि C.
२०—बलिरभावात् B. C.
२१—वहन् B

निराह रुजतेराद्यन्तं[1] विपरीतात्। जकारस्य कुत्वं रेफस्य लत्व मुकारस्यदीर्घत्वम्। आरुज्यते कदाचित् स्रोतसा। हस्तीवेनिरोगम्[2]। कूलविपर्ययप्रसङ्गादस्यैव धातोर्वि[3]-पर्ययेण यत्तन्निराह लोट इति लत्वा[4]पस्या। दुरत्वेन पराभावं दर्शयति परा दृष्ट्या वा लोक[5]पर्यन्तता।

कुणारुमित्यनवगतम्। क्वणतेः शब्दकर्मणः। ताच्छीलिक आरुः। सम्प्रसारणं छान्द-सत्वात्। क्वणन इत्यवगमः। मेघोऽभिधेयः। उदाहरणम्।

सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र सं पिणक्कुणारुम्।
अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ[6]॥

सहस इत्युदकनाम्नश्छान्दसत्वादन्त[7]लोपः। सहस उदकस्य दातारं सहदानुम्। हे पुरुहूत बहुभिराहूत क्षियन्तमन्तरिक्षे निवसन्तम्। अरुस्तम[8]प्रत्यवस्थानसमर्थं कृत्वेति शेषः। हे इन्द्र संपिणक् 'पिष्लृ संचूर्णने'[9] संपिण्ढि संचूर्णय कुणारुं क्वणनं शब्दशीलम्। सामर्थ्याद् मेघम्। इमं चापरम्। अभीत्ययं वर्धमानमित्येतेन सम्बध्यते। वृत्रं वर्तिकारं नष्टारमित्यर्थः। अभिवर्धमानं[10] सर्वतः पृथुभवन्तं पियारुं[11] पियतिर्हिंसाकर्मा[12] तत आरुस्ताच्छील्ये अर्हार्थे वा। हिंसाशीलं[13] बहूदकत्वाद्वा हिंसार्हम्। अपादमपयानासमर्थं कृत्वेति शेषः। इन्द्र तवसा[14] बल-नामैतत्, बलेन जघन्थ जहि मारयेत्यर्थः।

अलातृण इत्यनवगतम्। अलमत्रोपपदं[15] आङ्पूर्वस्य तृदेर्ल्युटि अलमो मकारस्या-कारेण व्यापत्तिर्वर्णलोपश्च तृदेर्दकारस्य अन इत्यस्य च प्रत्ययस्याकारस्य। अलमातर्दन इत्यवगमः। उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या--) ध्यायस्य
प्रथमः खण्डः।[16] ]

---

१—आध्यन्तं B.

२—हस्ती वे निग्यम् B. सन्दिग्धमिदं वाक्यम्।

३—धान्वार B. धान्तार C.

४—त्वावत्या C. ५—वा लेक प C.

६—[ऋ० ३।३०।८] 'सहदानुम्' इत्येव प्रतीकम् B. C.

७—'न्त' इति त्रुटितम् B.

८—'अ' इति नास्ति B. C. प्रत्यवसानसमर्थं B.

९—[धा० ७।१५] पिण संचू० B. विषण संचू० C.

१०—वर्धनं मानं B.

११—वियारुं B. C.

१२—वियतिर्हि B. C. १३—सिंहा शील B. C.

१४—तपसा. C.

१५—'अलमत्र···देर्लु (ल्लु C.) टि अलमो मका-रस्याकारेण व्यापत्तिर्वर्णलोपश्चात्र दोकारस्यात इत्यस्य च प्रत्ययस्य कारस्य लमातन इत्य-वगमः' अयमादर्शपुस्तकपाठः। मूले त्वस्मा-भिरेव संशोध्य तथा पाठो लिखितः।

१६—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ द्वितीयः खण्डः ][1]

अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार ।
सुगान् पथो अकृणोन्निरजे गाः प्रावन् वाणीः पुरुहूतं धमन्तीः ॥[2]

अलं पर्याप्तमातर्दनं हिंसा यस्य बहूदकत्वात्[3] । वलो[4] मेघः हे इन्द्र व्रजो[5] व्रजितान्तरिक्षे गोः पञ्चम्यन्तमित्येतद् भयमान इत्येतेन सम्बध्यते। एतस्यास्तदीयाया माध्यमिकाया गोर्वाचः पुरा हन्तोः प्रागेव हननाद् यावत् त्वया नैव हन्यते तावदेवेत्यर्थः । भयमानो[6] गोरेव बिभ्यद् व्यार 'ऋ गतौ' इत्यस्य लिटि रूपम्, व्यगच्छत्[7] विविधं गतः[8], विशिष्टसन्धिबलिनी-[9]भूत इत्यर्थः । विशिष्टस्य च सुगान् सुगमान् पथो मार्गान् निर्गमनलक्षणानकृणोद् अकरोत् । किमर्थम् ? निरजे निरजनाय निष्क्रमणाय । गाः द्वितीयैषा षष्ठ्यर्थे, गवामन्तर्गतानामपाकृतेषु च पथिषु प्रावन्[10] अवतिर्गतिकर्मा[11] आगच्छन्[12] वाणीरपो[13] वृष्टिलक्षणाः । पुरुहूतमुदकं पार्थिवं प्रति शेषः । अथवा वाणीरिति[14] वाचो नाम[15] अहो शोभनं[16] वर्षमहो शोभनमित्यादिका वाचः प्रागच्छन्[17] बहुभिराहूतं वृष्टिलणमुदकं धमन्तीर्धमतिर्गतिकर्मा छान्दसत्वात् पूर्वसवर्णः, धमन्त्यो[18] गच्छन्त्यः क्रमेण[19] ।

वाणीशब्दस्यार्थनिर्वचनम् । आपो वा वहनादित्यादि[20] । आपो वाणीशब्देनोक्तास्ता हि वहनाद् वाणिरित्युच्यन्ते । वाचो वा वदनाद् वाणीशब्देनोच्येरन् । धमिर्गतिकर्मा अत्र स्तुतिकर्मा स्तुतिकर्मसु पाठात् ।

सल्लूकमित्यनवगतम्[21] । 'लुभो विमोहने[22]' निष्ठायामिट्स्मरणात् सालुभितमित्यवगमः । ततश्च संलुब्धमित्यपपाठः[23] । अक्षोऽभिधेयमिति[24] केचित् पापकं[25] मन्यते कुत्सित-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ३।३०।१०] 'अलातृणः' इत्य प्रतीकम् B.C
३–कत्वास C. ४–पलं B. पलः C.
५–व्रजन B.
६–[धा० १।९६१]
७–व्यागच्छत् B. ८–गतम् C.
९–सन्ति बलिनी C.
१०–प्रापत् B. प्रापन् C.
११–[धा० १।६०१] अञ्चतिर्ग B. C.
१२–आगच्छत् B. १३–पाणिः अव C.
१४–पाणीति C.
१५–पादनाम B. वादेनाम C.
१६–'अहो शोभनं वर्षम्' इति नास्ति C.
१७–प्रागच्छत् B. १८–वमन्त्यो B. C.
१९–'ण' इति त्रुटितम् B. C.
२०–ताभिरवहननाद् B. ताभिवहनाद् C.
२१–त्यवगतम् C.
२२–[पा० ७।२।५४]
२३–त्यवपाठः C.
२४–रक्षोऽभिधे C.
२५–पावकं B. C

मनिष्टफलमिति नैरुक्ताः । ततश्चानेकार्थमपि । अथवा सररूकमेतत् । सररूकाल्लसल्लत्वा-पत्त्या सलल्लूकम् । सररूकं कस्मात् ? उच्यते । सर्तेर्धातोर्जेरुत्वद्रुते प्रत्यये गुणे रपरत्वे चास्य नैगमं द्विर्वचनम्, अत आह अभ्यस्तादिति । उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य
द्वितीयः खण्डः[6] ]

---

१—कालस . C. २—ललल्लूकम् . C.
३—चैते . चेते C.
४—अयं सन्दिग्धः पाठः । जारुत्व C.
५—निर्वचनम् B. C.
६—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ तृतीयः खण्डः ][1]

उदू॑वृह रक्षः॑ स॒हमू॑लमिन्द्र वृ॒श्चा मध्यं॒ प्रत्यग्रं॑ शृणीहि ।
आ कीव॑तः सल्ल॒कं॑ चकर्थ ब्रह्म॒द्विषे॒ तपु॑षिं हे॒तिम॑स्य ॥[2]

उदूवृह उद्यज उत्खन[3] । किम् ? रक्षः सहमूलं सानुबन्धमित्यर्थः । हे इन्द्र उद्वृह्य च वृश्च छिन्धि मध्यमुदरप्रदेशं पाटयेत्यर्थः । प्रत्यग्रं शृणीहि[4] प्रतिशातय चास्याग्रं कर्णनासिकादेः । एवं चोद्धृतपाटितशातितमूलमध्याग्रमपि[5] सद् आँ[6] कीवत आदेर्मध्यादग्राच्च[7] कियत इति । किमो[8]ऽत्र घाभावश्छान्दसः । आ कियतोऽपि अनिर्ज्ञायमान[9]परिमाणाद्[10] दूरादित्यर्थः । सल्लूकं संलुभितमत्यन्तमूढ*मूर्च्छायुक्तमित्यर्थः । सरणशीलं वा अत्यन्तं दूरं[11] नष्टमित्यर्थः । चकर्थ कुर्विति[12] । कृत्वा च ब्रह्मद्विषे तादर्थ्ये चैषा चतुर्थी । निवृत्तिश्चात्र तादर्थ्ये विवक्षितम् । मशकेभ्यो धूम इति यथा । अस्य ब्रह्मद्विषो निवृत्त्यर्थे[13] तपुषिं ताडयितारम् । कम् ? हेतिं वज्रनामेदम्, वज्रमे[14]स्य क्षिप उक्तेन प्रकारेण दूरमुत्कृ[15]ष्य मारयेत्यर्थः ।

उदूवृह इत्यादेर्मूलतो मध्यतः शिरस्तश्चैवं तावत् प्रत्यक्षमीक्ष्य शृणीहि[16] जहि मारणं कुर्वित्यर्थः । एवमयं प्रथमोऽर्धर्चः[17] प्रत्यक्षरक्षोविषयः । आकीवत आकियतो[18]ऽपि[19] देशाद्[20] यदपि दूरदेशस्थं तदपि सल्लूकं संलुभितमूढ†मस्मिन् प्रत्यागमनासमर्थम् । सररूकं वा तरो[21]ऽपि नष्टं कुरु । ब्रह्मद्विषे ब्रह्मद्विद्[22] नास्तिको भिन्नदृष्टिरसाधु[23]रित्यर्थः । तस्मै तपुषिं हेतिमस्येति समानम् । एवमनेकार्थविषया प्रार्थनैषा नैकवाक्यतां विरुणद्धि 'नूनं सा ते'[24] इति यथा ।

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२—[ऋ० ३।३०।१७] 'उद्वह रक्षः' एवं प्रतीकम् B. C.

३—उत्खननं (न C.) B. C.

४—गृणीहि B. C.  ५—मचि सत् B.

६—आखितमादिमध्यादाचङ्कित इति B. आरिवत आदे मध्यादायं रिवत इति C.

७—किमोढगा (घा C.) भाव B. C.

८—आरीपततापि B. C.

९—'मान परि' इति त्रुटितम् C.

१०—णान् दूरा B. C.

* '०मूढं मूर्च्छा०' इति स्यात् ।

११—'दूरं' इति नास्ति B.  १२—कुर्वीत B.

१३—र्थः तपृषिं B. तडुषिं C.

१४—'म' इति त्रुटितम् B.

१५—दूरमूडीकृत्य C.  १६—शृणीभि C.

१७—र्धर्चे……विषयं B.

१८—कियतः B.  १९—कीवतोऽपि C.

२०—देशाः B. देशा C. '०तं मूढ०' इति स्यात् ।

२१—अत्र 'दूरतारोऽपि' इति 'दूरतरमपि' इति वा युक्तो पाठो भवेत् ।

२२—द्विनायास्ति B. नास्ति C.  २३—ष्टि असुधु C.

२४—[ऋ० २।१६।९ ॥ निरु० १।७]

यद्यपि नैरुक्तपक्षः[1], तदापि उद्वृह रक्ष इति रक्षो रक्षितव्यं यस्मादिति पापकमु-[2]च्यते। तत् सहमूलं[3] सानुबन्धमुर्द्धर[4] अस्मत्तोऽपनयेत्यर्थः । कथं च तत्सानुबन्धमपनीतं भवति ? यदि खण्डशः शात्यते[5]। अत उच्यते वृश्च[6] मध्यं प्रतिशृणीहि अग्रमिति। एवमने-नार्धर्चेन कृतस्य पापस्यानयः[7] प्रार्थ्यते, परेण करिष्यमाणस्य । आ कीवतः कालादिति द्रष्टव्यम्। अनिर्ज्ञायमानपरिमाणात् कियतोऽपि[8] कालस्य यावज्जीवभावादित्यर्थः। तदपि सलल्कं समूढमस्मत्प्राप्ति[9] प्रत्यसमर्थं कुरु[10] नष्टं वा यथा तच्चिकीर्षा न जातुचिन्मनागपि मनसि समुल्लसति असमर्थं कुर्वित्यर्थः[11]। किञ्च ब्रह्मद्विषे ब्रह्म तृतीयलक्षणं तत्पुरुषनिः-श्रेयसं सुखसाधनं तत्प्रतिद्वन्द्वभावात् पापकद्विट्[12] तस्मै हेतिमस्य तद्विषयश्चित्तो माघेऽपि[13] कदाचिन्माभूदित्यर्थः।

मोचनादङ्कुरादीनां[14] तदेव वा वृक्षाद् बन्धान्मोचयितव्यम्। मुषितमिव वा तद्वृत्ति-[15]तयान्तर्हितत्वात्। मोहनाद्वा परस्परमेव[16] समूढत्वात् छेत्तुर्वा मोहनात् पांसुभिराच्छन्न-[17]त्वान्न ज्ञायते कियदधोगतो[18] कियत्तिर्यग्गतेति । आगतमाभिमुख्येनार्धावगतं भवति। पुत्रवते[19] इति पाठः।

कत्पयामित्यनवगतम्। कमिति[20] सुखनाम तस्येयं मकारस्य तकारेण व्यापत्तिः। छान्दसत्वात् पयसश्च सलोपः[21]। कंपयसमित्यवगमः[22]। सुखमस्य पय इति निर्वचनम्। मेघोऽभिधेयः। उदाहरणम्—

त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम्।
तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान॥[23]

---

१—नैरुक्तपक्षः B. C. २—पावकमु C.
३—सहमूलं C. ४—ऊर्ध्वर C.
५—शाव्यते B. ६—व्रश्च B
७—स्य नयत् B. '०स्यापनयः' इत्युचितम्
८—कियन्तापि C. अत्र 'कियतोऽपि' इति पाठो युक्तो भवेत्।
९—स्मात् C. स्मात् प्राप्तं B.
१०—'रु' इति त्रुटितम् B. C.
११—मध्य कुर्वीत्यर्थः B. मुर्थ्य कुर्वित्यः C.
१२—पावकद्विगतस्यै ( स्मै C. ) हेतमस्य B. C.
१३—अयं पाठः सन्दिग्धः ।
१४—'मोचनात्' इत्यारभ्य 'पुत्रवत इति पाठः' इत्यन्तः पाठो न सलल्कपदव्याख्यानस्य संभवति। कदाचित् काशिपदव्याख्यानावसरे [ निरु० ६।१ ] प्रसङ्गागतस्य मुष्टिपदस्य व्याख्याभूतोऽयं पाठः स्यात्। परं तत्रापि तादृक् स्थलं नोपलभ्यते यत्रास्य पाठस्य योजना संगता भवेत्।
१५—तन्मित्तिकया C.
१६—वरप्सरमेव C. १७—राजन्नत्वा न ज्ञा C.
१८—गतो किय C. १९— पुत्रवतेरिति C.
२०—किमिति B. C. २१—सवोचः B.
२२—मित्यनवगमः B. C.
२३—[ऋ० ५।३२।६]'त्यं चिदित्था'इत्येव प्रतीकम् B.C.

गातुर्नाम आत्रेयस्तस्यार्षम् । त्यमिति मेघस्य प्रतिनिर्देशस्तच्छब्दसमानार्थः। त्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । चिदेवार्थे । यं पश्यति[1] त्यं तमेव । इत्था[2] अमुत्रान्तरिक्षे कल्पयं[3] सुखं पयो यस्य तं मेघं शयानं शयतिरत्र स्थानार्थः, आमाशयो जलाशय इति यथा तिष्ठन्तमित्यर्थः । असूर्ये तमसि यस्मै मेघेन सूर्यस्य[4] गमनं कृतं तेनाच्छादितत्वात् सूर्यो यत्र न दृश्यते तदसूर्यं तमस्तस्मिन् वावृधानं वर्धमानम् । तं[5] तृतीयार्थे एषा द्वितीया । तच्छ्रुतेश्च योग्यार्थसम्बधो यच्छब्दोऽध्याहार्यः । येन यज्ञा उपकल्प्यन्ते तेन सोमेन । चित् पदपूरणः । मन्दानो वृषभो वर्षिता[6] सुतस्य तृतीयार्थे षष्ठ्येषा, सुतेनाभिषुतेन[7] सोमेन तृप्तः सन् । उच्चैरिन्द्रोऽपगूर्य[8] उद्यम्य । किम् ? सामर्थ्याद् वज्रं तेन जघान हतवान् हन्ति वा ।

विस्रुह इत्यनवगतम् । आप इत्यभिधेयवचनम् । विस्रवणादिति निर्वचनम् । विस्रव[9] इत्यवगमः । उदाहरणम्—

> वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना ।
> तस्येदु विश्वा भुवनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः ॥[10]

भरद्वाजस्यार्षम् । वैश्वानरस्य भगवतो[11]ऽग्नेश्चक्षसा दर्शनेन देवतामाहात्म्यादतिशयवत्या कयापि प्रज्ञयेत्यर्थः । विमितानि निर्मितानि उत्पादितानि सानूनि समुच्छ्रितोः[12] प्रदेशा दिवो द्युलोकस्य । अमृतस्य[13] वैश्वानरविशेषणमेतत्, मरणवर्जितस्य । नच केवलया प्रज्ञया किं तर्हि केतुना कर्मणा व्यापारेण च हविर्वहनादिना । एतदुक्तं भवति तदधीनत्वाद् यागादेर्धर्मस्य धर्माधीनत्वाच्च कृत्स्नस्य जगतो निर्माणस्य । अथवा अपिच सत्त्वानां प्रकृतिभूता[14] ऋषयः स्तुवन्तीत्याहुरिति प्रकृतिमाहात्म्येनेयं विकारस्य स्तुतिः । यो हि जगतः स्रष्टा कारणात्मा तस्य प्रज्ञाव्यापाराभ्या दिवः[15] सानूनि निर्मितानीत्युच्यन्ते ।

तस्येदु इच्छब्द[16] एवार्थे उं[17] इति पदपूरणः । तस्यैव वैश्वानरस्य पृथिव्यामनुप्रविष्टस्य विश्वा भुवना सर्वाणि भूतजातानि अधिमूर्धनि मूर्ध्न उपरि तस्य प्रकृतत्वाद्वैश्वानरस्यैव।

१–पश्यती B C.
२–अर्थे वा B. अर्था मा C.
३–कल्पयन् B. कल्पयं C.
४–सूर्यस्थगनं C.
५–‘तं’ इति त्रुटितम् B,
६–मर्षिता B. C.
७–स्तुतेनाभिष्टुतेन B.
८–अवगूर्य C.
९–विस्र B. विस्राः C.
१० [ऋ० ६।७।६] ‘वैश्वानरस्य विमि (दिवि C.) तानि’ इत्येव प्रतीकम् B. C.
११–‘भगवतो’ इति त्रुटितम् B.
१२–तान् प्रदेशान् C.
१३–अवृतस्य B. C.
१४–प्रकृतिभूम B.
१५–दवः B. C.
१६–उच्छद B. उच्छब्द C.
१७–‘उ’ इति त्रुटितम् B. C.

वया इव[1] शाखा इव वृक्षस्य रुरुहुः रुहिर्जन्मार्थः, विरोहन्ति जायन्त इत्यर्थः । नच भूतान्येव केवलानि, किं तर्हि ? सप्त विस्रुहः सप्तसंख्याका[2]श्चापः । कथं पुनरपां सप्तसंख्याकत्वम् ? उच्यते । आधारभेदात् प्रधानभूता गङ्गाद्याः सप्त नद्यः, तासां समुद्राणां सप्तसंख्याकत्वं प्राधान्याच्च । तत्स्थानामपां भूयस्त्वाद् गणनान[3]र्हत्वादिति । कथं पुनरिदमुभयं वैश्वानरस्य मूर्धनि विरो[4]हति ? उच्यते । उभयमिदं पृथिव्या मूर्धनि तथा 'ऋबीसे अत्रिम[5]श्विनौ' इति मन्त्रवर्णः ।

वी[6]रुध इत्यनवगतम् । ओषधय इत्यभिधेयवचनम् । विरोहणादिति निर्वचनम् । के[7]रुहा इत्यवगमः । मूलविभुजादित्वाद्वा के विरुहा विरोहिण्य इति वा । उदाहरणम्—

ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्ण्वः[8] ॥

भिषगाथर्वणो नाम तस्यार्षम् । ओषधीः अत्र सर्वत्र प्रथमा द्वितीयार्थे, हे ओषधयः प्रतिमोदध्वं परया पुष्ट्या हृष्य[*]न्त । पुष्पवतीः पुष्पवत्यः प्रसूवरीः प्र[9]सववत्यः । अश्वा इव वडवा इव सजित्वरीः यथा वडवाः सहजै[10]त्र्यः संग्रामस्य तद्वद् यूयं [11]व्याधीनां क्षुधां वा सहभूतया जै[12]त्र्यो वीरुधो विरोहिण्यः [13]पारयिष्णवः [13]पारयित्र्यश्च विश्वस्य ।

नक्ष[14]द्दाभमित्यनवगतम् । यदि तावद् वैयाकरणा धातुर्नक्ष[15]तिः 'तृक्ष स्तृक्ष णक्ष [16]गतौ' इति । तस्य गतिकर्मत्वाद् व्याप्तिकर्मत्वे धात्वर्थानवगमः । अथाप्यनेकार्थत्वाद् व्याप्तिकर्मसु च 'इन्व[17]ति नक्षति' इति पाठाद् नक्षतिर्व्याप्त्यर्थ[18]श्चापि । तथापि संस्कारानवगमः । कथम् ? नक्षदानमभ्य[19]श्नुवानं दभ्नोतीति कर्मण्यणि [20]दम्भेरनुनासिकाच्चोपलक्षणाभावाद् नक्षद्दम्भमिति स्यात् । अश्नुवानदा[21]भमिति नक्षतेर्व्याप्तिकर्मणः प्रदर्शनम् । अभ्यशनेन दभ्नोति

---

१–भुव B. C.
२–'का' इति नास्ति B.
३–नार्हज्या ( ज्ञा C. ) दिति B. C.
४–विरोहन्ति B. C.
५–[ ऋ० १।११६।८ ] ६–विरुद्ध C.
७–अयं पाठः सन्दिग्धः ।
८–[ ऋ० १०।९७।३ ] 'ओषधीः प्रति' इत्येव प्रतीकम् B. C.
*–'हृष्यन्तु' इत्युचितम् ९ -वरिः प्रसवत्यः C.
१०–संज्ञत्र्यः B. सज्ञेत्र्यः C.
१२–ज्यैत्र्य C. . १३–वार C.
१४–नक्षन्दाभ C.
१५–नक्षतिः B.
१६–[धा० १ । ६६१–६६३] 'तक्ष स्तक्ष' इत्यत आरभ्य 'इन्वति' इत्यन्तः पाठस्त्रुटितः B.
१७–[निघ० २ । १८] इन्वक्षति C.
१८–र्थस्यापि B. र्थस्या C.
१९–अभ्य अवानं B.
२०–[दभ्नोतिः, धा० ५ । २४] दहे तरल नासि B. कर्मण्यन्ती दहे तरलनासिकद्वोपल C.

इति समुदायार्थवचनम् । उदाहरणम्—

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः ।

नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ॥[2]

भरद्वाजस्य । परा च । तं प्रकृतमिन्द्रम् । उ इति पदपूरणः । नोऽस्माकं पूर्वे पूर्वजाः पितरोऽङ्गिरःप्रभृतयः । नवग्वाः पार्वणाङ्गभावेन प्रतिमाससमागमनाद् नवगतयः । तथा च 'अङ्गिरसो नः पितरो नवग्वाः' इत्यादौ सर्वत्र नवभिर्मासैः सिद्धिं गतत्वाद् नवग्वा अङ्गिरस उच्यन्ते । सप्त सप्तसंख्याकाः विप्रासो मेधाविनो वाजयन्तोऽभीष्टयन्ते धनं याचितवन्त इति शेषः । कुत एतद् वाजयन्त इति ? 'लक्षणहेत्वोः क्रियायाः' इति शतृश्रुतेः साकाङ्क्षत्वात् परस्यां चर्चि स्वयं धनस्य याच्यमानत्वात् । कीदृशम् ? उच्यते । नक्षद्दाभं दभ्नातिर्वधकर्मा युद्धार्थं नक्षन्तामभिगन्तां प्राप्नुवन्तां वा । केषाम् ? सामर्थ्यात् शत्रूणां हन्तारं ततुरिं त्वरितारं पर्वतेष्ठां पर्वतो मेघस्तस्मिन् हन्तव्ये स्थातारम् । अद्रोघवाचमद्रोग्धव्य-वचनमनतिक्रमणीयवाचमित्यर्थः ।

अनिर्देशागमेन उकारस्यौकारापत्त्या आयुःशब्दस्यादिलोपेन अस्कृधोयुर्दीर्घायुरित्यर्थः । व्युत्पत्त्यन्तरं तु मन्त्रव्याख्याने दर्शयिष्यामः । उदाहरणम्—

तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः ।

यो अस्कृधोयुरजरः स्वर्वान्तमा भर हरिवो मादयध्यै ॥[16]

यमङ्गिरसोऽपि याचितवन्तस्तं त्वां वयमीमहे याचामहे । इन्द्रमस्य रायस्तत्र निर्द्धारणे षष्ठी अस्य सर्वस्य स्तोत्रभिलषितस्य रायो धनस्य । पुरुवीरस्य बहुभिर्वीरैः पुत्रैः पौत्रैश्चोपेतस्य । नृवतः परिचारकमनुष्यैस्तद्वतः । पुरुक्षोः 'क्षि निवासगत्योः' प्रहृत्य बहुषु स्थानेषु निवसितुः स्थापयितव्यस्येत्यर्थः । धर्मादिषु वा विनियोगैः । गन्तुरेवं हि गुणस्य धनस्य मध्ये यो अस्कृधोयुश्चिरस्थायी पुत्रपौत्रानुगत इत्यर्थः ।

---

१–'इति' नास्ति B C.
२–[ ऋ० ६ । २२ । २ ] 'तमु नः ( ततः C. ) पूर्वे' इत्येव प्रतीकम् B.C.
३–पार्वणोऽगभा B.
४–[ ऋ० १० । १४ । ६ ]
५–'का' इति नास्ति B.
६–वाजायन्त B. C.
७–[पा० ३ । २।१२६]
८–शत्रुश्रुते. C.
९–नक्षदाभं B. C.
१०–आयुधार्थं नचत्रां B.
११–पर्वतेषां B. C
१२–अद्रोढवाचं B.
१३–अद्रग्धव्य C.
१४–अतिवागमेन B.
१५–अस्तुथायुः C.
१६–[ऋ० ६ । २२ । ३]'तमीमह' इत्येव प्रतीकम् B.C.
१७–'मस' इति त्रुटितम् B. C.
१८–सत्र C.
१९–स्तोत्राभिल B.
२०–नृपतेः B.
२१–[धा० ६ । १२६]
२२–प्रभृत्य C.
२३–विनियोगम् C.
२४–अस्तु धोयु B.

अथवा अन्यथा व्युत्पाद्यते । अस्क्रं इत्येतत्तावत् करोते रूपं न कृन्ततेः । धोशब्द-स्तु दधातेर्वा दानार्थस्य । अकृतदानो यादृशो न कस्मैचिदपि त्वया दत्तपूर्व इत्यर्थः । अकृतपानो वा अभुक्तपूर्वो वा केनचिदित्यर्थः । अजरो जरा हानिस्तद्वर्जितोऽक्षय इत्यर्थः । स्वर्वान[1] सर्वैः सर्वविशेषैर्युक्तं याच्यमानश्च तमेवमर्थम् । आभर[2] देहि । हरिवैः[3] हरी अश्वौ ताभ्यां तद्वत् । किमर्थम् ? मादयध्यै मोदनाय तर्पणाय वास्माकम् ।

अथवा यस्य राय इति द्वितीयार्थे षष्ठी न निर्धारणे । यो अस्क्रधोयुरित्यादिर-प्यायुस्सम्बन्धात् तद्दीर्घत्वं शममस्य च मनुष्याणां प्रसिद्धतरत्वात् पुत्रस्य प्रतिनिर्देशो न धनस्य । तेनायमर्थः । अस्य राय इदमभिलषितं धनं पुरुवीरादियुक्तं याचामहे । किञ्च यो अस्क्रधोयुर्दीर्घायुर्जरावर्जितः सर्वान् सर्वैश्च गुणैस्तद्वान् तद्वतः पुत्रमाहरेति समानम् ।

निशृम्भा इत्यनवगतम् । निशृथ्य हारिण इत्यवगमः[5] । अशिथिलया गत्या हरणशीलानि श्रथ्याश्च ते हारिणोऽविश्रामहरणाः श्रथतेर्हन्तेश्चाक्षरसामान्यान्निर्वचनम् । उदाहरणम्—

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
तृतीयः खण्डः[7] ]

---

१—अस्तु B
२—सर्वान् B. C.
३—अहर B. 'आहर' इत्येतद्द्विर्लिखितम् C.
४—हेरिवः B. C.
५—अयं पाठः सन्दिग्धः ।
६—इत्यनवगतम् B.
७—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ चतुर्थः खण्डः । ][1]

आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् ।
देवं वहन्तु बिभ्रतः[2] ॥

भरद्वाजस्यार्षम् । आकारो वहन्त्वि[3]त्यनेन सम्बध्यते । अजासोऽ[4]जाः पूष्णोऽश्वाः[5] पूषणं रथे तृतीयार्थ एषा सप्तमी रथेन[6] निशृम्भास्तच्छब्दश्रुतेर्यच्छब्दोऽध्या[7]हार्यः । ये नि[8]शृम्भाः शीघ्रगामिन इत्यर्थः । कीदृशं पूषणम् ? उच्यते । जनश्रियं दीप्तमित्यर्थः । देवं दानादिगुणमावहन्तु अस्मान्प्रति । बिभ्रतः सम्यग्धारयन्त[9]ः ।

बृबदुक्थ[10]मित्यनवगतम् । बृहदुक्थ इत्यवगमः। महदुक्थ इत्यर्थवचनं यदि बृहे रूपम् । अथ ब्रू[11]तेस्ततो वक्तव्योक्थ इति । उक्थ इति स्तुतिपर्यायः, महत्स्तुतिं वक्तव्यस्तुतिं वा स्तुत्यर्हमित्यर्थः । तदाह वक्तव्यमस्मा उक्थमिति वा बृ[12]हदुक्थमिति । उदाहरणम्—

बृबदुक्थं हवामहे सृप्रकरस्नमूतये ।
साधु कृण्वन्तमवसे[13] ॥

मेधातिथेः । बृब[14]न्तं महद् वक्तव्यं वा उक्थं स्तोत्रं स्तुतिर्यस्य तमिन्द्रं महास्तुतिं वा हवामहे आह्वयामः । सृप्रक[15]रस्नं सृप्रौ करस्नू बाहुनामैतत्, सृप्रौ बाहू यस्य तम् । किमर्थम् ? ऊतये तर्पणाय सोमेन पालनाय वात्मनः सर्वै[16]र्देवैश्च साधु रसानुप्रदानादि कर्म कृण्वन्तं कुर्वन्तम[17]वसे पालनाय जगतः ।

ऋदूदर इत्यनवगतम् । ऋदूदरस्य[18]न्तःसुषिरत्वाद् मृदुर्वा उदरे अस्त्वित्येवं य आशा[19]स्यमानत्वाद् मृदूदरः सन्नादिलोपेन ऋदूद[20]रः । इयक्षन्त इति यथा । सोमोऽभिधेयः । उदाहरणम्—

---

1—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
2—[ ऋ० ६ । ५५ । ६ ] 'आजासः' इत्येव प्रतीकम् । B. C.
3—वहत्यर्थीत्य B. पहत्वित्य C.
4—अश्रुजाः B.
5—पूष्णोश्व B. पूष्णोश्वाः C.
6—रथे तेन रथे निशृगा B. C.
7—ध्याहारः C.
8—निशृगाः C.
9—रयन्तम् B.
10—बृहदुक्थ C.
11—ब्रुवः B.
12—अत्र 'बृबदुक्थमिति' इति युक्तं स्यात् ।
13—[ ऋ० ८।३२।१० ] 'बृब ( ह C. ) दुक्थ' इत्येव प्रतीकम् B. C.
14—बृहत B.
15—प्रवरस्नं B.
16—सर्वैव देवे च B. सर्वैः देव च C.
17—असेः B. असे C.
18—स्यान्तमः सु C.
19—शास्येन्मान C.
20—दूदरम् B.

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥[1]

गाधस्यार्षम्। सोमवादिनः प्रायश्चित्तेष्टौ चरौ याज्यैषा। ऋदूदरेण सौबिर्याद्[2] मृदु उदरं यस्य मृदुर्वामनविरोचनयोरकर्ता उदरेऽस्तु इत्येवं य आशास्यते यजमानैः[3] स मृदूदरस्तेन मृदूदरेण सोमेनेत्यर्थः। सख्या सखिभूतेन[4] सचेय सेवेयेत्याशास्महे। यो मा न रिष्येत् न हिंस्याद् वमनविरेचनाभ्यामायुषः[5][6][7] परिमोषणनिमित्तं स्यादित्यर्थः। हर्यश्व हरी इन्द्रस्याश्वौ ताभ्यां तद्वान् हर्यश्वस्तस्य संबोधनं हे हर्यश्व इन्द्र पीतः सन्[8][9][10]। किञ्च अय यः सोम इति पीतवांश्च व्यपदिशति न्यधायि पूर्वं निहितोऽस्मे[11] त्वस्माभिः पीतः सामर्थ्याद् वान्तश्च[12] तस्मै निवृत्तिः तादर्थ्य एषा चतुर्थी तच्छब्देन च तद्धेतुक आयुषः क्षयो लक्ष्यते[13] तदर्थं तद्धेतुकायुःक्षयनिवृत्त्यर्थमित्यर्थः। इन्द्रं प्रतिरं तिरतिर्वृद्ध्यर्थः[14], प्रतीर्णं प्रवृद्धम् एमि याचामह इत्यर्थः। किम्[15]? आयुः।

ऋदूपे इत्येतत्पदमनेनैव सादृश्यादिह समाम्नातम्। तत् पुनः प्रसङ्गेनोपरिष्टाद्[16] व्याख्यास्यामः।

पुलुकाम[17] इत्यनवगतम्। पुत्रकाम इत्यवगमः। उदाहरणम्—

इमं नु सोममन्तितो हृत्सु पीतमुप ब्रुवे।
यत् सीमागश्चकृमा तत् सु मृळतु पुलुकामो हि मर्त्यः ॥[18]

अगस्त्यलोपामुद्राब्रह्मचारिसंवादे ब्रह्मचारिणः। इमं नु पदपूरण एवार्थे[19] वा, इममेव सोमम्। अन्तितोऽन्तिके सन्निकृष्टे स्थितमिति शेषः। कथमसावन्तिकस्थ इत्याह हृत्सु पीतं हृदये पीतं सन्तम्। उपब्रुवे उपगम्य मनसा ब्रवीमि। किम्? उच्यते। यत् सीम् सर्वतः सर्वप्रकारम्। आगः पापं चकृम[20] कृतवन्तो वयं बुद्धिपूर्वमबुद्धिपूर्वं वा तत् सुमृळतु

---

१–[ऋ० ८।४८।१०] 'ऋदूद ('द' त्रुटितम् C.) रेण' इत्येव प्रतीकम् B. C.

२–'त्' इति त्रुटितम् B. C.

३–अत्र 'मृदुर्वमनविरेचनयोरकर्ता उदरेऽस्तु' इति पाठो युक्तो भवेत्।

४–सखीभूतेन C.

५–वामन B.

६–विरोचना B. C.

७–मायुषं B.

८–विर्यश्वः C.

९–तस्य सम्बो तस्य धनं C. 'सम्बोधनं' इत्यस्मात्परं 'तस्य धनं' इति पाठः B.

१०–अर्य्यश्च C.

११–अस्मै B.

१२–वान्तं च B. C.

१३–ऽपेक्ष्यते B. वक्ष्यते C.

१४–'रं तिरति' इति त्रुटितम् B. 'रति' इति त्रुटितम् C.

१५–क्रियाग्रुः B.

१६–[निरु० ६।३३]

१७–प्तुकाम C.

१८–[ऋ० १।१७९।५] 'इमं नु सोमम्' इत्येव प्रतीकम् B. C.

१९–इवार्थो वा C.

२०–'कृम' इति त्रुटितम् C.

'मृळ सुखने'[1] सुष्ठु सुखं करोतु नाशयतु बन्धम्[2]। विपाकं[3] करोत्वित्यर्थः। तस्मादेवमुच्यते पुलुकामो[4] हि मर्त्यः हिशब्दो यस्मादर्थे, यस्माद् बहुकामो मनुष्यः, तं च कामं पापेनावष्टब्धो न शक्नोति प्राप्तुमिति[5]।

असिन्वतीत्यनवगतम्[6]। तस्य असंखादन्त्यौ[7] इत्यनेन कथनेन सिनोतेर्बन्धनार्थत्वात् धात्वर्थेऽनवगमं[8] दर्शयति। उदाहरणम्—

अपश्यमस्य[9] महतो महित्वममर्त्यस्य मर्त्यासु विक्षु।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः॥

वैश्वानरस्याग्नेः[10] सौचीकस्य वा ऋषेर्वाजम्भरस्यार्षम्। अपश्यं पश्याम्यहमस्य भगवतोऽग्नेर्महतो महित्वं माहात्म्यम्। किं विशिष्टस्य[11] ? अमर्त्यस्य[12] अमरणधर्मणो[13] मर्त्यासु मरणधर्मसु विक्षु मनुष्यजातिषु सप्तमीनिर्देशाद् वर्तमानस्येति शेषः। किं पुनर्माहात्म्यमिति ? उच्यते। नाना हनू पृथग्भूते हनू ज्वालाख्ये विभृते बिभ्रते सत्यौ[14] यत् संभरेते[15] एकीभवत इत्यर्थः। किञ्च असिन्वती[16] असंखादन्त्याविव[17] चूर्णयन्त्याविव बप्सती[18] भक्षयन्त्यौ[19] भूरि बहु अत्तोऽ[20]न्यदेवत्यमपि हविर्भक्षयतः। एतदस्य[21] माहात्म्यमित्यर्थः।

कपना[22] इत्यनवगतम्। कम्पना इत्यवगमः[23]। क्रमयोऽभिधेयाः। ते हि वृक्षं निस्सारीकुर्वन्तः कम्पयन्ति। स्वयं वावलम्बनस्वभावत्वादेवमुच्यन्ते। उदाहरणम्—

अभ्राजि[24] शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः।
अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम्॥

अभ्राजि[25] भ्राजते दीप्यते। शर्धो बलं युष्मदीयं सेनालक्षणम्। हे मरुतः, यत् तृतीयाया

१–[धा० ६।४६] सुखेन C.
२–'वन्ध' इत्येव B. C.
३–विवाकं C. अत्र 'विपाप' इति युक्तं स्यात्।
४–पुलाकामो B. C.
५–प्राप्तमिति B. C.
६. असिन्वन्ती B.
७–असंत्रादन्त्यापीत्यनेन B.
८–त्वर्थे नाव B. त्वर्थो नव C.
९–[ऋ० । १० । ७९ । १] 'अपश्यमस्य' इत्येव प्रतीकम् B. C.
१०–नरस्य वाग्नेः C.
११–शिष्टमस्य B. C.
१२–'अ' इति त्रुटितम् B. C.
१३–धर्माणं B.
१४–सत्याय B.
१५–संभरते B. C.
१६–असिन्वन्ती B. C.
१७–असंवदन्त्या B.
१८–वसती B. वीव बप्सिती C.
१९–भक्षयन्त्यो B. C.
२०–दत्तः B. C.
२१–हि तस्य B. एतस्य C.
२२–तपन्ना C.
२३–इत्यनवगमः C.
२४–[ऋ० ५ । ५४ । ६]'अभ्राजि' इत्येव प्रतीकम् B. C.
२५–'अभ्राजि' इति नास्ति B. C.

अत्र लुक्, येन बलेन । अर्णसम्[1] अर्ण उदकं सकारो मत्वर्थीयः, उदकवन्तम् । कम् ? साम-र्थ्यान्मेघम्[2] । मोषथ[3] मुष्णीथ निरुदकं कुरुतेत्यर्थः । कथमिव ? वृक्षं कम्पनेव[4] कम्पना घुण-क्रिमयः, ते वृक्षं[5] यथा मुष्णन्ति[6] निस्सारीकुर्वन्ति[7] तद्वत् । वेधसो[8] मेधाविनो य इद्गबलाः । अधं[9] अस्मात् । स्मशब्दः पदपूरणः । नोऽस्मान् अरमतिं व्यत्ययेनैकवचनं बहुवचनस्य स्थाने अरमतीन् अनल्पमतीन् पर्याप्तज्ञानान् स्वर्गापवर्गप्राप्तावधिकृतानित्यर्थः । हे सजोषसः संप्रीताः परस्परतः । चक्षुरिव यन्तं[10] यथा चक्षुर्गच्छन्तं मनुष्यं नयेत् तद्वत् । अनुनेषथा अनुरत्र[11] धात्वर्थानुग्राही नयथा । सुगं[12] सुखगमनं यत्र वा गतानां सुखं भवति स सुगः स्वर्गो मोक्षो वा तं यथा स्वेनैव यत्नेन गच्छन्तं मनुष्यं पथि प्रदर्शनमात्रेण चक्षुर्नयति एवं स्वीकृतेन कर्मणा स्वर्गं मोक्षं वा गच्छतोऽस्माननुग्रहमात्रक्रियया यूयं नयतेत्यर्थः ।

भाऋजीक इत्यनवगतम् । ऋजूकां[13] अकुटिला अतिहता प्रसिद्धा दीप्तिर्यस्य स ऋजूकभास्सन् भाऋजीकः[14] । प्रसिद्धभा इति पर्यायेणार्थप्रदर्शनम् । उदाहरणम्—

देवो देवान् परिभूरृतेन वहा नो हव्यं प्रथमश्चिकित्वान् ।
धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान्[15] ॥

हविर्धानस्यार्षम् । प्रत्यक्षकृतत्वान्मन्त्रस्य देव इत्यादीनां चानामन्त्रित्वादेक-वाक्यतायै यत्तच्छब्दाध्याहारः । अग्निरुच्यते । यस्त्वं देवो दानादिगुणो देवान् परिभूः[16] परि-भूतः । भवतिरपरिग्रहे[*] देवानां यस्त्वं परिग्रहीतेत्यर्थः । स ऋतेन यज्ञेन[17] सहार्थे च तृतीया यज्ञेन सह । वह प्रापय नोऽस्माकं स्वभूतं हव्यं हविर्यज्ञं च हविश्च देवान् प्रति प्रापये-त्यर्थः । यश्च प्रथमो मुख्यश्चिकित्वान् ज्ञानवान् धूमकेतुर्धूमकर्ता । अथवा केतुः पताकोच्यते धूम एव केतुर्यस्य धूमेन वा यः[18] केत्यते सः । समिधा समिन्धनेन इध्मघृतादिना भाऋजीकः[19] ऋजुकदीप्तिः प्रकृष्टो ज्वलन इत्यर्थः । मन्द्रः स्तुत्यः स्तोता वा होत्राधिष्ठातृत्वात्[20] । होता च

---

१—अर्णसः B.
२—'मेघ' इत्येव B. C.
३—षथ मुष्णीनित्रदकं B. C.
४—वृक्षकम्पनेप B. वृक्षकं वनेप C.
५—धृतकिमय B. घुणक्रिमयः C.
६—वृत्तः यथा दुष्णन्ति B. C.
७—निर्वासरीकु B.
८—'वेधसो' इति त्रुटितन् B.
९—स्थ अस्मान् B. स्थ अस्मात C.
१०—यन्तः B.
११—सूनुरत्र B. १२—सुगः B.
१३—ऋजुका आकु C.
१४—भाज ऋजीकः B. C.
१५—[ऋ० १० । १२ । २] 'देवो देवान्' इत्येव प्रतीकम् B. C.
१६ परीभूतः B. C.
* 'भवतिरत्र परिग्रहे' इति युक्तं स्यात्
१७—यज्ञेह C. १८—या केत्येते C.
१९—भा ऋजूकः ऋजूकदीप्तिः B.
२०—होतः (त C.) अधिष्ठा B.C.

नित्यो[1] होत्रपेक्षया । वाचा च यजीयान्[2] मनुष्य[3]होत्रपेक्षयैवातिशयेन यष्टा ।

रुजाना इत्यनवगतम् । एतच्च पदं नदीनामसु पठ्यते । अत आह नद्योऽभिधेयाः । एवं[4] चैकपदिके पठितस्यापि अनवगतत्वादिहोपक्षेपः । रुजेश्च परस्मैपदित्वात् शानजत्रानवगतम्[*] । क्वचिच्च प्रथमासमानाधिकरणे शानच् द्रष्टव्यः । तच्च दर्शयति रुजन्ति[5] कूलानीति रुजाना नद्यः । रुजन्त एवेत्यवगमः । उदाहरणम्—

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥[6]

हिरण्यस्तूपस्यार्षम् । योद्धुमसमर्थोऽयोद्धा स यथा दुर्मदः सुरया मत्तः सन् दुर्मर्थो[7] वाल[8] इत्यर्थः । असमर्थोऽपि कश्चिद् युद्धायाह्वयेत[9] एवं मेघः आहि जुह्वे इति हिशब्दः[10] पदपूरणः, युद्धायाहूतवान् इन्द्र[11]म् । कीदृशम् ? महावीरं महाविक्रान्तं तुविबाधं बहूनां शत्रूणां बाधितारम् । ऋजीषम् अर्ज[12]यितारं शत्रुधनानाम् । अथवा यत् सोमस्य पूयमानस्यातिरिच्यते । सामर्थ्याच्चात्र ऋजीषशब्दोऽन्तर्नीतमत्वर्थो द्रष्टव्यः, ऋजीषिणमित्यर्थः । कः पुनरिन्द्रस्य ऋजीषेण सम्बन्धः ? उच्यते । हर्योरस्य समभागो धानाश्चेति । आहूय च मेघो नातारीत् तरतिरत्र शक्नोत्यर्थः, शक्नोतिश्च धात्वन्तरापेक्षत्वात् सोढुमिति वाक्यशेषः । नाशक्नोत् सोढुमिति । अस्य स्वभूतानां समृतिं संगतिं वधानां प्रहाराणां चेत्यर्थः । अथासहमा[13]नः किं कृतवान् ? उच्यते । सं रुजा[14]नाः नदीं प्रति संपि[15]पिषे संपिष्टवानात्मानमुदकम् । चू[16]र्णरूपीभूय नदीषु स्थित इत्यर्थः । इन्द्रशत्रुरिन्द्रस्य शातयितव्यः ।

जूर्णिरित्यनवगतम् । जवतेर्गतिकर्मणः । निश[17]ब्दो नामक[18]रणः । रेफागमः । द्रवतेर्वा उकाररेफयोः स्थानव्यत्ययो दकारस्य जकारापत्तिः । शेषं पूर्ववत् । जीर्यतेर्वा हिंसार्थस्य । जूक[19]पालवादिभ्यः कनिष्ठापदि एवं जूणावनाद्विजूर्णिशक्तिका सेनाऽभिधेया । दुनोतेर्वेत्यपपाठः । उदाहरणम्—

---

१–'नित्यः' इत्यनन्तरं 'होतृत्वाद्धोता च नित्यः' इत्यधिकः पाठः C. २–यज्ञियान् B. यज्जीयान् C.
३–'ष्य' इति त्रुटितम् B.C. ४–एकं चैव पदिके B.C.
* '०नवगतः' इति युक्तम् ।
५–कुजान्ति C.
६–[ ऋ० १ । ३२ । ६ ] 'अयोद्धेव' इत्येव प्रतीकम् B. C. ७–दुर्मर्थः C.
८–अयं पाठः सन्दिग्धः । कदाचिदत्र 'वाचालः' इति स्यात् । वाङ्मात्रपर इत्यर्थः ।
९–'त' इति द्विर्लिखितम् B. C.
१०–अभिजुह्वेति निशब्दः C. ११–इन्धन B. C.
१२–आर्जभि B. अजयि C. १३–हमानम् C.
१४–रुजना B. रुजना C.
१५–'पि' इति त्रुटितम् C. १६–पूर्णरूपी B.
१७–हि शब्दो B. C. १८–करणे B. C.
१९–जूकवल्वादिभ्यः कनिष्ठापदि एवं छन्ना द्रवणाद्विजूर्णी शक्तिका सेनाभिधेया C. अस्य वाक्यस्य पाठः सन्दिग्धः ।

प्र प्रा वो अस्मे स्वयंशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन्दुर्मतीनाम् ।
स्वयं सा रिषयध्यै या न उपेषे अत्रैः हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति[1] ॥

परुच्छेपस्यार्षम्[2] । प्रप्रेति 'प्रसमुपोदः'[3] इति पदपूरणे[4] द्विर्वचनम् । उपसर्गत्वाच्चास्य ऊतीत्यनेन क्रियाशब्देन सम्बन्धः । अवतेः कर्तरि ऊतिः[5] प्रकर्षेणाविता रक्षितेत्यर्थः । कस्य[6] ? ऋत्विजामयं प्रतिनिर्देशः । अत्र पौत्रादीनां वो[7] युष्माकमृत्विजां पुत्रपौत्रादीनां वा मदीयानाम् । अस्मे अस्माकम् । स्वंशोभिः[8] निमित्ते चैषा तृतीया प्रयोजनस्य च निमित्तत्वेन विवक्षा स्वयशोभिर्निमित्तभूतैरात्मनः । क पुना रक्षिता ? उच्यते । परिवर्गे परिवर्ज्यन्ते[9] प्राणैर्यत्र योद्धारः स परिवर्गः संग्रामस्तस्मिन् इन्द्रो दुर्मतीनां पापबुद्धीनां चास्मच्छत्रूणां नेत्यर्थः[10] । दुर्मतीनां दुस्स्तुतीनां च । केन पुनः[11] प्रकारेण रक्षिता[12] ? उच्यते । स्वयम् आत्मनैव । सा रिषयध्यै[13] तृतीयार्थे चैस्थे[14] नासदित्यनेन सम्बन्धो रिषयध्यै असद्रेषणाय हिंसनाय[15] भवति इन्द्रप्रसादात् स्वयमेव वासौ[16] विनश्यतीत्यर्थः । या नोऽस्मान् प्रति उप[17] ईषे उपेत्येष प्र इत्येतस्य स्थाने प्रेष्यते । अत्रैरदनशीलैरस्मच्छत्रुभिः । हता हता च विनष्टा सती । ईमिति पदपूरणः न वक्षति[18] लडर्थेऽत्र लेट्, न वहति न प्राप्नोत्यस्मान् प्रति क्षिप्तापि[19] जूर्णिः[20] शक्तिका सेना[21] वा प्रेरितापि सती न वक्षति लडर्थे लेट्, न वक्ष्यति न प्राप्स्यति[22] आगामिन्यपि काल इत्यर्थः ।

ओमना इत्यनवगतम् । अवनाय अवनेन वेत्यवगमः । उदाहरणम्—

युवोः श्रियं परि योषा वृणीत सूरो दुहिता परितक्म्यायाम् ।
यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात्[23] ॥

---

1—[ ऋ० १ । १२९ । ८ ] 'प्रपावः' इत्येवं प्रतीकम् B. C.

2—'र्षम्' इति त्रुटितम् C.

3—[पा० ८।१।६]

4—अत्र 'पादपूरणे' इति पाठो युक्तः ।

5—उन्दतिः B.

6—कश्यप B. कस्यव C.

7—वा B. C.

8—च यशोभिः B. C.

9—परिवर्ज्यैते B. C.

10—तेत्यर्थः C. । नेत्यर्थ इति पाठे दुर्मतीनां न रक्षितेत्यर्थः । C. पुस्तकपाठे तु कदाचित् दरीमन् 'हन्तेत्यर्थः' इति पाठोऽत्र भवेत् । तथा चेन्द्रः संग्रामेऽस्माकं रक्षिता दुर्मतीनां च हन्तेत्यर्थः स्यात् ।

11—'पुनः' इति द्विर्लिखितम् B. C.

12—रक्षता B. C.

13—रिषयध्यै B.

14—र्धेवस्मेना B र्धेवस्मेना C.

15—हिंसनाय B.

16—वासन्नि विन B.

17—'उप' इति त्रुटितम् B.

18—वक्तिरर्थेऽत्र B. C.

19—क्षिप्ता वि B. C.

20—जूर्णः B.

21—सेन वा B.

22—'ति' इति त्रुटितम् C.

23—[ ऋ० ७६९।४ ] 'युवोः ( वो C. ) श्रियं' इत्येव प्रतीकम् B. C.

वसिष्ठस्य । अश्विनावुच्येते । युवोर्युवयोः श्रियं परि सर्वतः योषा स्त्री[2] उष आख्या अवृणीत वृणते[3] युवयोर्दीप्त्या दीप्तिमती भवतीत्यर्थः[4] । सूंगे[5] दुहिता सूर्येण दिवि जन्यमानत्वात् सूर्यस्य दुहिता । कदा वृणीत ? परितक्म्यायां रात्रौ ऊर्ध्वमर्धरात्रादश्विनोः काल इति वक्ष्यति तस्मिन् काले रात्रेः पश्चिमे भाग इत्यर्थः । किञ्च यद् यस्माद् देवयन्तं[6] देवान् यष्टु[7]मिच्छन्तम्, इच्छयात्र तत्पूर्वकत्वादनुष्ठानं लक्ष्यते देवानां यष्टारमित्यर्थः । अवथो रक्षथो युवाम्[8] । शचीभिः कर्मभिः स्वैः प्रज्ञाभिर्वा । यस्मादिति श्रुतेस्तस्मादित्यध्याहारः, तस्मात् परिघ्रंसं परीत्ययं[9] प्रतीत्यस्य स्थाने घ्रंसमप्यहः[10], अहनीत्यर्थः । ओमना[11] अवनायावनेन[12] वा निमित्तभूतेन तर्पणार्थमित्यर्थः । वां युवां वयो[13]ऽन्ननामेदम्, अन्नं हविर्लक्षणं गाद् अगाद्[14] गच्छति युवाभ्यां[15] दीयत इत्यर्थः । उदिते[16] अश्विनोर्याग उच्यते । अहः प्रत्य[17]हमगादिति । तस्माद् यजमानं रक्षथः[18] । तस्मात्[19] प्रातरेवेज्येथे[20] इत्यर्थः ।

इति ( महेश्वरकृते[21] ) निरुक्तविवरणे
एकादशस्या- ( षष्ठस्या-[21] ) ध्यायस्य
प्रथमः पादः ।

---

१–सरता B. सरिता C.
२–स्त्रीषे आख्या B. यौषा स्त्रीषे आख्या C.
३–प्रणेते B. वृणेते C.
४–भिरित्यर्थः B. C. ५–सुने B.
६–देवयन्तः B.
७–'देवान् यष्टुमिच्छन्तं' इति त्रुटितम् B.
८–युवम् B.
९–परिघसं प्रत्ययत् प्रतीतस्य B. परित्ययन् C.
१०–घस्रमप्यहः B. घ्रंसमव्यहः C.
११–आमना B. १२–नालावने B. C.
१३–पयो B. १४–'अगात्' इति नास्ति B.
१५–युभ्या डीयत C.
१६–अश्विनो याग B. उदितेर्यश्विनोर्याग C.
१७–अनः प्रत्यन्नमगा B. अहः प्रत्यन्न C.
१८–रक्षधः C.
१९–'त्' इति त्रुटितम् C.
२०–वेज्येते C.
२१–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

## [ अथ (षष्ठस्या)ध्यायस्य द्वितीयः पादः । ][1]

उपलप्रक्षिणीत्यनवगतम्[2] । उपलेषु श्लक्ष्णेषु वालुकासु यवान् प्रक्षिणाति । क्षि हिंसायां[3] हिनस्ति रुजतीत्यर्थः[4] । अथवा दृषन्धूरदृकादिषूपलेषु तदाधानभ्रष्टान्[5] यवान् हिनस्ति चूर्णयतीत्यर्थः । ततश्च उपलप्रक्षेपिणीत्यवगमः[6] । सक्तुकारिका[7]ऽभिधेया रूढित्वात् । छत्रं-[8] तया काचिदुत्पत्तये क्रियोपादीयते[9] । उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
पञ्चमः खण्डः[10] । ]

———

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. C.
अयं सर्वोऽप्यध्यायपादारम्भात्मकः पाठो नास्ति C.

२–'न' इति त्रुटितम् C.

३–हिगतावयं B. हिगवायां C.

४–रञ्जयती B. द्रजती C.

५–अयं पाठः सन्दिग्धः । दृषन्धुरदृकादिषु लदाधानत्रष्टान् B.

६–उपलक्षणेऽपि णीत्य B.

७–त्यवतुकारि B.

८–अयं पाठः सन्दिग्धः ।

९–द्युत्पत्तये क्रीयोत्रादयते C.

१०–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ षष्ठः खण्डः । ][1]

कारुरहं ततो भिषगुपलप्रक्षिणी नना ।
नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परि स्रव ॥[2]

शिशुराङ्गिरसस्तस्यार्षम् । स हि दुर्भिक्षानन्तरं प्रवृत्तसोमयागः सन् दशापवित्रान् क्षरति सोमे निरुक्तं[3] ह्येनः कनीयो भवति श्रुतं[4] प्रतिबन्ध कनीयो भवति पापापनुत्तये[5] दुश्च-[6]रितानुकीर्तनपुरस्सरमनेन किलाध्येषणा[7] चक्रे । कारुः स्तोतृनामेदं[8] स्तोता अहं तावत् कर्ता स्तोमानां सद्धोता[9] उद्गाता वा अयाज्ययाजनोपलक्षणं द्रष्टव्यम् । ततः सन्तानर्नाम पितुर्वा पुत्रस्य वा तन्यतेऽस्मादिति पिता तन्यते वापीति पुत्रः । तेन सन्ताननिमित्तमिदं नाम । तातशब्दस्य वा ह्रस्वत्वं[10] ततः पिता पुत्रो वा मम भिषग्[11] भेषजकृद्यज्ञस्य ब्रह्मेत्यर्थः । स च 'त्रयी विद्या भिषज्यति'[12] इति श्रुतेः । वैद्यो वा । उपलप्रक्षिणी सवनीयाद्यर्थं[13] धानासक्तुकर-[14]म्भादीनां कर्त्री प्रसिद्धा वा सक्तुकारिका असौ नना[15] माता दुहिता वा । कथं पुनर्नना-[16]शब्देनासावुच्यते ? नमतिना[17] योगाद् माता पुत्रं प्रति स्तन्यपानादिना नमति दुहितापि शुश्रूषार्थम् । ते वयमेवं नानाधियो धीरिति कर्मनाम विविधकुत्सितकर्माणो[18] वसूयवो[19] धन-कामा यथाकथंचिद् धनमिच्छन्तो यो यदिच्छति तस्य तत् कुर्वन्तोऽनुगा इव तस्थिमं[20] प्रथमार्थे द्वितीयैषा गाव इव यथा गावः परार्थाः अन्वास्थिता[21] वा न किञ्चिद् वर्जयन्ति एवं वयमत्र तस्थिमोऽन्वास्थिताः स्मोऽधिष्ठितवन्तः[22] । कम् ? सामर्थ्याल्लोकम् । सम्प्रति तु निष्क्रान्तारिभूतैरतीते दुर्भिक्षे त्वत्प्राप्त्यर्थं[23] कथंचिद् धारितप्राणैरस्माभिर्मनोरथ-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ९।११२।३] 'कारुरहम्' इत्येव प्रतीकम् B. C.
३–निरुक्तह चैनः B.
४–अयं पाठः सन्दिग्धः । ५–वावा नु C.
६–दश्चरिता B. युश्चरिता C.
७–ध्येषयाश्च B.C.
८–'दं' इति त्रुटितम् B. C.
९– स होता B.
१०–'ह्रस्वत्वं' इति त्रुटितम् B.
११–भिषजे B.
१२–[ अनुपलब्धमूलमिदम् ]
१३–सचनीयद्यर्थं B.C.
१४–धान (C.) सक्तकरम्भादिना कर्ति (C.) B. C.
१५–न नाम B. सौन नाम C.
१६–नामशब्दे B. C.
१७–नमन्ति (स्ति C.) या योगान्मात्रा पुत्रं प्रति (परि C.) स्तनपानादि नाना ( B. ) भवति B. C.
१८–विविधं कुत्सितकर्मणा B.
१९. वासूय B. C.
२०–'तं स्थि' इत्येव । अन्यत् त्रुटितम् B. C.
२१–अनवस्थित पार (ग C.) द (B.) B. C.
२२–स्थः B. C. २३–प्राप्त्यर्थः C.

शीतैरिदानीं[1] प्राप्त इत्येतज्ज्ञात्वा इन्द्राय इन्द्रस्यार्थाय त्वं हे इन्दो सोम[2] कारुण्यात् परिस्रव अस्माद्[3] दशापवित्राद् इत्येवमेषाध्येणा सत्कारपूर्विका व्यापारणा।

उपसीत्यनवगतम्[4]। उपस्थशब्दस्य सप्तम्येकवचने धात्वादिसकारोऽवशिष्यते तत-स्थशब्द[5]लोपेन उपसीति। उपस्थ इति प्राप्ते तद् भाष्यकारो दर्शयति उपस्थे[6]। उदाहरणम्—

पत्तो जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम्।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिम्[7]॥

शुक्रस्यार्षम्। इन्द्र उच्यते। जगारेति जिगर्तिर्गिरतिकर्मा वा गृह्णातिकर्मा वा। आद्यादित्वात् तसिः पादतो[8] रश्म्याख्यैः पादैरित्यर्थः[9]। अत्र चैक[10]वाक्यतायै यत्तच्छब्दा-वध्याहार्यौ। यज्जगार निगरति मुञ्चति मध्यं प्रतिगृह्णाति वा पृथुवीतः[11]। कोऽसौ? सामर्थ्या-दादित्यः। तदिन्द्रः प्रत्यञ्चमात्मानं प्रत्यञ्चितं गतम्। अत्ति भक्षयति स्वीकारोतीत्यर्थः। शीर्ष्णा आदित्येन दत्तं[12] सदिति शेषः। स्वीकृत्य च सर्वस्य लोकस्य शिरः प्रतिदधे[13] विदधाति[14]। किम्? वरूथं[15] वरणीयं वृष्ट्याख्यं क्षिपति। किम्? उदकम्। किञ्च निहितेन च तेन आसीनं[16] एव। क्व? उपसि उपस्थे अन्तरिक्षाख्ये स्थाने। ऊर्ध्वम् ऊर्ध्वताम्। काम्? सामर्थ्यात् पृथिवीं क्षिणाति हिनस्ति छादयति हतविहितविधस्तव प्रकरोतीत्यर्थः[17]। हिंसितायां च सत्यां पृथिव्यां न्यङ् व्यत्ययेनेदं पुंलिङ्गं नपुंकस्य स्थाने न्यग् नीचैरञ्चितं तमुदकमुत्तान[18]मन्वेति यथानिम्नमनुगच्छति भूमिम्।

प्रकलवित्[19] इत्यनवगतम्। वणिगभिधेयः। प्रकलाविदित्य[20]वगमः। स हि कला[21] मानो-न्मानप्रतिमानादिविषयाः प्रकर्षे[22] गणितरत्नपरीक्षादिका वेद विजानाति। उदाहरणम्—

---

१–रथ शी ( शि C. ) तै B. C.
२–सीं कुरु स्यात् B.
३–अस्मत् B.
४–उपसिमित्यन B.
५–ततः स्वशब्द B.
६–स्थ उपस्थे B. C.
७–[ऋ० १।१२७।१३] 'पत्तो जगार' इत्येव प्रतीकम् B. C.
८–प्रतियोगे पञ्चम्यास्तसिः [ पा० ५।४।४४ ] इति सूत्रे वार्तिकं 'आद्यादिभ्य उपसंख्यानम्' इति वर्तते।
९–पादतं C. पादतं रशम्या B.
१०–चैव वाक्यतामे (ध.) यय (B.) च्छब्दा B. C.
११–पृथुवीतः B. C.
१२–दत्तः B. C.
१३–'प्रतिदधौ' इति मूले पाठः।
१४–पिदधाति B.
१५–वरूथः B. C.
१६–आसिनैव B आसिनः एव C.
१७–प्रकारो C.। हतेत्यादिः पाठः सन्दिग्धः।
१८–मुक्ताना B. C.
१९–प्रकलावित् C.
२०–प्रकलवि B. प्रगलावि C.
२१–काला मानो मान (नं B.) प्रति B. C.
२२–प्रकृष्टा (ष्ट C.) श्च B. C.

इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः ।
दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे[1] ॥

वशिष्ठस्य । इन्द्रेणैते तृत्सवः[2] तृदेर्हिंसार्थस्याहार्थेऽसुन्[3] प्रत्ययो द्रष्टव्यः, तर्दनार्हा मेघाः । वेविषाणा 'विषॢ[4] व्याप्तौ' व्याप्यमाना[5] आपो न आप इव यथा आपः केनचित् सृष्टा अधवन्त[6] गच्छन्ति नीचीर्नीचैः[7] । एवमन्तरिक्षस्याधो भवन्तीत्यर्थः[8] । अधोभूय च ये दुर्मित्रासः कुत्सितान्यनिशं धनपराणि मित्राणि । कतमानि? उच्यते । प्रकलवित् प्रथमाबहुवचनस्यात्र लुक्[9] द्रष्टव्यः प्रकलाविदः प्रकृष्टानां कलानां वेदितारो वणिजः किञ्चित् स्वर्णमुक्ताप्रवालादि महता यत्नेन मिमते एवं मिमाना यावन्ति यदा यत्र योग्यानि तावन्ति तदा तत्र त्यजन्तो जहुर्जहति त्यजन्ति । विश्वानि सर्वाणि भोजना भोजनानि भोग्याहार्ण्युदकानि । सुदासे सुदा यजमानस्तस्मै कल्याणदानस्य यजमानस्यार्थायेत्यर्थः ।

अभ्यर्धयज्वा[10] इत्यनवगतम् । ऋधु वृद्धौ[11] यजिर्दानार्थः । अभ्यर्धयन् यजतीत्यस्य वाक्यस्यार्थः । उदाहरणम्—

मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्धयज्वा ।
श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते[12] ॥

ऋजिश्वन आर्षम् । मिम्यक्षेति म्यक्षतेर्गतिकर्मणो[13] रूपम् । गच्छति येषु द्वितीयार्थ एषा सप्तमी, यान् युष्मान्[14] रोदसी रुद्रस्य पत्नी नु इति पदपूरणः देवीर्मरुतः । 'रुद्रस्य ये मीळ्हुषः[15] सन्ति पुत्राः[16]' इति मन्त्रान्तरे दर्शनात् । तेनैषां रोदसी माता सा च स्नेहेन पुत्रान् प्रत्यलंभ्वं[17] गच्छति अतस्त एवमुच्यन्ते । गच्छति[18] यान् युष्मान् रोदसी देवी यांश्च सिषक्ति रश्म्याहतरसेन प्राणेन सेवते । पूषा किंविशिष्टः? अभ्यर्धयज्वा अल्पानपि अनभ्य[19]र्धयन् मरुद्भ्यो ददाति न तं वा स्तोतृभ्योऽसौ[20] ददाति स येष्विति[21] यच्छब्दश्रुतेस्तच्छब्दो-

---

1—[ऋ० ७।१८।१५] 'इन्द्रेणैते' इत्येव प्रतीकम् B. C.

2—'तृत्सवः' इति त्रुटितम B. तत्सवः C.

3—मुन् B.

4—[धा० ३।१३] विषण व्या C.

5—व्यव्यमाना C.

6—'अधो' इत्येव B. C.

7—'नीचीः' इति नास्ति B. C.

8—भवतीत्य B.

9—'लुक्' इति त्रुटितम् B. 'लु' इत्येव C.

10—धेयञ्चा इति C.

11—वृद्धन C.

12—[ ऋ० ६।५०।५ ] 'मिम्यक्ष' इत्येव प्रतीकम् B. C.

13—म्यष्टयतेर्ग B.

14—मनुष्यान् B.

15—कः B. ळः C.

16—[ऋ० ६।६६।३]

17—सन्दिग्धमिदं पदम् ।

18—गच्छन्ति B. C

19—अत्र 'न' इत्यधिकं प्रतीयते ।

20—भ्यो यो ददा C.

21—एष्विति B.

ऽध्याहार्यः । ते[1] श्रुत्वा हवमाह्वानं हे मरुतः, यदा हेति पदपूरणः, याथ[2] गच्छथ यदेति वचनात् तदेत्यध्याहार्यम् । तदा भूमा यश्च बहुशब्दाद् विपुलवचनाद् बहुत्ववचनाद्वा इमनिचि छान्दसत्वादाद्युदात्तत्वम् । सामर्थ्याच्चात्र अन्तर्णीतमत्वर्थता बहुवचनस्य लुक् 'शेश्छन्दसि'[3] इति । तेनायमर्थः । वैपुल्यवन्ति बहुत्ववन्ति वा महान्ति बहूनि वेत्यर्थः । कानि ? सामर्थ्यात् शत्रुवृन्दानि रेजन्ते ह्यस्यते रेजत इति भयवेपनयोः । अस्मान् मरुतो हन्तुमागच्छन्तीति[4] मन्यमानानि बिभ्यति ध्वजाग्राणि[5] वा कम्पन्ते । पदकारास्तु भूम रेजन्त इति ह्रस्वत्वं पठन्ति इति । क्रियाविशेषणमिदमेकवचनान्तमिति मन्यन्ते । तदा च स्वार्थिक इमनिच् द्रष्टव्यः । बहु सुष्ठु रेजन्त इत्यर्थः । अध्वनि अन्तरिक्षनाम अस्य च रेजन्त इत्यनेनैव सम्बन्धो याथ[6] इत्यनेन वा अन्तरिक्षे रेजन्ते अन्तरिक्षे वा यदा[7] वा याथेति । कीदृशे ? प्रविक्ते प्रकर्षेण विविक्ते ईमो[8] दीप्ते विस्तीर्णे इत्यर्थः ।

ईक्षे इत्येतदनवगतम् । ईशिषे[9] इत्येवं प्राप्ते । उदाहरणम्—

नृवत्तं इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः ।
ईक्षे हि वस्व उभयस्य राजन् धा रत्नं महि स्थूरं बृहन्तम् ॥[10]

भरद्वाजस्य । नृवत्[11] मनुष्यमतिथिमन्यं वा कंचित्[12] प्रियं मित्रं भ्रातरं वा तद्वत् । ते[13] द्वितीयार्थे षष्ठी त्वाम्[14] । नृतमाभिश्चात्र[15] स्वसम्बन्धियोग्यत्वं लक्षयन् नृतमयोग्या यास्ताभिः प्रकृष्टमनुष्ययोग्याभिरित्यर्थः । काभिः ? ऊती अवतेस्तृप्तिकर्मण ऊतिः[16], ततस्तृतीयायाः पूर्वसवर्णः, ऊतीभिस्तर्पणैः* सोमैर्वंसीमहि[17] 'वन षण संभक्तौ'[18] संभजेमहीत्याशास्महे । वामं प्रशस्यम् । न[19] केवलाभिरूतिभिः । किं तर्हि ? श्रोमतेभिः[20] शृणोतेरयम् 'अन्येभ्योऽपि

---

१–'ते श्रुत्वा ह' इति त्रुटितम् B.
२–'याथ' इति नास्ति B. C.
३–[पा० ६।१।७०]
४–गच्छतीति B.
५–ध्वजाराणि B. C.
६–उपस्थेत्यनेन B. वसथेत्यनेन C.
७–'यदा वा' इति अधिकमेवात्र ।
८–सन्दिग्धमिदमत्र पदम् ।
९–अशिष C.
१०–[ऋ० ६।१९।१०] 'नृव (प ३.) त्त इन्द्र' इत्येव प्रतीकम् B. C.
११–नृपं B,
१२–कश्चित् B. C.
१३–'ते' इति त्रुटितम् B.
१४–'त्वाम्' इति त्रुटितम् B. 'त्वा' इत्येव C.
१५–नृपतेश्चात्र B. नृतमाः तैश्चात्र C.
१६–मातिः B. C. * 'ऊतिभि०' इत्युचितम् ।
१७—सीमह B. पंसीमह C.
१८–[धा० १।४६४,४६५] वत षण C.
१९–'न' इति नास्ति B. C.
२०–श्रोमते ( तेः B. ) हिः B. C. ' श्रोमतेभिः ' इत्यस्मात्पूर्वमादर्शपुस्तकेषु 'शब्दो यस्मादथ यस्मादीशिषे त्वं वस्वः वयुनो धनस्योभयस्य कतमस्य' इति पाठोऽधिकः ।

दृश्यते' इत्येवं कर्मणि विन्[2]। आतिशायिकस्य तमपः प्रथमद्वितीयाक्षरविपर्ययात् छान्दसत्वात् श्रोतव्यतमैरतिशयेन श्रोतव्यैः शास्त्रैरित्यर्थः। किञ्च ईक्षे हि हिशब्दो यस्मादर्थे यस्मादीशिषे त्वं वस्वो वसुनो धनस्य उभयस्य। कतमस्य ? दिव्यस्य[4] च पार्थिवस्य च। कुत एतत् ? 'अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य[5]' इत्यादौ दर्शनात्। राजन् दीप्त[6] ईश्वरो वा। यस्मादिति वचनात् तस्मादित्यध्याहार्यम्। तस्माद् धा देहि रत्नं धनं महि महत्[7] सारतरं स्थूरं स्थूलं परिमाणतः। बृहन्तं नेदं रत्नविशेषणं महीत्यनेन पौनरुक्त्यप्रसङ्गात् पुंलिङ्गत्वाच्च। किन्तर्हि ? कालप्रतिनिर्देशार्थमेतत्[9] 'कालाध्वनोरत्यन्तसंयोगे[10]' इति द्वितीया। महान्तं कालं यावज्जीवितव्यमित्यर्थः।

क्षोणस्येत्यनवगतम्। क्षयणस्येत्यवगमः। क्षीयतेर्निवासार्थस्य[*] कर्तरि ल्युट्। उदाहरणम्—

युवं श्यावाय[×] रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम्[11] ॥

कुष्ठत्वात् श्यावाय श्याववर्णाय अत्रिपुत्रस्य घोरस्य ज्येष्ठपुत्राय रुशतीं[12] दीप्तां त्वचम्। तत् हे वृषणा वर्षितारौ। तत् किम् ? सामर्थ्यात् कर्म। वां युवयोः सम्बन्धि। कतमत्[13] ? यन्नार्षदाय ऋषये बधिराय श्रवः श्रोत्रमध्यधत्तम्। अधिशब्दो 'अधिपरी अनर्थकौ[14]' इति कर्मप्रवचनीयः पदपूरणः, दत्तवन्तौ स्थः।

अस्मे इत्येतत् प्रकृत्यर्थाभेदेऽपि प्रत्ययार्थभेदादनेकार्थम्। सर्वविभक्त्यर्थेषु वृत्तेः। वयाद्यादेशानां चाकरणस्य नादेशस्य[15] च छान्दसत्वादनवगतसंस्कारमपि। अनेकार्थतां सर्वविभक्त्यर्थप्रवृत्तिं तेन प्रदर्शयन्[16] प्रथमायां तावद् वृत्तिमाह—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
षष्ठः खण्डः[17]। ]

---

१–[पा० ३।२।७५] 'दृश्यन्ते' इति पाठो युक्तः।
२–वित C. 'विच्' इति पाठो युक्तः।
३–'त' इति त्रुटितम् C. ४–दीप्यस्य B.
५–[ऋ० २।१४।११] ६–दीप्तम् B.
७–महन् B C. ८–कुलं B. स्कुलं C.
९–र्थतमतत् B. १०–[पा० २।३।५]
* 'क्षियते०' इत्युचितम्।
× 'श्यावाय' इति पाठो युक्तः।
११–[ऋ० १।११७।८] 'युवं श्यावाय' इत्येव प्रतीकम् B. C.
१२–कुशदीप्ता त्वचः B. कुशदीप्तान्त्वचं C.
१३–ततमन् B. १४–[पा० १।४।९३]
१५–'अनादेशस्य' इति स्पष्टार्थः पाठः।
१६–'प्र' इति नास्ति B.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ सप्तमः खण्डः । ][1]

अस्मे ते बन्धुरिति । प्रथमान्तेन बन्धुशब्देन सामानाधिकरण्यात् प्रथमां[2] निश्चित्य आह्वयामीत्यर्थः । उदाहरणम्—

तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुष्यन्ती ।
अस्मे ते बन्धुः पुषेयम्[3] ॥

सोमक्रयणी याज्या उच्यते । तपोऽग्निस्तापकत्वात् तस्य तपसोऽग्नेस्तनूः शरीरं शरीरभूतोऽसि प्रजापतेर्वर्णोऽसि वरणीया वा स्यात् । अथवा 'सा वा एषा सर्वदेवत्या यदजा'[4] 'प्रजापतिर्वै सर्वा देवता'[5] इति सर्वदेवतात्मसामान्यादेवमुच्यते[6] प्रजापतेर्वर्ण इति । प्रजापतेश्च वर्णभूता प्रजापतिरूपेत्यर्थः । याँ[7] चैवंगुणा सा त्वा सहस्रपोषं पुष्यन्ती[8] एकस्या अजायाः पारम्पर्येण अजासहस्रोत्पत्तिस्तां प्रतिपद्यमानाऽसौ । सोमं क्रीणीहीति शेषः । त्वं सोमं परमेणानेनाजाख्येन[9] पशुना क्रयस्व । अस्मे वयं ते तव बन्धुभूता याज्ञे कर्मणि विनियोक्तृत्वात् । अस्मे[10] ते बन्धुरित्येकत्वनिर्देशादहमित्यर्थः ।

तस्यैवं[11] पठन्ति द्वितीयायामुदाहरणम्—

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।
हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ[12] ॥

कक्षीवत आर्षम् । आ इत्युपसर्गो यातमित्याख्यातेन सम्बन्धयितव्यः । श्येनस्य जवसा[13] जवेन वेगेन नूतनेन नवेन यादृशः प्रथमोऽश्रान्तस्य श्येनस्य वेगस्तादृशेन वेगेनेत्यर्थः । अस्मे अस्मान् प्रति आयातमागच्छतम् । नासत्या नासत्यनामानौ । सजोषा व्यत्ययेनेदमेकवचनम्, सजोषसौ संप्रियमाणावित्यर्थः । कस्मादेवमुच्यते शीघ्रमायातमिति ? उच्यते । हवे हिशब्दो यस्मादर्थे[14] यस्मात् हवे[15] आह्वयामि वां युवां हे अश्विना अश्विनौ । रातहव्यो दत्त-

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—प्रथमं B.
३—[ यजुः ]
४—[ अनुपलब्धमूलमिदम् ]
५—[ तै० ब्रा० ३ । ३ । ७ । ३ ]
६—देवतात्मसा B. सवेता त्वसा C.
७—यथैवंगुणा B.
८—पुष्यति B. C.
९—परमेणानेन B. ततः [illegible] सर्वोऽपि पाठस्त्रुटितः B. परमन्यत्र B. आदर्शपुस्तक एवायं पाठः समुपलब्धः ।
१०—के त्वस्मे ते C.
११—'तस्यैव' इति नास्त्यादर्शपुस्तके ।
१२—[ ऋ० १ । ११८ । ११ ] 'आ श्येनस' इत्येव प्रतीकम् C.
१३—जपसा जघ्ने वेगेन C.
१४—अस्मादर्थे C.
१५—[illegible] C.

हविष्कः सम्मनसा। अथवा रातहव्यः संकल्पितहविष्क उच्यते उपकल्पितहविष्कः सन्नित्यर्थः। शश्वत्तमायाः शाश्वतिकतमाया अतिशयेन नित्याया उषसो व्युष्टौ विवासनवेलायाम्।

तृतीयायाम्—

भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः।
भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥

इन्द्रमरुत्संवादे इन्द्रं मरुत आहुः। भूरि बहु वृत्रवधादि कर्म त्वं चकर्थ कृतवान्। तत्तु युज्येभिर्युज्यमानत्वाद् युज्याः सहाया उच्यन्ते, युज्यैः सहायैरस्मेऽस्माभिः समानेभिः समानैस्त्वया वृषभ हे वर्षितः। केन गुणेन समानैः? उच्यते। पौंस्येभिर्बलनामैतत्, बलैः समानबलैरस्माभिरित्यर्थः। भूरीणि हि विनापि त्वया केवला एव बहूनि कर्माणि कृणवाम कृतवन्तः शविष्ठ हे अतिशयेन बलवन् इन्द्र। क्रत्वा कर्मणा न वाङ्मात्रेण वयं मरुतः। आमन्त्रितत्वाभावात् छान्दसमनुदात्तत्वम्। यद् व्यत्ययेनैकवचनं बहुवचनस्य स्थाने यानि वशाम कामितवन्तो यानि नोऽरोचन्तेत्यर्थः।

चतुर्थ्याम्—

अस्मे प्र यन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः।
अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन् ॥

.........भूरेर्बहुनः। षष्ठीश्रुतेरेकदेशमिति शेषः, द्वितीयार्थे वा षष्ठी, धनं विश्ववारं भूरि अस्मेऽस्मभ्यमेव शतं शरदः शतं वर्षाणि जीवसे जीवनाय धा देहि अस्मेऽस्मभ्यमेव च वीरान पुत्रान् शश्वतो बहुनामेदम्, बहून् हे इन्द्र शिप्रिन् हनु नासिके वा ताभ्यां तद्वंत्।

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु ॥

तस्य वयं सुमतौ शोभनायां मतौ पालनबुद्धौ यज्ञियस्य यज्ञार्हस्य, किम्? स्याम इति यत् परस्तात् क्रियापदम्। न च केवलायां सुमतौ, किन्तर्हि? अपि भद्रे कल्याणे सौमनसे

१–'सन्मनसा' इति वा पाठो भवेत्।
२–[ऋ० १। १६५। ७] 'भूरि चतुर्थ' इत्येवं प्रतीकपाठः C.
३–चकथ C.
४–भूरिणि C.
५–'क्रत्वा' नास्ति। 'कर्मवैन' इत्येव पाठः C.
६–'वशाम' इति नास्ति C.
७–[ऋ० ३। ३६। १०]
८–अत्र 'चतुर्थ्याम्' इत्यारभ्य समन्त्रप्रतीकः कश्चन व्याख्याभागस्त्रुटित आदर्शपुस्तके।
* 'तद्वन्' इति युक्तं स्यात्।
९–'य' इति त्रुटितम् C.
१०–[ऋ० ६। ४७। १३] 'तस्य वयं सुमतौ' इत्येव प्रतीकम् C.

शोभनं मनः सुमनस्तदेव[1] सौमनसम् । किं पुनस्तत् ? दानबुद्धिः, तत्रापि वयमेव[2] स्याम । पालनबुद्धिषु वयं पाल्या[3] दानबुद्धिषु[4] च सम्प्रदानभूता[5] वयमेव स्यामेत्यर्थः । किञ्च[6] सुत्रामा शोभनस्त्राता स्ववान् धनवान् आत्मवान् वा इन्द्रोऽस्मे अस्मद् अस्मत्त इत्यर्थः । आराच्चिद् आराच्छब्दो दूरवचनः, चिदप्यर्थे[7] दूरे अपिशब्दात् सन्निकृष्टेपि यद् द्वेषो द्वेष्यं वाऽस्माकं रक्ष आदि सनुतरन्तर्हितनामेदम्, अन्तर्हितमेतद् युयोतु पृथक् करोतु अपनयत्वित्यर्थः ।

षष्ठ्याम्[8]—

आ नो भर भगमिन्द्र द्युमन्तं नि ते देष्णस्य धीमहि प्ररेके ।
ऊर्व इव पप्रथे कामो अस्मे तमा पृण वसुपते वसूनाम् ॥[9]

विश्वामित्रस्य । नोऽस्माकम् । आभर आहर अस्मभ्यं देहीत्यर्थः । किम् ? भगम् भगशब्दः पुंलिङ्गो धनवचनः, धनं हे इन्द्र । कीदृशं भगम् ? द्युमन्तं दीप्तिमन्तम् । नि ते देष्णस्य धीमहि निशब्दो धीमहीत्यनेन सम्बध्यते, तव स्वभूतदेष्णस्य देयस्य भागस्य, षष्ठीश्रुतेरेकदेशमिति शेषः । निधीमहि निखनेमेत्यर्थः । प्ररेके यागदानभोगातिरेके[10] सतीत्यर्थः । कस्मात् पुनरेवं बहु याच्यते ? ऊर्व इव ऊर्वो वडवाग्निः[11] स इव पप्रथे विस्तीर्यते धनविषयः कामः । अस्मे[12] अस्माकम् । तमापृण आपूरय हे वसुपते धनस्याधिपते वसूनां धनानाम् ।

सप्तम्याम्—'सुगावो देवाः[13]' इति सप्तदशे[14] व्याख्यास्यते ।

पाथ इत्यनवगतमनेकार्थं च । तत् पुनरेतद् यथा व्याख्यातम्, 'पन्थाः पथतेर्वा[15]' इत्यादौ । अन्तरिक्षं तावदुच्यते—।

यत्रा[16] चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः ।
प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः ॥[17]

---

१–'तत्' इति नास्ति C.
२–'व' इति त्रुटितम् C.
३–पाल्य C.
४–दानमबुद्धिषु C.
५–दानभूतः C.
६–'किञ्च सुत्रमा किञ्च शोभनस्सुत्रामा' इति पाठ आदर्शपुस्तके ।
७–'च' त्रुटितम् C.
८–अष्टयाम C.
... प्रतीकम् C.
१०–भोगादिरे C.
११–'वाडवाग्निः' इति युक्तं स्यात् ।
१२–'अस्मे' इति नास्ति C.
१३–[तै० सं० १ । ४ । ४४ । २ ॥ अथर्व० ७ । ९७ । ४]
१४–[निरु० १२ । ४२]
१५–[निरु० २।२८] 'पततेर्वा' इति युक्तं स्यात् ।
१६–[ ऋ० ७ । ६३ । ५ ] 'यत्रा चक्रुः' इत्येवं

वसिष्ठस्यार्षम् । अस्याश्च प्रथमोऽर्धर्चः सौरः, द्वितीयो मैत्रावरुणः । तेन भिन्ने एवैते वाक्ये । यत्र यस्मिन् नभसः प्रदेशे चक्रुः कृतवन्तः । अमृता देवा गातुं गम्यते येन मार्गेण गातुं गमनमार्गम् । अस्मै सूर्यायेति निर्देशः । अस्य सूर्यस्येत्यर्थः । तेनैवायं मार्गेणानतिक्रामन् मर्यादां श्येनो न श्येन इव दीयन्नन्वेति दीयतिरिति गतिकर्मा गच्छन् उदयात् प्रभृत्यास्तमयात् अन्वेति अनुगच्छति । पाथोऽन्तरिक्षम् । एवमियं कर्मणा सूर्यस्य स्तुतिः । किञ्च प्रतीत्ययं धात्वर्थानुवादी वां युवां सूर्ये उदिते अहन्यहनीत्यर्थः । विधेम विधातिः परिचर्यायां परिचरेमेत्याशास्महे । केन ? नमोभिः स्तुतिभिः । मित्रावरुणा हे मित्रावरुणौ न शुष्केन हस्तेन । किं तर्हि ? उत हव्यैरपिच हविर्भिश्च पुरोडाशादिभिः ।

अनेकार्थतां दर्शयन्नाह उदकमपीत्यादि । पानात् पीयते हि तत् । सोमपीथ इति वा वचनस्य दर्शनात् । उदाहरणम्—

अभि वो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम् ।
आ चष्ट आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः ॥[10]

वशिष्ठस्य । अभीत्युपसर्गश्रुतेर्योग्यक्रियापदमध्याहार्यम् । अभिवदामि वो युष्मान् ऋत्विजः । देवीं[11] देवसम्बन्धिनीमित्यर्थः । धियम् । कम् ? यागाख्यं दाधिध्व धारयत कुरुतेत्यर्थः । प्रोपसर्गश्रुतेः पूर्ववदध्याहारः, प्रब्रवीमि[12] वो युष्मानेव । किम् ? देवत्रा देवान् प्रति वाचं स्तुत्याख्यं कृणुध्वं कुरुत । कस्मात् पुनरेवमुच्यते यागं स्तुतिं च देवानां कुरुत इति ? उच्यते । यस्माद् आचष्टे सामर्थ्याल्लुप्तोपममेतत् तदिदं कर्तव्यमित्याचष्ट इव जनेभ्यो ददत् पाथ उदकमासां नदीनां सम्बन्धि । कोऽसौ ? वरुणो मध्यमस्थान उत्तमस्थानो वा उग्रोऽप्रसह्यः सहस्रचक्षा विद्युद्भी रश्मिभिर्वा बहुदर्शनः ।

अन्नमपीत्यादि[13] । पानादेव[14] पीतेरेवाभ्यवहारार्थस्य ।

वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान् ।
स्वदाति देवः कृणवत् हवींषि अवतां द्यावापृथिवी हवं मे ॥[15]

सुमित्रस्यार्षम् । वनस्पते रशनया[16] रज्वा नियूय देवानां पाथः पश्वाख्यम् । उपवक्षि समीपं

---

१—वसिष्ठस्यास्यार्षं च प्रथ C. * 'भिन्ने' इति युक्तम् ।
२—सूर्यस्यायेत्यर्थः C. 'सूर्यस्यार्थायेत्यर्थः' इत्युचितम्
३—दीयानीयति ईषतीति गति C.
+ '०त्यास्तमयात्' इत्युचितम् ४—'कर्मणा' इति स्यात् ।
५—'त्य' इति त्रुटितम् C. ६—विमेध C.
७—मनोभिः C. ८—वानात् C.
९—सोमवीथ इति वा वचनस्य C.
१०—[ऋ० ७ । ३४ । ९, १०] 'अभि वो देवीं' इत्येव प्रतीकम् C. ११—वेवी जो वे वी C.
१२—'प्र' इति नास्ति C. १३—अन्नमपत्यादि C.
‡ '०त्याख्यां' इत्युचितम् ।
१४—वानादेव वीतेरवाभ्य C.
१५—[ऋ० १० । ७० । १०] 'वनस्पते' इत्येव प्रतीकम् C.
१६—रसना रज्वा C. 'रज्ज्वा' इत्युचितम् ।

वह प्रापय विद्वान् जानन् स्वमधिकारं भक्तां वास्माकम्। कस्मादेवमुच्यते वक्षीति ? यस्मात् स्वदाति आस्वादयति सर्वो देवः। कृणवत् कृतवांश्च हवींषि यजमानः। किं च अवताम् अवतिर्गतिकर्मा गच्छतां द्यावापृथिवी द्यावापृथिव्यौ हवमाह्वानं मे मम स्वभूतम्।

सवीमनीत्यनवगतम्। प्रसव इत्यवगमो वर्णव्यापत्तिना। उदाहरणम्—

देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने।
यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः॥

भरद्वाजस्य। देवस्य दानादिगुणस्य वयं सवितुः सवीमनि प्रसवेऽभ्यनुज्ञाने श्रेष्ठेऽत्यन्तप्रशस्ये स्याम भवेम वसुनश्च धनस्य च दावने दाने ? त्वं देव सवितः सर्वकर्मसु नित्यमभ्यनुजानीया धनं च दद्या इत्याशांस्महे। कीदृशः ? उच्यते। यस्त्वं विश्वस्य सर्वस्य द्विपदो मनुष्यादेर्यश्चतुष्पदो गवादेर्निवेशने स्वार्थाय व्यवस्थापने प्रसवे चाभ्यनुज्ञाय च सर्वकर्मसि अस्तिर्भवतिना समानार्थः शुद्धोऽपि चात्र पूर्वार्थे द्रष्टव्यः। भूमनो भूम्नोऽत्यन्तबहुनः।

सप्रथा इत्यनवगतम्। सर्वतः पृथुरित्यस्यार्थे द्रष्टव्यः। उदाहरणम्—

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः।
त्वया यज्ञं वि तन्वते॥

सुतम्भरस्यार्षम्। हे अग्ने सप्रथाः सर्वतः पृथुरसि प्रियश्च होता वरेण्यो वरणीयः। त्वया च हेतुना तव प्रसादेनेत्यर्थः। यज्ञं सर्वयष्टारो वितन्वते मनुष्या वितन्वते कुर्वन्तीत्यर्थः।

विदथानीत्यनवगतम्। वेदनानि विज्ञानानीत्यवगमः। उदाहरणम्—

होता देवो अमर्त्यः पुरस्तादेति मायया।
विदथानि प्रचोदयन्॥

विश्वामित्रस्य। अग्नीषोमीयप्रणयनेऽग्निरुच्यते। होता देवो अमर्त्योऽमरणधर्माऽग्निः पुरस्तात् सोमस्य प्रणीयमानस्य एति गच्छति मायया प्रज्ञया विदथानि विज्ञानानि स्वकर्म-

---

१—स्वदति C. २—'मे' इति नास्ति C.
३—वार्णव्याप C. 'वर्णव्यापत्त्या' इति 'वर्णव्यापत्त्यादिना' इति वा युक्तं स्यात्।
४—[ ऋ० ६ । ७१ । २ ] 'देवस्य वयं' इत्येव प्रतीकम् C.
५—'देवस्य' इति नास्ति C.
६—'शा' इति त्रुटितम् C.
७—अत्र 'स्वापाय' इति पाठः स्यात्।
८—नाभ्यनु C. ९—स्वसि C.
१०—पूर्वार्थो द्रष्टव्यम C.
११—स्यार्थे द्रर्थ द्रष्टव्यः C. 'द्रष्टव्यम्' इति युक्तं स्यात्।
१२—[ऋ० ५ । १३ । ४] 'त्वमग्ने (ग्ने C.) सप्रथाः' इत्येव प्रतीकम् C.
१३—स प्रथाम C.
१४—'र्थः' इति त्रुटितम् C.
१५—वेद जानाति C. १६—त्यनवगमः C.
१७—[ऋ० ३ । २७ । ७] 'होता देवः' इत्येव प्रतीकम् C.

विशेषणानि ऋत्विजां प्रचोदयन् इदमिदानीं कर्तव्यमिति प्रेरयन्निव ।

श्रायन्त इत्यनवगतम् । श्रयतेः शतृप्रत्यये[1] गुणायादेशयोः कृतयोरुपधाया अकारस्य दीर्घत्वं द्रष्टव्यम् । समाश्रयन्त इत्यवगमः । समाश्रिता वेति प्रातिविकल्पः । उदाहरणम्—।

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
सप्तमः खण्डः[2] । ]

---

१–श्रयते शतृप्रत्ययो C.

२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथाष्टमः खण्डः । ][1]

श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ॥[2]

नृमेधो नामाङ्गिरसस्तस्यार्षम् । श्रायन्त समाश्रयन्त[3] समाश्रिता वा सन्तः । के ? सामर्थ्याद् रश्मयः । इव सम्प्रत्यर्थे तं सूर्यम् । अथवा सूर्यमिव रश्मय इन्द्रं मरुतं[4] समाश्रयन्त समाश्रिता वोपतिष्ठन्त इति शेषः । विश्वा विश्वानि सर्वाणि इत् पदपूरणः, इन्द्रस्य स्वभूतानि विभक्ष्यमाणा इति शेषः । कुत एतत् ? परस्तांद्[5] विभागस्य करणवचनात् । ये विभक्तुमिच्छन्तो वोपतिष्ठन्त इत्यर्थः । उपस्थाय च भक्षत विभजन्ते[6] । किम् ? वसूनि धनानि उदकलक्षणानि । कस्मै ? जाते जनिष्यमाणे[7] च जायमानाय च प्राणिजाताय । ओजसा बलेन सामर्थ्याख्येन च । यानि च ते विभजन्ते तानि तदायत्तत्वात् तेषामिन्द्र एव विभजतीत्याह[8] । स यथा तानि धनानि विभजति तथा यस्तत्रास्माकमाभजति तं वयं भागं नशब्द उपमार्थत्वात् सम्प्रत्यर्थे प्रतीत्येव नु इत्येतस्य स्थाने नुदीधिम[9] तं वयमनुध्यायाम इति ।

ओजश्शब्दं निगमप्रसक्तं निराह । ओजतेर्वा[10] नैरुक्तस्य धातोः सामर्थ्यकर्मणो वा उब्जतेर्वा[11] न्यग्भावार्थस्य ओजो हि सामर्थ्यं बुद्धिर्वा[12] तेजसा न्यग्भावयति विश्वम् ।

आशीरित्यनवगतमनेकार्थं[13] च । यजमानस्य व्रतधुङ् 'नाशिरं दुह्रे न तपन्ति'[14] इति दर्शनात् । आश्रयणात् सोमेनाश्रपणाद्वा[15] होमार्थस्य । आङ् च द्योतकलक्षणः[16], ईषच्छ्रवणात् । इतरा[17] प्रार्थनारूपा आशिषमाशास्त इति सकारान्ताद् आशासेर्धातोरिच्छार्थस्य[18] क्विप्येव । उदाहरणम्—

इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।
यत्सीमुपह्वरे विदत् ॥[19]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ८।६९।३] 'श्रायन्त इव' इत्येव प्रतीकम् B. C.
३–'समाश्रयन्त' इति नास्ति B.
४–मरुतः समाश्रयन्तः C. 'श्रायन्तः समाश्रयन्तः' इत्युचितम् ।
५–'परस्तात्' इति द्विर्लिखितम् C.
६–विभजस्ते C.
७–माणैश्च C. 'माणाय' इति युक्तं स्यात् ।
८–विभजन्तीत्याह B. C.
९–'दी' इति त्रुटितम् B. C.
१०–उब्नतेर्वा B. उब्जतेर्वा C.
११–उज्झतेर्वा B.
१२–बुद्धिवी B.
१३–आशिरमित्यन B. C.
१४–[ऋ० ३।५३।१४]
१५–श्रयणाद्वा B. C.
१६–लक्षणम् B.
१७–इतर B.
१८–स्याक्षिप्येव B.
१९–[ऋ० ८।६९।६] 'इन्द्राय गावः' इत्येव प्रतीकम् B. C.

प्रियमेधस आर्षम् । इन्द्राय वज्रिणे तादर्थ्य एषा चतुर्थी, इन्द्रस्य वज्रिणोऽर्थाय गाव आशिरम् आशीः सोमस्य श्रपणं[1] दधि कार्येण सम्बन्धात् कारणं व्यपदिश्यते । आशिरो दध्नः कारणभूतं दुदुह्रे[2] दुह्यते मधु[3] स्वादु पय इत्यर्थः । यत्सीम् सर्वत उपह्वये गह्वरे ऊधसः प्रदेशे दोग्धा विदद्[4] विन्दति लभते ।

इतरोदाहरणम्[5]—

सा मे सत्याशीर्देवान् गम्यात् ।
शृण्वन्तु ते समर्धयन्तु ।
जुष्टाज्जुष्टतरा पण्यात्पण्यतरा ।
अहेडता मनसानुगच्छ यज्ञो देवान् गच्छतु[6] ॥

सा देवैश्रूयतामित्यर्थः । जुष्टाद् यत् किञ्चित् जुष्टं प्रियं तस्माज्जुष्टतरा[7] प्रियतरा । पण्यात् पण्यतरा यत् किञ्चित् पण्यं सुवर्णमणिमुक्तादि ततोऽपि पण्यतरा प्रियत्वाद् अत्यन्त-ग्राह्येत्यर्थः । त्वमपि प्रस्तर अहेडता[8] हेडतिः क्रुध्यतिकर्मा अक्रुध्यता मनसा देवान् प्रति याहि । यज्ञोऽपि वायं देवान् सर्वदैव चायमस्मदीयो यज्ञो देवान् प्रति गम्यादित्याशास्ते[9] अदः । तच्च सूक्तवाकफलं मा मां गच्छतु सम्भवत्वित्यर्थः ।

अजीगरित्यनवगतं धात्वर्थसंस्कारश्च । कथम् ? जिगर्तिनैरुक्तो[10] धातुर्निगरणार्थो गृह्णात्यर्थो वा । उदाहरणम्—

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिव आ पदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः ॥[11]

दीर्घतमस आर्षम् । अश्व उच्यते । अत्र स्थितोऽत्र वा काले ते तव रूपमुत्तममत्य-न्तोत्कृष्टम् अपश्यं दृष्टवानहम् । जिगीषमाणं जेतुमिच्छन्तं सर्वम् । इषोऽन्नस्य हविराख्यस्य सम्बधिनि पदे स्थाने वेद्याख्ये[12] गोः पृथिव्या अवयव इति शेषः । किञ्च यदा ते तव मर्तो मनुष्यः । अनु इत्येतद् आनडित्येतेन सम्बध्यते भोगं वा हतलक्षणमानड्[13] अनुसंव्याप्नोति तं[14] वाहयतीत्यर्थः । यदेति श्रुतेस्तदेत्यध्याहार्यम् । आद्[15] अथ तदा इत् पदपूरणः, श्रान्तः सन्

१—श्रयणं B C. २—दुदुहे B. C.
३—'मधु' इति द्विर्लिखतम् B. C. ४—विधत् C.
५—तत उदाह B. तर उदाह C.
६—[मैत्रा० सं० १ । ४ । ५ ॥ मान० श्रौ० १ । ४ । २ । १७]
७—तस्मादजुष्टतरां B. C.
८—अरेता रेडतिः B. अरेडता रेडतिः C.
९—गम्यातीत्या B.
१०—अत्र 'अहम्' इति युक्तं स्यात् ।
११—[ऋ० १ । १६३ । ७] 'अत्रा ते' इत्येव प्रतीकम् B. C.
१२—वेद्यादिख्या C. १३—'न' इति त्रुटितम् B. C.
१४—त्वं वा इयती B. त्वं वाहयती C.
१५—आन् (B.) आथ तदा B. C.

ग्रसिष्ठस्त्वमतिशयेन ग्रसिता भक्षयिता ओषधीरजीगः अवगिरसि अभ्यवहरसि गृह्णासि भक्षयसीत्यर्थः ।

अमूर इत्यनवगतम् । मुहेर्वर्णव्यापत्त्या अमूढ इत्यवगमः । उदाहरणम्—

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ।
शये वव्रिश्चरति जिह्वयादन् रेरिह्यते युवतिं विश्पतिः सन् ॥[1]

त्रितस्यार्षम् । मूरा मूढाः । हे अमूर अमूढ न वयम् । किम् ? न वयमिति साकाङ्क्षत्वाद् अत्र वित्से इति अर्धर्चान्तस्थो विदिरनुषक्तव्यः, न वयं विद्मः । चिकित्वः हे चेतनवन् । किं न विद्मः ? महित्वं माहात्म्यं तव हे अग्ने । त्वमङ्गेति निपात एवार्थे, त्वमेव वित्से । किञ्च शय इति स्थानार्थः, आमाशयो जलाशय इति यथा स्थाने सामर्थ्यात् । वव्रिः रूपनामेदं[2] सामर्थ्याच्चात्र अन्तर्नीतमत्वर्थो द्रष्टव्यः,[3] आहवनीयाख्येन रूपेण रूपवान् भवान् । चरति जिह्वया ज्वालाख्यया अदन्[4] हवींषि भक्षयन् । किञ्च रेरिह्यते 'लिहं[5] आस्वादने' अत्यर्थं[6] लेढि आस्वादयति दीर्घप्रसृतया[7] ज्वालया युवतिमात्मना मिश्रयंती[8]माहुती[9]मित्यर्थः । विश्पतिर्विशां मनुष्याणामधिपतिः सन् ।

शशमान इत्यनवगतम् । 'शंस स्तुतौ'[10] इत्यस्य शंसन् इत्यवगमः । ततश्च शंसमान इत्यपपाठः । उदाहरणम्—

यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः ।
उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू ॥[11]

दीर्घतमसः । यो वां[12] युष्मदः सम्प्रदाने[13] चतुर्थी भवति द्विवचनमेतत्, युवाभ्यां मित्रावरुणाभ्याम् यज्ञैः सप्तम्यर्थ एषा तृतीया, यज्ञेषु शशमानः शंसन् स्तुवन् दाशति ददाति । किम् ? सामर्थ्यात्[14] हवींषि । कविर्मेधावी होता आह्वाता देवानां यजति यागं च करोति । मन्मसाधनः मननमनुष्ठेयपदार्थविषयज्ञानं तत्साधनभूतं यस्यास्ति स मन्मसाधनोऽधिकृत इत्यर्थः । तस्य किम् ? उच्यते । उपेत्येतद् गच्छथ इत्येतेन सम्बध्यते, अहशब्द एवार्थे

---

१–[ऋ० १० । ४ । ४] 'मूरा अमूर' इत्येव प्रतीकम् B. C.

२–पिव्रि B. विव्रि C.

३–अन्तर्णीतमत्वर्थं द्रष्टव्यम् C.

४–'न्' इति त्रुटितम् B.

५–[धा० २ । ६] रिह आस्वा B.

६–'त्य' इति त्रुटितम् C.

७–प्रास्मतया C.

८–मिश्रयित्री B. 'मिश्रयन्ती०' इत्युचितम् ।

९–आहति B. आहुती C.

१०–[धा० १।७२९] शं स्तुतौ C.

११–[ऋ० १।१५१।७] 'यो वां यज्ञैः ( ज्ञो C. )' इत्येव प्रतीकम् B. C.

१२–युवां B.

१३–दानचतु B C.

१४–'व ह' इति त्रुटितम् B. अग्रे 'विंषि' इत्येवं पाठः B.

पदपूरणो वा[1] तमेवोपगच्छथ[2] नान्यम्[3]। उपगम्य च वीथो[4] भक्षयथस्तस्यैव नान्यस्य। अध्वरम्[5] अध्वरशब्देनात्र सम्बन्धात् हविरुच्यते, अध्वरसम्बन्धि हविरित्यर्थः। यत एवमतोऽहमपि तथाभूत[6] एवेति ब्रवीमि। अष्टप्राप्तप्राप्तुं[7] गिरो मदीयां स्तुतिं शोभनां प्रज्ञां वा[8] प्रति गन्तं गच्छन्तं हे मित्रावरुणौ अस्मयू[9] अस्मत्कामौ मामनुग्रहीतुमित्यर्थः।

देवो देवाच्या कृपा इत्येते अनवगते। देवशब्दस्योपादानमनयोरेव[10] सम्प्रतिपत्त्यर्थम्। ततो भूते क्तो द्रष्टव्यः। देवायुंनयेत्यवगमः[11]। स्पष्टतरमाह देवानक्तया[12] चेति 'अञ्चोऽनपादाने'[13] इति निष्ठान्तत्वम्। कृप् कृपतेरिति[14] अकृतलत्वस्य ग्रहणम्। कल्पतेर्वा तस्यच्छान्दसत्वात्[15] कर्मणि क्तो विकल्प्यते[16]। सापीति कवेरभिधानतयापेक्षितव्यमित्यवगमः[17]। उदाहरणम्-

अ॒ग्निं होता॑रं मन्ये॒ दास्व॑न्तं॒ वसुं॑ सू॒नुं सह॑सो जा॒तवे॑दसं॒ विप्रं॒ न जा॒तवे॑दसम्।
य ऊ॒र्ध्वया॑ स्वध्व॒रो दे॒वो दे॒वाच्या॑ कृ॒पा घृ॒तस्य॒ विभ्रा॑ष्टि॒मनु॑ वष्टि शो॒चिषा॒ जुह्वा॑नस्य स॒र्पिषः॑ ॥[18]

परुच्छेपस्यार्षम्[19]। अग्निं होतारं मन्ये मन्यतिरर्चतिकर्मा, अर्चामि स्तौमीत्यर्थः। कीदृशम्? दास्वन्तं वसुं वसुमिव प्रशस्यं धनवन्तं वा। सूनुं पुत्रं सहसो[20] जातदेवसं जातधनं विप्र[21] न मेधाविनमिव। कम्? सामर्थ्यात् कंचिद्[22] ब्राह्मणं जातवेदसं जातविद्यम्[23]। या ऊर्ध्वया अनावृत्तया वैश्वानर्या धिया[24] अभिन्नरूपयेत्यर्थः। स्वध्वरो दैव्यहोतृत्वे[25] वर्तमानत्वादनुष्ठेयतया शोभनोऽध्वरो यस्य सुयज्ञो देवो दानादिगुणः। देवाच्या[26] उत्कृष्टत्वाद्देवान् प्रति अञ्चितया[27] सुगत्या[28]। कृपा[29] वा स्तुत्या तृतीयाश्रुतेः स्तूयमान इति शेषः। किं करोति?

---

१–'वा' इति नास्ति B. C.

२–वोपागच्छ P.

३–उपान्नान्यम् B. C. ४-पीथः B.

५–'अध्वर' इति नास्ति B. C.

६–तथाहूत C. ७–अयं पाठः सन्दिग्धः।

८–शोभनप्रज्ञा वो C.

९-अस्म आ B. C १०–स्यापादान B. C.

११–देवामुनयेत्यवगमः C. अयं पाठः सन्दिग्धः। अत्र कदाचित् 'देवान् प्रत्यक्तया' इति स्यात्।

१२–नक्ता चेति B. नक्तयेति C.

१३–[ पा० ८। २। ४८ ]

१४- रूप रूपतेरिति B. C.

१५–कल्पते वतस्य B.

१६–'वि' इति द्विर्लिखितम् C.

१७–साविति कवेरभिधानतया क्वितव्य C.

१८–[ ऋ० १।१२७।१ ] 'अग्निं होतारम्' इत्येव प्रतीकम् B. C.

१९- परिच्छेप C.

२०–सहसं B

२१–'प्र' इति त्रुटितम् B. C.

२२–किञ्चित् C.

२३–जातविद्या C.

२४–दिना C.

२५–होतृत्वेन वर्त B.

२६–देव्या B. देच्या C.

२७–'तया' इति त्रुटिम् B. C.

२८–स्युगत्या C.

२९–कस्य वा B. कया वा C.

उच्यते । घृतस्य आहुत्यर्थस्य विभ्राष्टिं विभ्रंशमनुवष्टि 'वश कान्तौ'[1] विधिक्रमेण कामयते । शोचिषा ज्वालालक्षणेन जिह्वासमूहेन लेलिह्यमानमित्यर्थः । आजुह्वानस्य[2] यथाविधिमन्वाहूयमानस्य सर्पिष आज्यविशेषणमेतत् , सर्पणस्वभावस्य विलीनस्याधिश्रयणेन संस्कृतस्येत्यर्थः ।

विजामातेत्यनवगतम् । कोऽत्रानवगमः ? उपसर्ग[3]स्यासमाप्तार्थता[4] । जाशब्दोऽपि जायते जन्यते[5] वा तवांत[6]दित्यवपत्यर्थ.........त्यनवगमः[7] । समाप्तगुणपरो[8]ऽभिधेयः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
अष्टमः खण्डः[9] । ]

---

१—[ धा० २।७० ]
२—अह्वमानस्य B. C.
३—अनुपसर्ग B. C.
४—'ता' इति त्रुटितम् B.
५—'जन्यते' इति नास्ति C.
६—अयं पाठः सन्दिग्धः । तवातदित्यववत्यार्थ C.
७—त्यनवगतः B.
८—गुणवरो C.
९—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ नवमः खण्डः । ][1]

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥[2]

कुत्सस्यार्षम् । हिशब्दो यस्मादर्थे यस्मादश्रौषमश्रवं श्रुतवानहम् । किम् ? उच्यते । भूरिदावत्तरा बहुनो[3] धनस्य दातृतरौ वां युवाम् । कुतो बहु दातृतरौ[4] ? विजामातुर्धनादन्ये[5] कुलीनत्वादयो विगता जामातृगुणा यस्मात् सोऽसमाप्तगुणोऽपि[6] जामाता क्रीतापतिरुच्यते । स हि निर्गुणत्वाद् धनेनोपप्रलम्भयन्निति शतेन बहु ददाति ततोऽपि युवां बहु दातृतरौ । न विजामातुरेव केवलात् । किं तर्हि ? उत वा घा स्यालाद् वाशब्दश्चार्थे घः पदपूरणः, अपि च स्यालात् । स्यालो हि भगिनीप्रियचिकीर्षया भगिनीभर्त्तुरतिबहु ददाति । ततोऽपि युवां बहुदातृतरौ । अथ एतस्मात् कारणात् सोमस्य प्रयतिर्दानार्थः, ततो भावे क्तिनि[7] तृतीयैकवचनस्य पूर्वसवर्ण एतद्रूपम् । सहार्थे च तृतीयाप्रत्ययः । प्रदानेन[8] सहेत्यर्थः । युवाभ्यां तादर्थ्ये एषा चतुर्थी, युष्मदर्थे हे इन्द्राग्नी स्तोमं[9] जनयामि । कीदृशम् ? नव्यं स्वार्थे तद्धितः, नवमन्यैरेवं कृतमित्यर्थः ।

शश्वन्नित्यम् । दाक्षिणाजा दक्षिणस्यां दिशि देशे अजायन्त इत्याङ्पूर्वस्य[10] जनेर्डः[11] प्रत्ययः, दक्षिणजा* एव दक्षिणाजाः प्रज्ञादेराकृतिगणत्वात्[12] स्वार्थिकोऽण्प्रत्ययो द्रष्टव्यः । क्रीतापतिमाचक्षते[13] । एवं प्रसिद्धोह्यभिधानधर्मो दक्षिणापथे क्वचिद्देशे । इव सम्प्रत्यर्थे[14], सुष्ठु समाप्तगुणत्वात् सुसमाप्तो निर्माता तनयं यत् पितुरपि त्वं तदसौ अन्नपानभोगादिना निर्मिमीते एवंशीलः संभोगेन हि सम्पूर्णो भवति । अतोऽसौ पितुः कन्यापितुर्जामाता भवति । स्याल आसन्नः सहयोगेन सम्बन्धो नान्येभ्यः पि[15]·········सदेः स्याल इति । निदानं नाम ग्रन्थस्तद्विदो[16] नैदाना मन्यन्त इति शेषः । तथाहि तस्मिन् सर्वा विध्वंसिः[17] स्यालाद्वा

---

१—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

२—[ ऋ० १।१०९।२ ] 'अश्रवं हि' इत्येव प्रतीकम् B. C.

३—बहुना B. C.

४—'तृ' इति त्रुटितम् B.

५—न विजा B. ग विजा C.

६—सोममाप्त B. C.

७—यावे त्तिनि B. भवे क्तिनि C.

८-प्रयमनेन B. C.

९—स्तोमान् B.

१०—'स्य' इति त्रुटितम् B. C.

११—[ पा० ३।२।९७ ]

*'दक्षिणाजा एव दाक्षिणाजाः' इत्युचितम् ।

१२-[ पा० ५।४।३८ ]

१३—कितापति B. C.

१४—सं प्रत्यक्षे B. C.

१५—'पि' इत्यपि त्रुटितम् B.

१६—तद्विदा B. तद्विदौ C.

१७—अयं पाठः सन्दिग्धः । स्यालद्वा C.

शूर्पाद्वा विवाहकाले लाजानावपतीति गृह्यमाणस्मरणाद्* वाक्यार्थे पदं[1] पदवचनाद् द्रष्टव्यम् । एवमेतौ निगमप्रसक्तौ जामातृस्याल[2]शब्दावुक्तौ । तत्प्रसङ्गादाह राजतेर्लाजाः । शोभन्ते हि ये नीलशमीपलाशमिश्रा[3] विशेषेण तस्यां वेलायाम् । शूर्पः स्यतेर्धातोः, तेन ह्यन्नस्य कर्ण[4]तुषविप्रमोकादिना तण्डुलसमिदादे[5]रन्नं क्रियते तन्निवर्त्यत इत्यर्थः । पूयतेर्वा[6] पूयते तेन कणतुषादिशूर्पमशनस्य प्रत्यासन्नतण्डुलसमिदादेः पवनं शोधनम्[7] । शृणातेर्वा हिंस्यन्ते मक्षिकादयः क्षुद्रप्राणिनः ।

ओमास इत्यनवगतम् । तत्पुनः प्रसङ्गेन सप्तदशे व्याख्यायते 'ओमासश्चर्षणी-धृतः' इति[8] ।

[ इति निरुक्तविवरणसमुच्चये
एकादशस्याध्यायस्य[9]
द्वितीयः पादः । ]

---

* 'गृह्यस्मरणाद्' इति पाठो युक्तः स्यात् ।

१–वाक्यार्थपदं C.

२–जायात्र स्याल B. जामात्र स्याल C.

३–'मिश्रा' इति त्रुटितम् B.

४–करण तुष B. C.

५–समिधादे C.

६–' अयतेर्वा केन रुणतुषादि शूर्पशमनस्य ' इत्यादर्शपुस्तकपाठः ।

७–शोवं B. C.

८–[ निरु० १२।४० ]

९–'अध्यायस्य' इति नास्ति C.

## [ अथ (षष्ठस्याध्यायस्य) तृतीयः पादः । ][1]

सोमानमित्यनवगतम् । 'षुञ् अभिषवे'[2] इत्यस्य मनिन्प्रत्यय एतद्रूपं सोमानम् । सोतारमित्यवगमः । उदाहरणम्—

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः[3] ॥

मेधातिथेः[4] । सोमानं सोतारम् । कस्य ? सामर्थ्यात् सोमानाम्[5] । स्वरणं 'स्वृ शब्दोपतापयोः'[6] शब्दयितारमुच्चारयितारं च । कस्य[7] ? सामर्थ्यात् स्तुतीनां यष्टारं स्तोतारं चेत्यर्थः । कृणुहि कुरु मां बहुधनप्रदानेन । बहु धनं देहि येनाहं यष्टा स्तोता च स्यामित्यभिप्रायः । अथवा सर्वत्र यः शब्द्यते[8] स स्वर्यत इति स्वरणः ल्युट् कर्मसाधनः प्रकाश्यत इत्यर्थः । कतमोऽसौ कक्षीवान् ? उच्यते । य औशिजः पौत्रः । अथवा काक्षीवन्तमिति[9] न ऋषिनाम नं[10] चोपमानम् । किं तर्हि ? आत्मनो विशेषणम् । उशिक्शब्दोऽपि मेधाविनाम । योऽहं कर्मलक्षणेन मनुष्यावयवभूतेन तेन[11] तद्वान् औशिजः । उशिजश्च[12] मेधाविनः कण्वस्य पुत्रो मेधातिथिर्नाम । यच्छ्रुतेस्तदध्याहारः । तं मां[13] सोमानं स्वरणं च कुर्विति[14] सम्बन्धः । अथवा हस्त्यश्वश्च[15] कक्ष्यादिस्तद्वान् ईश्वर इत्यर्थः । उशिज उशिग्वष्टेः कान्तो ह्यसौ ।

अनवायं किमीदिने[16] इत्यनवगते । पूर्वस्यानवयवत्वमव्यवेयमिति[17] वावगमः । परस्य किमिदानीं कस्य[18] किं छिद्रमिति चरति किमिदं वर्तत इति वा चरति यः स उच्यते । साधुजनवैरी सदा विद्धबुद्धिः पिशुनोऽभिधेयः । उदाहरणम्— ।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
दशमः खण्डः[19] । ]

---

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं सर्वोप्यध्यायपादारम्भात्मकः पाठो नास्ति C.
२–[ धा० ५।१ ] षुञ् भिषवे C.
३–[ ऋ० १।१८।१ ] 'सोमानं स्वरणम्' इत्येव प्रतीकम् B. C.
४–सोमातिथेः C.
५–सोमानम् B. सोमाना C.
६–[ धा० १।९५७ ] स्व ऋ शब्दोप C.
७–तस्य C.   ८–शब्दकृते C.
९–कक्षयन्तमिति .
१०–नाकोपमानम् C.
११–'तेन' इति नास्ति B.   १२–औशिजश्च B.
१३–'मां' इति त्रुटितम् B.
१४–कुरिति B. कुर्मिति C.
१५–'श्व' इति त्रुटितम् C.
१६–किमु दीने B. किमिति ने C.
१७–मव्यये वयमिति C.
१८–'कस्य' इति त्रुटितम्
१९–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ एकादशः खण्डः । ][1]

इन्द्रासोमा समघशंसमभ्य १ घं तपुर्ययस्तु चरुरग्निवाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥[2]

वसिष्ठस्य । हे इन्द्रासोमौ अघशंसं पापं परेभ्यः शंसतीत्यघशंसस्तं[3] पापस्यास्माकं[4] शंसितारम् । अभ्युपसर्गस्तच्छ्रुतेश्च योग्यक्रियापदाध्याहारः कार्यः । तेन अभिसन्तापयतमिति शेषः । अघम् अन्तर्नीतमत्वर्थमेतत्,अघवन्तम्[5] अघात्मकं बाधं केवलं पापकमित्यर्थः[6] । स च तपुः तपेः कर्मण्युप्रत्यये अभिसन्तप्यमान इत्यर्थः । ययस्तु[7] 'यसु प्रयत्ने' आयस्यतु[8] क्षीयतामित्यर्थः । तप उच्यते । चरुरग्निवान् अग्निसंयुक्त इत्यर्थः । क्षीणाय ब्रह्मद्विषे[9] तस्मै[10] ब्राह्मणद्विषे क्रव्यादे क्रव्यं मांसं तदत्तीति क्रव्यात् तस्मै पृष्ठमांसादिने परोक्षाक्रोशकं* इत्यर्थः । लोकेऽपि यः परोक्ष आक्रोशति स उच्यते पृष्ठमांसानि[11] खादतीति । घोरचक्षसे चक्षिर्दर्शने[12] घोरदर्शनाय । द्वेषः सर्वलोकस्य द्वेष्यबन्धस्तं[13] धत्तम्[14] । कीदृशम् ? अनवायम् अनवयवं सकलमित्यर्थः । अव्यवेयं[15] वा[16] अनवगमनीयं वा । अनवगमनीयं यद् द्वेषः सन्तः[17] सुहृदो नेतुं न शक्नुयुरित्यर्थः । किमीदिने पिशुनाय ।

अघं हन्तेः[18] पूर्वस्याङो ह्रस्वत्वेन । आभिमुख्येन हन्ति श्रेयसो विनाशयतीत्यर्थः । चरुशब्दो मृन्मय्यां[19] स्थाल्यामधिकरणे आधेये चरावपीति[20] द्रोणादिशब्दवद् उभयत्र प्रसिद्धोऽविशेषात् । मुख्यं चरतेरर्थसमवायं दर्शयति समुच्चरन्त्यस्मात् तत्तादापि[21] इति । विकृत्तात् प्रदेशाज्जायत इति विकृन्ततः क्रव्यमिति नैरुक्ताः । लोकस्तु समुदायप्रसिद्ध्या संस्मरन्

---

१–आदर्शपुस्तके खण्डस्य गारम्भस्य च निर्देशो न दृश्यते ।

२–[ ऋ० १७।१०४।२ ] 'इन्द्रासोमा सम्' इत्येव प्रतीकम् B. C.

३–शंसं तत् B. शंसः सतत् C.

४ पापस्यात्मा कं B.

५–'र्थ' इति त्रुटितम् C.

६–अघवन्तः B.

७–'क' इति नास्ति B.

८–'यस्तु' इति त्रुटितम् C.

९–[ धा० २ । १०४ ] यसु प्रयत्ने B.

१०–ब्रह्मविदुषे B.C. * '०क्रोशकाय' इति युक्तम् ।

११–मांसनिपातीति B

१२–'चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि' [ धा० २.७ ]

१३–द्वेष्यबन्तन्तं C.

१४–दत्तम् B. C.

१५–अव्यवे वयं C.

१६–पावनगमनीयं B.

१७–स तत्सुहृदो C.

१८–अघं हतं तरं ( रां C. ) पूर्वस्यां (स्यन् C.) दोह ( ह C. ) स्वत्वे ( त्व C. ) न B. C.

१९–मृच्छयो C.

२०–चरोरप्य ( व्य C. ) तीति B. C.

२१–तत्तामात्व इषीति B. तत्तादात्व इति C.

क्राव्यादमाचष्टे । अनवायमव्यवेयमिति व्याख्यातम् । विशतेर्हिंसार्थस्येति केचित् । स हि हिनस्ति अनर्थेन योजयति ।

अमवा[1]नित्यनवगतमनेकार्थं[2] च । अमात्यं[3] इति वा अभ्यमनमिति[4] वा आत्मवानिति[5] वावगमः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकादशः खण्डः[6] । ]

———

१–अमवानव्यवे B.
२–त्यवगत B. त्यवशत C.
३–अमात्यमिति वा B.
४–'भ्यम' इति नास्ति B. C
५–आत्तवानिवेत्यव B. वानित्येवगमः C.
६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ द्वादशः खण्डः । ][1]

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥[2]

वामदेवस्य । अग्निरुच्यते । कृणुष्व कुरु पाजो बलं ज्वालासमाख्यम् । प्रसितिं न प्रसितिमिव[3] प्रसितिश्च वागुरा[4] जालं वा तद्वत् । पृथिवीं विस्तीर्णां कृत्वा याहि[5] रक्षांसि प्रतीति[6] शेषः । क इव ? उच्यते । राजेव[7] यथा राजा अमवान् ससहायः[8] । अथवा ह्यमनं रोग उच्यते, कर्तव्यैः शत्रूणां रोगैस्तद्वत्[*] । दस्यूनां रोगभूत इत्यर्थः । आत्मवान्वायत्तवा[9]नित्यर्थः । इभेन इरा अन्नं[10] तद्भूतेन सुपुष्टेन गणेन[11] बलसमूहेन गतभयेन[12] वा शूरेण[13] हस्तिना शत्रून् प्रति विश्वस्तो यायात् । एवं तृष्वीमनुप्रसितिमित्युभयत्र व्यत्ययेन द्विती- यैकवचनं[14] तृतीयैकवचनस्य स्थाने । तृष्वीति[15] क्षिप्रनाम तृष्व्या[16] क्षिप्रया । कया ? साम- र्थ्याद् गत्या । कीदृश्या ? अनुप्रसित्या[17] अनुबन्धया सन्ततयेत्यर्थः । गत्या च द्रूणानो द्रूणा- तीति वधकर्मा घ्नन् । तत्रैकवाक्यतायै सुखप्रतिपत्त्यर्थं यस्मात्तस्मादित्यध्याहार्यम्[18] । यस्मादस्तासि तृन्नयं साधुकारिणि साधु क्षेप्तासि इषूनिति शेषः । तस्मात् तैर्विध्य ताडय रक्षसस्तपिष्ठैस्तापयितृतमैरतिशयेन तापकैर्दीप्ततमैर्वा अतिशयेन श्लक्ष्णैः । तृप्तं मूढमुच्यते प्रविष्टं श्लक्ष्णं वाजः[+] पानात् ।

अमीवेत्यनवगतम् । हिंसितारो गौर्वाभिधेयाः[19] । ततश्च पूर्वमन्त्रोक्तेन अभ्यमनेन[20]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।

२–[ ऋ० ४।४।१ ] 'कृणुष्व पाजः' इत्येव प्रतीकम् B. C.

३–प्रसितिरिव B. प्रसितिव C.

४–वागुर B. C.

५–त्राभि B. भि C.

६–प्रतीत शेषः C. ७–रुजेव C.

८–सहापः B. * '०स्तद्वान्' इति युक्तम् ।

९–'वायत्त' इति द्विर्लिखितम् B. C.

१०–अनर्दं तत्सू ( भू C. ) तेन B. C.

११–गुणेन B. C.

१२–'गतभयेन' इति द्विर्लिखितम् B. C.

१३–'शूरे' इति द्विर्लिखितम् C.

१४–'वचनं तृतीयैक' इति त्रुटितम् B.

१५–तिष्ठर्दिति (किर्ष्विति C.) किप्रनाम B. C.

१६–तिष्या B.C. १७–अनुप्रसत्या (त्य C.) B.C.

१८–'यस्मात् तस्मात्' इत्यनयोर्मध्ये 'ते नवगभ (भं C.) ममीवा हिंसितारो गोवगभः (भं C.) पा (वा C.) तः दुर्नामा वायं तिमिरमिति नाम' इत्यधिकः पाठः B. C. 'तस्मात्' इत्या- देश्च स्थाने 'तत्स्यादित्य' इति B. 'तस्यादि- त्याहार्यं' इति च C. पुस्तके पाठः ।

+ 'पाजः' इति युक्तं स्यात् ।

१९–गो वाभिधेय C.

२०–ह्यमहे नैकं पद B. अह्यमनेन C.

एतत् पदं व्याख्यातम्। अतोऽभ्यमनवान्[1] इत्यवगमः। उदाहरणम्—

यस्ते गर्भममीवा दुर्णामा योनिमाशये।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत्[2]॥

रक्षोहा नाम ब्रह्मणः पुत्रस्तस्यार्षम्। गर्भरक्षणार्थे कर्मणि विनियोगः। स्त्री उच्यते। यस्ते तव गर्भम्[3] अमीवा हिंसिता रोगभूतो दुर्णामा पापः कृमिरिति[4] नाम यस्य स कृमिः योनिमाशये[5] आस्थित वा आशेते वा तिष्ठति हि[6]। तस्य किम्? उच्यते अग्निस्तं ब्रह्मणाऽनेन मन्त्रलक्षणेन सह अग्निश्च ब्रह्मा चेत्यर्थः। निरित्ययमनीनशदित्येतेन सम्बध्यते। क्रव्यादं मांसभक्षं निर्मूलं[7] नाशयतु।

निर्वचनप्रसक्तमाह क्रव्ये मांसे मेद्यति स्निह्यति गृध्यतीत्यर्थः[8]। क्रमतेर्वा स्यात् सरणकर्मणो[9] हिंसार्थस्य सरणकर्मण इति पाठान्तरम्। क्रामतेर्वेति[10] तस्यैव धातोः स्वार्थवृत्तित्वेन पुनरुपन्यासः, हिनस्ति धावति वा क्रामति[11] वा।

दुरितमित्यनवगतम्। किमत्रानवगतं यावता एतेर्भावे क्तः, गतिर्गमनमित्यर्थः[12]। तस्य दुःपापत्वमेव द्योतयति पापगतिर्दुरितं भवेत्। यदि पङ्गुवामन[13]खञ्जादीनां गतिर्दुरितमित्युच्यते[14]। यद्वा[15] क्रिमिकीटपतङ्गत्वादिप्राप्तिरूपा दुर्गतिर्दुरितमुच्यते। तत्र धात्वर्थमात्रकुत्सायां नेह किञ्चिदनवगतं स्यात्। अस्ति खलु[16] दुर्गतिप्रापककारणभूतं कर्म। दुर्गतिर्गम्यते येन येन तद् दुरितमिहाभिप्रेतम्। तच्च दुर्गतिशब्देनैवाभिधातुं शक्यते न दुरितमित्यनेनानवगतम्। तदेतल्ल्युदा दर्शयति यावदुक्तं स्याद्दुर्गतिर्गमनानि तावद्दुरितानीति। उदाहरणम्—

वैश्वदेवीं सूनृतामारभध्वं शुद्धा भवन्तो यज्ञियासः पावकाः।
अतिक्रामन्तो दुरितानि विश्वा शतं हिमाः सर्ववीरा मदेम[17]॥

---

१—अह्यमवान B. C.

२—[ ऋ० १०।१६२।२ ] 'यस्ते गर्भम्' इत्येव प्रतीकम् B. C.

३—गर्भः B. ४—क्रिमि C.

५—योनिराशये B.

६—आशते वा तिष्ठत्त ( नास्ति C. ) द्वि B. C.

७—निर्मूलां C. ८—शध्यतीत्यर्थः B.

९—कर्मणि C. १०—क्रमतेर्वेति B. C.

११—क्रमति B. C.

१२—इतिर्गमन B. १३—वंकुवामन B. C.

१४—'त्यु' इति त्रुटितम् B. मुच्यते C.

१५—यदि वा C. १६—पपु B.

१७—'वैश्वदेवीं' इत्येव प्रतीकम् B. C. अयमेतदानुपूर्वीको मन्त्रः कुत्रत्य इति न ज्ञायते। अथर्ववेदे त्वल्पपाठभेदेनेत्थमयं मन्त्रो वर्तते—

वैश्वदेवीं वर्चस आरभध्वं
शुद्धा भवन्तः शुचयः पावकाः।
अतिक्रामन्तो दुरिता पदानि
शतं हिमाः सर्ववीरा मदेम॥

[ अथर्व० १२।२।२८ ]

विश्वेषां देवानां सम्बन्धिनीं सूनृतां सत्यां प्रियां च । एवंभूता हि वाक् सूनृतोच्यते[1] । प्रियां सत्यां वाचं स्तुतिमित्यर्थः । आरभध्वमुपक्रमध्वं वक्तुम् । तया च शुद्धाः पूताः प्रकर्षोऽत्र द्रष्टव्यः । स्तोकेनापि पापेनासंबद्धा[2] इत्यर्थः, भवन्तो यज्ञियासो यज्ञसम्पातिन* ऋत्विजो यूयम् । वयमप्यतिक्रामन्तो[3] दुरितानि दुर्गतिः कुत्सिता अध[4] गतिर्गम्यते[5] यैस्तानि पापानि विश्वा सर्वाणि शतं हिमाः हेसन्तः× शतं वर्षाणीत्यर्थः । सर्ववीराः सर्वैर्वीरैः पुत्रैः पौत्रैश्चोपेता मदेम मोदेमेत्याशास्महे ।

अप्वेत्यैतन्नगतम् । अपपूर्वस्य वेतेरन्तर्नीतण्यर्थस्य[6] एतद्रूपम् । अपवाय[7] इत्यवगमयति । सुखं प्राणांश्चेत्यवगमः । यद् यस्माद् एनया वाचा शब्दवाच्यया विद्धस्ताडितः, ताडिस्सम्बन्ध इत्यर्थः । दृष्टव्याधिसम्बन्धोऽपविद्धो[8] गुरुणा विद्धाङ्गं[9] उपमीयते प्रमीयत इत्यर्थः । अतो व्याधिजातिर्वा स्त्रीलिङ्गनिर्देशात् । उदाहरणम् 'अमीषां चित्तम्'[10] इति प्रसङ्गेन चतुर्दशे व्याख्यास्यते ।

अमतिरित्यनवगतम् । अमामयीत्यस्यार्थवचनम्[11] । आत्ममयी[13] अततेर्वाऽमतेर्वा[14] अमतिशब्द इति निर्दिष्टः[12] । मतिरपि प्रकाशरूपत्वाद्दीप्तिरात्मप्रकाशमयी[15] ततिर्मतिर्वा । अमतिर्दीप्तिरभिधेया । उदाहरणम्—

> अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ।
> ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥[16]

नकुलस्यार्षम् । अभीत्ययमर्चामीत्यनेन सम्बध्यते । त्यं तं देवं[17] दानादिगुणम्[18] । ओण्योः[19] द्यावापृथिव्योर्द्वयोरपि मध्ये कविक्रतुं क्रान्तकर्माणं क्रान्तप्रज्ञानं वा । यथा मेधाविनोऽधोविकर्मणो वा विचार्य हितं कुर्वन्ति तथा सर्वजगद्धितं कुर्वाणमभ्यर्चामि अभिष्टौमि । सत्यसवं[20] संवसश्चा[21]नुज्ञानादभ्यनुज्ञातम् । उदयास्तमयाभ्यां हि यथास्वं सर्वकर्मसु सत्य-

---

1—तोच्यतां B. C.
2—नासम्बद्ध B. नासम्बन्ध C.
3—ह्वतेB. ह्वयतेC. * 'सम्पादिन' इति युक्तं स्यात् ।
4—'म' इति त्रुटितम् B.  5—अयोगति C.
× 'हेमन्तान्' इति युक्तम् ।  6—पेतेरन्त B. C.
7—अपापाय B. C.
8—द्रष्टव्याद्धि सम्बद्धोऽपि B.  9—विद्धां B.
10—[ ऋ० १०।१०३।१२ ]
11—[ निरु० ९।३३ ]
12—'म' इति त्रुटितम् B. C.
13—आमयि B. अभूमयी C.
14—'ततेर्वा' इत्येव B. ततेर्वा मतेर्वा C.
15—दीप्तिमात्मप्रकाशमयीं B.
16—[ अथर्व० ७।१४।१,२ ] 'अभि त्यं देवम्' इत्येव प्रतीकम् B. C.
17—'तं देवं' इति त्रुटितम् B. C.
18—दादिगुणः B.
19—अत्र 'ओण्योः' इति पाठो युक्तः ।
20—सत्यशव B.
21—संवसोश्चा B. संवसोभ्यनुज्ञानत्याभ्यन् C.

मेवासावभ्यनुज्ञानाति[1] विश्वम् । रत्नधां रमणीयानां[2] धनानां दातारम् । अभीत्ययं मतिमित्येतेन[3] सम्बध्यते । प्रियमिष्टं सर्वस्य मतिम् अभिमन्तारं मण्डलस्याधिष्ठातारं[4] लोकपालत्वाद्वा ज्ञातारं सर्वस्य कविं मेधाविनम् । ऊर्ध्वा उच्छ्रिता[5] व्यापारवती वा । यथा लोके ऊर्ध्वो भव व्याप्रियस्वेति गम्यते । यस्यामतिरात्ममयी आत्ममननसाधनभूता भा दीप्तिरदिद्युतद् द्योतते । सवीमनि प्रसवे । सप्तमीश्रुतेर्वर्तमान इति शेषः । सवित्रा ह्यनुज्ञाता सतीत्यर्थः । यश्च हिरण्यपाणिर्हिरण्यमिवोज्वला[6] हतक्षणा वा रसभरणा वा रश्मयः पाणिस्थानीया यस्य सः । अमिमीत निर्मिमीते सुक्रतुः सुकर्मा । कृपा स्वस्तया उपकारकल्पनया स्वरादित्यः सवितृ[7]भावविशेषणत्वादात्मप्रकाशमयी ततिर्मतिर्वा अमतिरित्युपपद्यते ।

श्रुष्टी[8] पुरन्धिः इत्येतेऽनवगतेऽनेकार्थे* । श्रुष्टीवरीरित्यर्थः[9] । सुखमभिधेयम् । 'सुखवत्यो भवत' इति वचनात्[10] । रोचंश्रुषिरिति[11] च । इह तु क्षिप्रनाम निगमपदान्तरसम्बन्धसामर्थ्याद् गम्यते । तेनानेकार्थत्वमपि[12] । आश्वष्टीत्यवगमः[13] । पुरन्धिरित्यस्य पुरन्धीरिति[14] वा पुरं दारयतीति[15] वा । अनेकार्थत्वं[16] तु विचारपुरस्सरं भाष्ये दर्शयिष्यते उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
द्वादशः खण्डः[17] । ]

———

१–नुज्ञानाति C.
२–रमणीयां B.  ३–मतीः B.
४–'ल' इति त्रुटितम् C.
५–ऊर्ध्वमुछ्रिता B.
६–मिवोज्वाला B. '०वोज्ज्वला' इत्युचितम् ।
७–धवित्र C.  ८–श्रुष्टि C.  *'०ते अनवगते अने०' इत्युचितम् ।  ९–श्रुष्टिवरी B. C.
१०–सुखवनी भतनिर्वचनात् B. C.
११–अयं सन्दिग्ध इव पाठः।
१२–नेकार्थं B. नेकार्थां C.
१३–अश्वष्टी B. अश्वष्टी C.
१४–पुरधीरिति B. C.
१५–पुरं दायतीति B., पुरं दरायतीति C.
१६–अनेकार्थं तु B. C.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ त्रयोदशः खण्डः । ][1]

ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभि सन्ति देवाः ।
ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम्[2] ॥

वसिष्ठस्य । हिशब्दो यस्मादर्थे यस्मात्ते यज्ञेषु यज्ञियासो यज्ञार्हाः[3] । ऊमाः अवितारोऽवनीयास्तर्पणीयाः । सधस्थं[4] सधं स्थीयते यत्र तत्स्थानं[5] वेद्याख्यम् । सधस्थम्[6] 'सध माद-स्थयोः' इति[7] सहस्य सधादेशः । अभि सन्ति[8] अभिभवन्ति[9] । के ते ? विश्वे सर्वे देवाः । यस्मादिति श्रुतेस्तस्मादित्यध्याहारः । तस्मात् तान् अध्वरे यज्ञे उशतः कामयमानान् यक्षि यजामहे । अग्ने श्रुष्टी[10] क्षिप्रं भगं नासत्या नासत्यौ चाश्विनौ पुरन्धिं च[11] ।

निगमप्रसक्तं निराह सत्यावेवेत्यादि । द्वौ प्रतिषेधौ[12] प्रकृतमर्थं गमयतः, अविसंवादकावित्यर्थः[13] । और्णवाभो[14] मन्यते । नित्यपक्षे नित्यं प्रागुषसो दर्शनात् सत्यस्याविसंवादिनो-[15]ऽर्थस्य प्रणेतारौ । तस्मिन् हि काले मनसः प्रसादः । स्वविपरीतं वसु प्रतिपातीति[16] । तथा चोक्तम् 'ब्राह्मे मुहूर्त उत्तिष्ठेत्'[17] इत्यादि । सत्यशब्दान्नयतेश्च नासत्यौ इत्याग्रायणो[18] मन्यते । नासिकाप्रभवौ[19] वित्यैतिहासिकाः । नासिकाशब्दात् प्रभवार्थेऽपि[20] नसादेशो[21] द्रष्टव्यः । नासिकातः प्रतिलब्धः सन् तत्कापीत्याख्यातं[22] पुराणार्थत्वादेभ्य आगन्तव्यम् । पुरन्धीति धीशब्दस्य[23] धीकर्मसु पठित्वाद् बहुकर्मा बहुप्रज्ञो वोच्यते । अतोऽसंविज्ञानपदत्वाभावाद् गुणपदत्वे सति प्रकृतस्यैव कस्यचिद्[24] गुणपदमाहोस्विद् अपूर्वस्येति सन्देहाद् विचारार्थः

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।
२–[ ऋ० ७।३९।४ ] 'ते हि यज्ञेषु' इत्येव प्रतीकम् B. C.
३–यज्ञियार्हाः C. ४–सधस्थः B.
५–यत्रन्तत्स्थानं वेदाख्यं C.
६–'सधस्थं' इति नास्ति B.
७–[ पा० ६।३।९६ ]
८–सनस्य B. C.
९–सदभिसन्धि तु B. तभि सन्धिन्ति C.
१०–अग्नेः श्रुष्टि B. अग्ने श्रुष्टि C.
११–पुरन्धिश्च B. C.
१२–वौ प्रतिषिद्धौ B. C.
१३–दका इत्यर्थः B. C. १४–वाहो मन्य B. C.
१५–स्यापि संविदिनो B. C.
१६–अयं पाठः सन्दिग्धः ।
१७–'ब्राह्मे मुहूर्ते बुध्येत' [ मनु० ४।९२ ]
१८–नासभ्या ( त्या C. ) प्रयणो B. C.
१९–प्रभवः विद्येति नासिका हासिका B. प्रभवः विद्येति हासिका C.
२०–अयं पाठः सन्दिग्धः ।
२१–नासादेयेशा C.
२२–सत् तत्कावितार्ख्यानं C. तत्कापीत्यादिरपि पाठः सन्दिग्ध एव ।
२३–धीरशब्दस्य C.
२४–'कस्यचित्' इति नास्ति B.

प्रश्नः । तदिति वाक्योपन्यासार्थः । कोऽयं पुरन्धिर्नाम । भगः पुरस्तादित्यादि । आभिनेन सत्यप्यानन्तर्ये द्विवचनान्तत्वात् सम्बन्धानुपपत्तेर्भागस्यान्वादेशोदिह मन इत्यकर्मता । सधेरयं सम्बन्ध इत्युक्तम् । सामर्थ्यादप्रकृतेनापि सम्बन्धो भवतीत्याह इन्द्र इत्यपरम् । तत्सामर्थ्यं दर्शयति देवराजत्वादतिशयेनासौ प्रकृष्टश्च बहुकर्मा । व्युत्पत्त्यन्तरसामर्थ्याद्वा । पुरामसुरसम्बन्धिनीनामतिशयेन दारयिता इन्द्रः । 'पूर्भि भातिरत्' इति मन्त्रान्तरे दर्शनसामर्थ्यात् ।

वरुण इत्यपरं दर्शनम् । धीशब्दोऽत्र प्रज्ञावचनं दर्शयति । यस्मात् प्रज्ञया गुणेन स्तौमि मन्त्रो वा मन्त्रदृग्वा अत्रिः ।

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्रा न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥

ऊमाम् । ऊनु पादपूरणे । कवितमस्य अतिशयेन मेधाविनो मायां प्रज्ञां महीं महतीं देवस्य वरुणस्य समुद्राधिपतेः । नकिः कश्चिदपि आदधर्ष आधर्षति अभिभवति । एकं सन्तं यदुद्रा उदकेन न पृणन्ति न पूरयन्ति । एनीः 'इण् गतौ' इत्यस्यैतद्रूपम् । एतशब्दस्य वा शुक्लपर्यायस्य 'वर्णादनुदात्तात्' इत्येवमीकारः । व्यत्ययेन द्वितीया प्रथमार्थे । एन्यो गमनस्वभावाः शुक्लवर्णा वा । अधोभिगमनस्वभावाः शुक्लोदकवर्णस्वभावत्वात् शुक्लवर्णाः । आसिञ्चतीराभिमुख्येन सिञ्चन्त्यः पूरयन्त्य इत्यर्थः । अवनयः नदीनामेदम् । गङ्गाद्या नद्यः समुद्रमुदधिम् । गङ्गाद्या हि नद्यः प्रभूतेन स्वेन स्वेनोदकेन सततमापूरयन्त्यस्तत्समुद्रं जलादूं धारयन्ति । सैषा वरुणस्य माया एताश्चास्य न कश्चिदभिभवति ।

रुशदित्यनवगतम् । वर्णविशेषो ज्वलनाविर्भूतप्रकाशरूपोऽभिधेयः । रोचतेरिति धातुनिर्देशात् । रुगिति वा विरोचन इति वावगमः । उदाहरणम्—

---

१—देशोभिहमनमित्येकर्मतं C.
२—कत्युक्तम् C.
३—पूर्भि दाति मन्त्रान्तरे B. [
४—प्रज्ञारूपमर्थमित्यर्थः ।
५—प्रज्ञाया गुणेन स्तौति C.
६—अतिः B. अति C.
७—[ ऋ० ५।८५।६ ] 'इमामू नु' इत्येव प्रतीकम् B. C.
८—पदपूरणौ C.
९—न किं B.
१०-आदिधर्ष अधर्ष C.
११—यदुत्ता B. C.
१२—एतीः B. C,
१३—[ धा० २।३५ ]
१४—[ पा० ४।१।३९ ]
१५—नमिकारः B. न्येन विकारः C.
१६—दध्योभिगमन C.
१७—'त्' इति त्रुटितम् B. C.
१८—मायां B.
१९—'ज्वल' इति त्रुटितम् C.

अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निरमोचि ॥[1]

बुधगविष्ठिरयोरार्षम् । अबोधि बुध्यति होता[2] 'अग्निर्देवो होता'[3] इति श्रुतेर्होताग्निः । मानुषस्तु तदधिष्ठितो होत्रं करोति, अतः स होतेत्युच्यते । अथवा होतृशब्दोऽत्र तृन्प्रत्ययान्तः क्रियाशब्दः । साधुकारिणि च तृन्प्रत्ययः, साधु होमस्य कर्ता । यजथाय यजनाय देवान् अग्निहोत्रादिना होमेन यागेन च देवान् यष्टुमित्यर्थः । बुध्वा च ऊर्ध्व ऊर्ध्वज्वालोऽग्निः सुमनाः सुचित्तो होमकारिणामनुग्रहपरचित्त इत्यर्थः । प्रातः प्रत्यूषस्यैव उषस उदयवेलायामस्थात् तिष्ठति ज्वालामालैः[4] सन्नित्यर्थः । समिद्धस्य रुशद् दीप्तवर्णम् अदर्शि दृश्यते । पाजो बलं[5] ज्वालासमूहलक्षणं तेन[6] च महान् देवस्तमसः[7] सकाशाद् निरमोचि निर्मोचयति प्रकाशयतीत्यर्थः ।

रिशादस इत्यनवगतम् । रिशतेर्हिंसार्थस्य शुद्धस्य ण्यन्तस्य वा स्यतेश्चैतद् द्विधातुजं रूपम् । रिशतां हिंसतां[8] रेशयतां वा घ्नतां घातयतां वा शत्रूणामसितारः क्षेप्तारो नाशयितार इत्यर्थः । तेन रिशदसितारो[9] रेशयदसितार इति वावगमः[10] । उदाहरणम्— ।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
त्रयोदशः खण्डः[11] ]

---

१–[ ऋ० ५।१।२ ] 'अबोधि होता' इत्येव प्रतीकम् B. C.

२–नोता C.

३–'अग्निर्वै देवानां होता [ ऐ० ब्रा० १।२८ ]' इति पाठो युक्तः।

४–ज्वाला माला: C

५–वाजं B. C.

६–केन च B. C.

७–'स' इति त्रुटितम् B. C.

८–रिशेतां हिंसन्तां B.

९–रदसितारो B.

१०–'वावगमः' इत्यनन्तरं B. पुस्तके 'पार्श्वे' इति, C. पुस्तके च 'पांश्व' इति पाठोऽधिकः ।

११–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [अथ चतुर्दशः खण्डः।][1]

अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम्।
प्र णः पूर्वस्मै सुविताय वोचत मक्षु सुम्नाय नव्यसे ॥[2]

मनोर्वैवस्वतस्यार्षम्। हि शब्दो यस्मादर्थे यस्माद् अस्ति वो युष्माकं सजात्यं सजातिना अस्माभिः सह परस्परोपकारलक्षणा 'इत उपजीवन्त्यमुतो[3] मनुष्यः' इति श्रुतेः। रिशादसो[4] हे रिशतां रेशयतां वा घ्नतां घातयतां वा शत्रूणामसितारः क्षेप्तारो निरसितारो देवासो[5] देवाः। अस्ति च आप्यम् आप्तित्वमाप्तिर्ज्ञातिरुच्यते। यष्टृयष्टव्यत्वलक्षणामित्यर्थः। प्रवोचत[6] प्रब्रूत मक्षु क्षिप्रं सुम्नाय सुखाय। अथवा आप्यमाप्तव्यं यस्माद् युष्माभिर्युष्मत्तः। यस्मादिति श्रुतेस्तस्मादित्यध्याहारः। तस्माच्छब्दोऽवोचतेत्यनेन सम्बध्यते। नोऽस्मान् पूर्वस्मै सुविताय सुगताय। किं पुनस्तत्? सामर्थ्यात् स्थानं स्वर्गाख्यं तस्मै प्रयाणोत्तरकालं[7] तत् प्राप्तुमित्यर्थः। प्रब्रूत मक्षु क्षिप्रं सुम्नाय सुखाय च नव्यसे[8] अतिशयेन नवाय।

सुदत्र इत्यनवगतम्। सुपूर्वस्य ददातेः ष्ट्रन् द्रष्टव्यः। सुदान इत्यवगमः। कल्याणदान[9] इति पर्यायवचनम्। उदाहरणम्—

ता नो रासन् रातिषाचो वसून्या रोदसी वरुणानी शृणोतु।
वरूत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो वि दधातु रायः ॥[11]

वसिष्ठस्य। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यानि वयमर्थितवन्तस्तानि। नोऽस्मभ्यं[12] पूर्वेषु कालेषु रासन् रासतेर्दानकर्मणो लङि अडभावश्छान्दसत्वात्, अरासन् दत्तवत्यः। रातिषाचो हविषो दानं रातिस्तां याः सचन्ते। अथवा रातिषाचो हविर्दानस्य सेवित्र्य इत्यर्थः। वसूनि धनानि। यत एवमतो ब्रवीमि इदानीमपि आकारः शृणोतु[13] इत्यनेन[14] सम्बध्यते, रोदसी द्यावापृथिव्यौ वरुणानी च आशृणोतु। आश्रवः प्रतिज्ञा अतिदास्याम इति प्रतिजानन्तु अभ्युपगच्छन्त्वित्यर्थः[15]। किञ्च वरूत्रीभिर्[16]वरयितव्याभि[17]रेताभि[18]र्देवीभिः

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भानिर्देशो न दृश्यते।
२–[ ऋ० ८।२७।१० ] 'अस्ति हि वः' इत्येव प्रतीकम् B. C.
३–[ अनुपलब्धमूलमिदम् ] वन्त्यमृतो B.
४–रिनशादसः C. ५–'देवासः' इति नास्ति B.C.
६–'प्रवोचत' इति नास्ति B. C.
७–' प्रयाणकालं ' इत्येव B.
८–' नव्यसे ' इति नास्ति B. C.
९–' द ' इति त्रुटितम् C.
१०–दायेति B. दाय इति C.
११–[ ऋ० ७।३४।२२ ] ' ता नो रासन् ' इत्येव प्रतीकम् B. C.
१२–तत् B. तः C. १३–शृणोति B.
१४–इत्येन C. १५–गच्छत्वित्यर्थः B. C.
१६–व ( प B. ) रातिभिः B. C.
१७–वा ( पा B. ) रयित B.C. १८भि–दिए:B.C.

सह । सुशरणः साश्रयः । नो॑ऽस्माकमस्तु । कः ? त्वष्टा नाम देवः । कीदृशः ? सुदत्रः सुदानः स्वाश्रयणश्च भूत्वा[2] विदधातु विविधं दधातु[3] रायो धनानि ।

सुविदत्र इत्यनवगतम् । वेत्तेः सुविद्यत इत्यवगमः । प्रशस्तज्ञान इत्यर्थः । महाकल्याणविद्य इति । उदाहरणम्—

ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।
आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः[4] ॥

शङ्खे यामायनस्तस्यार्षम् । ये तातृषुस्तीर्णाः[5] प्राप्ता इत्यर्थः । देवत्रा 'देवमनुष्यपुरुष'[6] इति द्वितीयार्थे त्रा[7], देवान् जेहमाना 'ओहाङ्[8] गतौ' कर्मज्ञानसमुच्चयेन क्रमेण गच्छन्तो देवत्वं क्रमेण प्राप्ता इत्यर्थः । होत्राविदो होत्रे यज्ञानां वेदितारः स्तोमतष्टासस्तक्षतिः[9] करोतिकर्मा स्तोमानां कर्तारः समुच्चयप्रदर्शनं वेदम् । अर्कैर्मन्त्रैः स्तुतिलक्षणैर्नित्यैर्वा हविर्लक्षणै*र्हेतुभूतैः स्तोमानां हविषां च कर्तार इत्यर्थः । पुरस्ताद् यच्छब्दश्रुतेर्योग्यार्थसम्बन्धस्तच्छब्दोऽध्याहार्यः । तैराग्ने याहि सुविदत्रेभिः सुविद्यैः सर्वत्र सहयोगलक्षणा तृतीया, सह । अर्वाङ्[10] अस्मदभिमुखः सत्यैरवितथप्रसादैः कव्यैः पितृदेवत्यं हविः कव्यं तत्सम्बन्धात् कव्यभुजः कव्यात्[11] स्वार्थिको वा यः कवयः[12] कव्यास्तैः कव्यभुग्भिर्मेधाविभिर्वा पितृभिर्घर्मसद्भिर्घर्म इति यज्ञनाम[13] यज्ञसादिभिरित्यर्थः[14] ।

आनुषगित्यनवगतम्[15] । नाम चैतन्निपातः । आनुपूर्वस्यानुषक्तव्यमित्यवगमः[16] । उपर्युपरि लग्नमित्यर्थः । उदाहरणम्—

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा सखा ॥[17]

त्रिशोकस्यार्षम् । आङ् मर्यादायाम् । घ इति पदपूरणः । मर्यादया[18] यथाशास्त्रं[19] ये

---

१–' नः ' इति नास्ति B. C.
२–भूता B.
३–' ध ' इति त्रुटितम् C.
४–[ ऋ० १०।१५।९ ] ' ये तातृषुः (षः C.) ' इत्येव प्रतीकम् B. C.
५–सिर्णाः B. सीर्णाः C.
६–[ पा० ५।४।५६ ] मनुष्येष्विति B. C.
७–त्रा C.
८–[ धा० ३।७ ] दहां गतौ C.
९–स्तोमस्त्वष्टासः B. * 'हविर्लक्ष०' इति युक्तम्
१०–अर्वङ् B. C.
११ ' त् ' इति त्रुटितम् C.
१२–कवय नव कव्याः C.
१३–यज्ञानाम C.
१४–यज्ञजातिभि B.
१५–आनुष इत्यन C.
१६–आङ्पूर्वस्या B.
१७–[ ऋ० ८।४५।१ ] 'आ घा ये' इत्येव प्रतीकम् B. C.
१८–मर्यादाये B.
१९–'यथाशास्त्र ये' इति त्रुटितम् B.

अग्निमिन्धते[1] दीपयन्ति[2] स्तृणन्ति[3] च बर्हिर्वेदिस्तरणान् दर्भान् । आनुषग् आनुपूर्व्येण यागं[4] ये यजन्त इत्यर्थः । येषां च इन्द्रो युवा सर्वदा तरुणः स्तुत्यस्तोतृलक्षणेन सख्येन सखा । यच्छब्दश्रुतेस्तच्छब्दाध्याहारः[5], ते पुण्यवन्त[6] इति शेषः[7] ।

तुर्वणिरित्यनवगतम् । तूर्णशब्द उपपदे[8] वनोतेः सम्भजनार्थस्य[9] इकारो[10] नामकरणः[11] । तूर्णं वनोतीति तूर्णवनिरिति[12] प्राप्ते तुर्वणिः । उदाहरणम्—

स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः ।
येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ॥[13]

इन्द्रस्य सव्यतामापन्नस्येदमार्षम्[14] । इन्द्रस्तुर्वणिस्तूर्णं संभक्ता[15] यष्टॄणाम् । महान्[16] प्रभावतः । अरेणु[17] सप्तम्या अत्र लुग्[18] द्रष्टव्यः, अरेणुनि[19] पांसुवर्जिते पौंस्ये सेनालक्षणे स्वबले सप्तमीश्रुतेः स्थित इति शेषः । स्वसेनामध्यगतः सन्नित्यर्थः । गिरेर्भृष्टिर्न भ्राजते समुच्छ्रितः पर्वतप्रदेशो भृष्टिरुच्यते तद्वद् भ्राजते गिरिशृङ्गमिव सर्वतः समुच्छ्रितो लक्ष्यत इत्यर्थः । तुजा तुजतेर्हिंसार्थस्य । तुग्वज्र[20] इहोच्यते 'इत्थंभूतलक्षणे'[21] तृतीया । अपि भवान् करन्धुना[22] छात्रमद्राक्षीदिति यथा । हिंसित्रा वज्रेण सम्बन्धः, गृहीतवज्रः सन्नित्यर्थः । शवो बल-नामेदम् । अन्तर्नीतमत्वर्थः । इन्द्रस्य वज्रस्य वा विशेषणम् । बलवानिन्द्रो बलवता वज्रेण वा । किं कृतवान् ? उच्यते । येन तृतीयानिर्देशात् हतेति शेषः । शुष्णं शुष्णनामान-मसुरं शोषयितारं वा सस्यानां मेघं मायिनं मायावन्तम् । आयसः इन्द्रस्येदं विशेषणम् । अयोमयो[23] लोहमयो दृढशरीर इत्यर्थः । मदे 'यस्य च भावेन भावलक्षणम्'[24] इत्येतेषां* सप्तमी, तच्छ्रुतेश्च[25] योग्यक्रियापदाध्याहारः कार्यः, सोमपदे प्राप्ते दुध्रो दुर्धरः शत्रूणाम् ।

---

१–अग्निं मन्यते B. अग्निमन्थते C.
२–दीपयति B. C.
३–स्तृणति B. ४–भागा B.
५–'तच्छाब्दाध्याहारः' इति नास्ति B. C.
६–तेपुस्ततवन्तः B.
७–'शेषः । तुर्वणिरित्यनवगतम्' इत्येतावान् पाठस्त्रुटितः B.
८–उपादे B. उपवदे C.
९–'तेः संभजनार्थस्य इकारो' इति पाठस्त्रुटितः B. 'स्य' इति त्रुटितम् C.
१०–'रो' इति त्रुटितम् C.
११–करणम् B. १२–प्राति B. C.
१३–[ऋ० १।५६।३] 'स तुर्वणिः' इत्येव प्रतीकम् B. C. १४–सव्यकामावन्नस्ये C.
१५–तूर्णं संभर्ता B. १६–महा प्राभावतः B.
१७–आरेणु B. १८–लुक् अत्र B.
१९–'अरेणुनि पांसुवर्जिते पौंस्ये' इत्येतावान् पाठस्त्रुटितः B.
२०–तुव्रज B. तुप्रज C. २१–[पा० २।३।२१]
२२–अत्र 'कमण्डलुना' इति पाठो युक्तो भवेत् । काशिकादौ सर्वत्रायमेव पाठ उपलभ्यते ।
२३–अयोमयो C. २४–[पा० २।३।३७]
* 'इत्येतेन' इति पाठः स्यात् ।
२५–'तत्' इति नास्ति B.

आभूषु आकार अभी[1]त्यस्य स्थाने, भूष्विति[2] सन्नन्तम् । द्वयोरपि चानयोर्योऽत्रार्थस्तस्मिन्न-प्रसिद्धरूपत्वाद् अवग्रहस्य सिद्धार्थावयवप्रदर्शनार्थत्वात् पदकारेणात्राऽवग्रहो न कृतः । व्यत्ययेन च नपुंसकता । शुष्णस्येदं विशेषणम् । अभिभूषुं शुष्णमिन्द्रं प्रत्यभिभवितु-मिच्छन्तमित्यर्थः । रामयन्निरमयन्[3] नियमेन रमितवान् । एक[4]स्मिन्नेव प्रदेशे बद्ध[5]वानित्यर्थः । क्व ? दामनि । मेघपक्षे दामनीति लुप्तोपमं द्रष्टव्यम् । दामनीव[6] वत्सकं करभं[7] वा ।

गिर्वणा[8] इत्यनवगतम् । देवोऽभिधेयवचनः । चतुर्थ्यन्तत्वेन सारूप्यात् । गिर्वणां[9] देवं[10] इत्येतेना[11]र्थमुक्त्वाह गीर्भिरेनं वनयन्तीत्य[12]र्थनिर्वचनम् । भाजयति सेवयति स्थापयतीत्यर्थः । गीर्वा[13]ण इत्यवगमः । तथा अभिधानकोशकारै[14]: पठति 'गीर्वाणाः स्युर्दिवौकसः[15]' इति ।

> आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।
> घर्मं न सामन् तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥[16]

नृमेध[17]:प्रियमेधसोरार्षम् । आमासु पक्वमित्यामत्वेन पक्वत्वेन चात्र भोजनस्यायोग्यासु गोषु पक्वं भोजनयोग्यं पय ऐरयस्त्वमीरित[18]वान् ईरयसि वा गमयसि वृष्टिद्वारेण ओषधि-निर्वाल्या जनै[19]सि जनितवांश्चेत्यर्थः । यागनिर्वृत्त्या च[20] सूर्यमारोहयसि आरोहितवान् वा । दिवि द्युलोके योऽयमीदृशगुण इन्द्रस्तस्मै । घर्मं[21] न घर्मशब्देनात्र महावीर उच्यते, महावीर-मिव तपता[22] तपतिरन्तर्नीतण्यर्थः, ऋ[23]त्विजस्तापयति । किम् ? सामन् सोमो[24] धूपयतेत्यर्थः । तद्धि सामतापनं सुवृक्तिभिः सुष्ठु वर्जिताभिर्दोषै[25]: प्रवृत्तिभिः स्थानकरणादिना सम्यगुच्चा-रयत । त[26]देवोपन्यस्यति विचारणार्थम् ।

---

१—आदित्यस्य B. 'आकारः अभी०' इति, 'आकारोऽभी०' इति वा युक्तम् ।
२—हूष्विति C.   ३—रमय हिमेन रमतिवान् B.
४—एतस्मिन्ने C.   ५—बन्धवानि C.
६—दामनीति B.
७—करभक्ष वा B. C.
८—गीर्वाण C.   ९—गीर्वाण C.
१०—'देव' इति नास्ति B. C.
११—तेनाक उक्त्वा B. C.
१२· त्यर्थः निर्व B. C.
१३—गिर्वाण B.   १४—कोशतारः C.
१५—[ अनुपलब्धमूलमिदम् ] गीर्वाणा स्याद्दिवौकसः B. गीर्वाण स्याद्दिवौक C.
१६—[ऋ० ८।८९।७] 'आमासु पक्वम्' इत्येव प्रतीकम् B. C.
१७—नृमेधपुरुष (नास्ति B.) मेधयोरार्षम् B. C.
१८—त्वमीरयात् B.
१९—अयं पाठः सन्दिग्धः ।
२०—'च' इति नास्ति B.
२१—'घर्मं न' इति त्रुटितम् C.
२२—'त्रयता' इति नास्ति B. तपन् C.
२३—न ऋत्वि C. तापयतीत्यत्र सन्दिह्यते ।
२४—समो C. अत्र 'साम' इति युक्तं स्यात् ।
२५—ताहिर्दोषैः C.
२६—मेवोपन्य B. C. अत्र कश्चन पाठस्त्रुटित इति प्रतीयते ।

असूर्ते सूर्ते रजसि निषत्ते एतानि चत्वारि पदानि सप्तम्यन्ततया सन्दिह्यन्ते। तत्र रजसीति पदान्तरसम्बन्धसामर्थ्याद् रजःशब्दो लोकवचनः। तत एतत्तावदसन्दिग्धमन्तरिक्षलोकस्याधारत्वेन सम्बन्धोपपत्तेः सप्तम्यन्तम्। सूर्ते इत्यपि तत्सामानाधिकरण्येन सम्बन्धभावात्[1] सप्तम्यन्तमेव। यतः 'ईर गतौ'[2] इत्यस्य सुपूर्वस्य निष्ठायां छान्दसत्वादिडभावे ईकारस्य पूर्वसवर्णे सप्तम्यामेतद् रूपम्। रजसो[4] विशेषणम्। अधिकरणस्य चाधेयसव्यपेक्षत्वादसूर्ते इत्याधेयप्रतिनिर्देशः। आधेयस्य प्रतिनिर्देशसामर्थ्याच्च अव्यतिरिक्त[5]प्रातिपदिकार्थे[3][6] प्रथमान्ततैव[7]। ततश्चासु[8]शब्दपूर्वस्य तस्यैव धातोस्त[9]द्वदेव छान्दसत्वात् प्रथमा। एकार[10] आदेशो द्रष्टव्यः। निषत्ते[11] इत्यप्याधेयविशेषणम्। 'नसत्त निषत्तानुत्त[12]' इति निपातना[13]द् नत्वाभाव एकारादेशश्च पूर्ववत्[14]। ततश्च असु[15]वीरिता स्वीरितेत्यवगमौ। असुः प्राणः प्राणश्च वायु[16]ः। तत्स्पष्टतरं भाष्यकार आह सुसमीरिते[17]स्वसमीरिते। असुसमीरिता[18] इत्यस्य व्याख्यानं वात[19]समीरिता इति। मरुदादयोऽभिधेयाः। सुसमीरिते सुष्ठु प्रेरिते विस्तीर्णे अन्तरिक्षलोक इत्यर्थः। उदाहरणम्—

[ इत्येकादशस्या- ( -षष्ठस्या- ) -ध्यायस्य
चतुर्दश[20]ः खण्डः। ]

———

१—सम्बन्धाभात्रात् B. C.

२—[धा० २।८]

३—निष्ठायाश्छान्द B.

४—रजन्यो B.

५—अत्र 'प्रातिरिक्त' इत्याधिकः पाठः C.

६—कार्थप्रथ B. C.

७—मान्ततेव B. C.

८—ततश्चासु B.

९—धानेतस्तद्व C.

१०—विकार C.

११—निषक्ते इत्यव्याधेय C.

१२ [पा० ८।२।६१] नसक्तनिषक्तानुक्त C.

१३—निपाकनात् C.

१४—पूर्वसत् B.

१५—अरिरिता रिरितेत्यव B.

१६—'युः' इति त्रुटितम् B. C.

१७—समितित स्व C. भाष्ये तु 'असुसमीरिताः सुसमीरिते' इत्येवं पाठः।

१८—समिरिता C.

१९—पातसमी B.

२०—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ पञ्चदशः खण्डः ][1]

त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥[2]

भौवनस्य विश्वकर्मणः । ते आङ् मर्यादायाम् । यजिर्दानार्थः । आयजन्त मर्यादया यत्र यावच्च दातव्यं तदा तत्र तावदेवेत्यर्थः, ददति । किम् ? द्रविणं वृष्ट्युदकाख्यं धनम् । समस्मै सम्यगस्मै लोकायेति शेषः । ऋषय औपरिष्टो नकार इहापकृष्टव्यः, ऋषयो न ऋषय इव यथा ऋषयः पूर्वे भृग्वादयः[3] । जरितारः स्तोतारो भूना भूम्ना स्वमाहात्म्येन देवेभ्यो हवींषीति शेषः । यथा ते हवींषि दत्तवन्तस्तद्वदित्यर्थः । अथवा ऋषयः पूर्वे जरितार इति विश्वसृज उच्यन्ते । भूतानि[4] समकृण्वन् इत्येतस्य वेदमुपमानम् । यथा विश्वसृजः[5] सृष्टिकाले स्वमाहात्म्येन भूतानि समकृण्वन् सम्यक् कृतवन्तस्तद्वत् । असूर्ते असुः प्राणः स च वायुः । कुत एतत् ? 'अयं वै वायुः पवते[6] प्राणः' इति श्रुतेः । तेन प्रेरिता मरुदादयः सूर्ते[7] सुष्ठु प्रेरिते विस्तीर्ण इत्यर्थः । रजसि लोके अन्तरिक्षाख्ये निषत्ते[8] निषण्णा ये वृष्टिप्रदानद्वारेण भूतानि सम्यक् कृतवन्तः इमानि सर्वाणि स्थावरजङ्गमानि । भाष्ये च 'ये रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति' इति पाठः । ये भूतानि कुर्वन्ति त आयजन्तेत्याद्येन पादेन प्रतिवचनमित्यर्थः । प्रदर्शनं चेदम् । अन्यत्राप्येवंभूतस्यासम्बन्धस्य[9] पाठक्रमो न तन्त्रमिति ।

अम्यक्[10] इत्यनवगतम् । अमाक्तेत्यवगमः । [11]अश्नेरकारो शब्दस्यामवचनस्यादौ द्रष्टव्यः । अमाक्ता सती[12] अम्यक् अभ्यक्तेति[13] वा अभिपूर्वस्याञ्चतेरभ्यक्ता भकारस्य[14] मकारापत्त्या अम्यक् । नित्यं[15] शत्रून् प्रत्यभिगन्ता[16] शत्रुशरीरलग्नेव दृश्यत इत्यर्थः । आयुधाख्या शक्तिरभिधेया । उदाहरणम्—

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२—[ऋ० १०।८२।४] 'त आयजन्त' इत्येव प्रतीकम् B. C.

३—भृयदेयः B. भृयादयं C.

४—'भूतानि' इति द्विर्लिखितम् B. C.

५—'श्व' इति त्रुटितम् C.

६—अयमेतदानुपूर्वीकः पाठः कुत्रत्य इति न ज्ञायते । 'अथ यः स प्राणोऽयमेव स वायुर्योऽयं पवते' [श० ब्रा० १०।३।३।७] पवन्ते C. अतं वै वायुः पवन्ते प्राणम् B.

७—असूर्ते B. C.

८—निषक्ते C.

९—न्धस्यापाठ C.

१०—आव्यक् C.

११—अस्य वाक्यस्य पाठः सन्दिग्धः

१२—सति अप्यक् B. अव्यक् C.

१३—अव्यक्तेति वा B. C.

१४—कारमकारपत्या B. रामकारापत्या C.

१५—नीत्यं B. C.

१६—'०भिगता' इति युक्तं स्यात् ।

अम्यक्सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति ।
अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि ॥[1]

अगस्त्यस्यार्षम् । तच्छब्दश्रुतेर्यच्छब्दोऽम्यगित्येतत्सम्बन्धी अध्याहार्यः । यां क्षिप्तां सतीम् अम्यक् यां प्रतीयं गता यां प्रतीत्येवं सर्वत्र शत्रवो मन्यन्ते । या वा नित्यं शत्रून् प्रत्यभिगता सहभूता वा ते तव स्वभूता हे इन्द्र ऋष्टिः शक्तिर्वा[2] आयुधविशेषः । अस्मे[3] अस्मान् प्रति सनेमि पुराणनामैतत् पुराणं वर्षो [4]पीतम् । अभ्वमि[5]त्युदकनाम, वृष्ट्युदकं मरुतो मरुतश्च जुनन्ति[6] 'जुन गतौ[7]' सामर्थ्याच्चान्तर्नीतण्यर्थो द्रष्टव्यः, गमयन्ति[8] । किञ्च अग्निश्चित् चिदुपमायां हिस्मौ पादपूरणौ, अग्निरिव यथा अग्निरतसे शुष्के काष्ठे दीप्यते तद्वत् त्वं[9] शुशुक्वान् वैद्युतात्मना दीप्यत इत्यर्थः । किञ्च आपो न आप इव यथा च नापेया आपो द्वीपं मध्यस्थस्थलम्, एवं सर्वतस्त्वं परिवार्य दधति[10] धारयति । प्रयांसि उदकनामैतत् उदकानि मेघहननकाले ।

यादृश्मिन् इत्यनवगतम् । यादृश[11] इत्यवगमः । उदाहरणम्—

ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते ।
यादृश्मिन् धायि तमपस्यया विदत् य उ स्वयं वहते सो अरं करत् ॥[12]

अवत्सार[13]स्यार्षम् । आदित्यस्वरूपेण अग्निरूपेण चोच्यते । अत्र चैकवाक्य*प्रसिद्ध्यर्थं यत्तच्छब्दा[14]वध्याहार्यौ । यं सर्वतो ज्यायांसमतिशयेन प्रशस्यं वृद्धं वा महान्तं[15]-मादित्यमग्निं वा अस्य यतुनस्य[16] यततिर्गत्यर्थः, गमनशीलस्य तव[17] स्वभूतमण्डलस्य[18] यदा[19] त्वमग्निस्तदास्य यतुन[19]स्यादित्यस्यैव केतुना[20] कर्मणोदयलक्षणेन आदित्यमण्डलस्यैवोदय-वेलायामुदितमात्रे[21] मण्डले ऋषिस्वरं[22] स्वरतीत्यर्चतिकर्मा ऋषिस्तुत्यम् । चरतिरत्र शुद्धोऽपि

---

१—[ऋ० १।१६९।३] 'अम्यक् सा ते' इत्येव प्रतीकम् B. C.
२—शक्ति वा C.
३—अस्मै B. C.
४—अत्रायं पाठः सन्दिग्धः ।
५—अम्बुव मि B. अह्वमि C.
६—अटन्ति B. C.
७—[धा० ६।४५] ज्युन B.
८—किमयन्ति ( ति C. ) B. C.
९—'त्वं' इति नास्ति B.
१०—अन्यकर्तृकेऽपि क्रियापदे सति मध्यमपुरुष-मेवात्र प्रयुङ्क्ते व्याख्याकारः । अयं च क्रमो- [illegible]

११—यादृश्य C.
१२—[ऋ० ५।४४।८] 'ज्यायांसम्' इत्येव प्रतीकम् B.C.
१३—अवर्णसार C. 'आर्षम्' इति नास्ति B.
*'०वाक्यताप्र०' इत्युचितम् ।
१४—अच्छावध्या C.
१५—महान्तं मात्येम B. न्तमात्येमग्निवो C.
१६—यतुसनस्य यततिर्ग B.
१७—तल C.
१८—स्वभूतं मण्ड B.
१४—यदास्त्वग्निस्तदा C.
१५—वतुमस्या B. C.
१६—'केतुना कर्मणा' इति नास्ति B.
[illegible]

सोपसर्गार्थो द्रष्टव्यः। आहुतिप्रदानकर्मणोपस्थानं परिचरति यास्वग्निहोत्रहोमोपस्थान-यागादिक्रियासु देवताभूतस्य स्तूयमानस्य नाम अभिधानं ते तव। नमनं वा प्रह्वीभाव-मार्गत्यं तव तासु त्वमिज्यसे चेत्यर्थः। यादृश्मिन् यादृश एव कामे धायि व्यत्ययेनायं कर्तरि चिण् द्रष्टव्यः, धत्ते। किम्? सामर्थ्यान् मनः। यादृश्मिन् इत्युद्देशाद् उद्दिष्टस्य च प्रति-निर्देष्टव्यत्वात् तादृक्शब्दस्यार्थे तादृशमेव। अपस्यया अपः कर्म अप एव अपस्या स्वार्थिक-स्तद्धितः, तया अपस्यया तेन परिचारेण कर्मणेत्यर्थः। विदद् विदेर्लाभार्थस्येदम्। विन्दति लभते यः। उकारोऽत्र चार्थे, यश्च स्वयमेव श्रद्धया न परेण प्रेरितः सन् वहते त्वां प्रति प्रापयति। किम्? सामर्थ्यादाहुतीः स्तुतीश्च सोऽलं पर्याप्तं बह्वात्मनः करत् करोति नेतरः।

जारयायीत्यनवगतम्। उस्रेविशेषणम्। तेन व्यत्ययेन नपुंसकतात्रानवगमः। तत-श्चेदं नाम्नाख्यातम्। जनेरन्यस्य वा धातोरेवंभूतस्य सम्भवाद् निर्धातप्रसङ्गतश्च। अन्ये तु जनेरत्यन्तानवगतमाख्यातमेतदिति मन्यन्ते। ततश्च जारयायि अजायतेत्यवगमः। उदाहरणम्—

सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः।
द्रवन्नो वन्वन् क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः॥[16]

भरद्वाजस्य। स आस्माकेभिरस्मदीयैः पुत्रपौत्रादिभिर्ऋग्भिर्वा। एतरी न एताऽत्र सततगामित्वादतिथिरुच्यते। प्रथमार्थे चेयं सप्तमी, गन्तेव सततगामीव अतिथिर्गृहस्थैः शूषैः शूषमिति सुखनाम सुखैः सुखहेतुभिः। कैः? सामर्थ्यात् स्तोत्रैः। अग्निः स्तवे व्यत्य-येनेदं कर्मणि प्रथमैकवचनस्य स्थाने उत्तमैकवचनं द्रष्टव्यम्, स्तूयते। दमे यज्ञे तद्गृहे आकारः स्तवे इत्येतेन सम्बध्यते, आभिमुख्येन मर्यादया वा यथाशास्त्रं स्तूयते। जातवेदाः

१—प्रददत कर्म B. C.
२—णोऽवस्थानात् B.
३—योगादि B. C.
४—'भूत' इति द्विर्लिखितम् C. 'भूता' इति B.
५—स्तूयमानमभिधानम् B.
६—इदं पदं सन्दिग्धम्।
७—यया य ( थ C. ) स्मिन् B. C.
८—त्मन B.  ९—यादृश्मिन B.
१०—'तू ता' इति त्रुटितम् C.
११—विदन् विन्मतोर्लभा B.
१२—लभन्ते B. C.
१३—नेतरौ जरया B.
१४—प्रविशे C.
१५—अत्र 'निघात' इति स्यात्।
१६—[ ऋ० ६।१२।४ ] 'सास्माकेभिः' इत्येव प्रतीकम् B. C.
१७—भारद्वाजस्य B. C.
१८—'ग्भि' इति त्रुटितम् C.
१९—हे B. तहे C. 'तद्गृ' इति B. पुस्तके 'दृगृ' इति च C. पुस्तके त्रुटितम्।
२०—स्तन्व B. स्तव C.
२१—'स्तू' इति त्रुटितम् B. C.

जातविद्यो जातधनो वा। द्रवन्न[1]: काष्ठान्नः काष्ठभक्ष इत्यर्थः । वन्वन् कृत्वा नार्वा वन्वन्निति 'वन षण संभक्तौ'[2] इत्यस्य रूपम् । कृत्वेति कर्मनाम, अर्वेत्यश्वनाम । कर्मणे[3] शीघ्रगमन-लक्षणेन संभज्यमानोऽश्वः[4] शीघ्रं गच्छन् स्तूयते[5] तद्वदित्यर्थः। उस्रः पितेव उपमानान्तरं चे[6]दम् । उस्र इति गोनाम यथा च गौर्बलीवर्दः पिता गोपयिता स्वापत्यानां पालयिता वा स्वकर्मणा स्तूयते तद्वत् । समानप्रकरणेन च निर्गतादँय[7] इष्यते तद्भिन्नवाक्यत्वं कथमिति चेत् ? उच्यते । आस्माकेभिँ[8]रिति स्तूयते अश्ववदातिथिवद्[9] बलीवर्दवेच्चाति[10] एता-वत्येव परिसमाप्तं वाक्यम् । इदन्तु वाक्यान्तरं जारयायि[11] यज्ञैरिति । अजायँत[12] जायते अग्नि-राहवनीयात्मना यज्ञेषु यज्ञैर्वा सहेति ।

अग्रियेत्यनवगतम् । अग्रगमनेनेत्यवगमः । अर्हार्थो वा अग्राहीँ[13] अग्रिया इत्यवगमः । अथवा अग्रमित्येतच्छब्दरूपमनर्थकमुपबन्धं[14] प्रत्ययान्तमाददीत अग्रमेवाग्रिया[15] आहुता इत्यर्थः। उदाहरणम्—।

[ इत्येकादशास्या- ( षष्ठस्या- ) ध्यायस्य
पञ्चदशः खण्डः ][16]

---

१–द्रवण: B. द्रवन्न: C.

२–[धा० १।४६४,४६५]

३–कर्मणैव C.

४–मानोऽश्वाः B.   ५–श्रूयते B.

६–चके B. वते C.

७–सन्दिग्धमिदं पदम् ।

८–केऽपि हि नि स्तू B. के हि नि C.

९–अत्रौ ( त्रि C. ) थवत् B.

१०–चेत् तावत्येव B.

११–'यि' इति त्रुटितम् B.

१२–'जायत' इति द्विर्लिखितम् C.

१३–अग्राहाः B. C.

१४–अनर्थान्तरमिवबन्धं ( द्धं C. ) B. C.

१५–अग्रियदावाग्रिया: B. अग्रिया एवाग्रियाः C.

१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ षोडशः खण्डः ][1]

अयं वो' यज्ञः ऋभवोऽकारि यमा मनुष्वत् प्रदिवो दधिध्वे ।
प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः[2] ॥

वामदेवस्य । अयं वो युष्माकं यज्ञः[3] हे ऋभवः, ऋभुप्रभृतयः, अकारि कृतोऽस्माभिः । यम्[4] आकारो दधिध्व इत्येतेन सम्बध्यते, मर्यादया मनुष्वत्[5] मनुष्यवत् प्रदिवः पुराणनामैतत्, पुराणम् अस्मत्पूर्वैरपि कृतपूर्वम् आदधिध्वे मर्यादया आत्मनि धारयथ अनुभवथेत्यर्थः । किञ्च वो युष्मदर्थमित्यर्थः । अच्छा भरार्थे[6] । अस्थुरित्येतेन[7] च अभिप्रशब्दयोः सम्बन्धः । अभिप्रास्थुः अभिप्रस्थितानि । कानि ? सामर्थ्यात् हवींषि तानि जुजुषाणासः[8] सेवमानाः । अभूत[9] लोडर्थे लुङ्, भवतेत्यर्थः[10] । विश्वे सर्वे अग्रिया अग्रयानेनाग्रोर्हा[11] अग्रभूना वो[12] यूयम् उत हे[13] वाजा ऋभु-विभ्वा भर्जे[14] इत्येते त्रयोऽन्येन[15] चान्त्येन चोपलाक्षिता[16] उच्यन्ते । जोषयमाणा भवत । अर्हा-र्चितां सम्पादितां[17] ति ये ह्यग्रमर्हन्ति ते सम्पद्यन्तेऽग्रियाः ।

चन इत्यनवगतम् । अन्नमभिधेयम् । पचता इत्युभयं चेदं पचेर्धातोः[18] । अत आह पचतिर्नामीभूत[19] इति । तत्र चन इति पचेरेव[20] दूरं विकृतं पच्यमानत्वात् पचनमिति[21] प्राप्ते चनः[22] । पचतेत्याख्यातसरूपनामविभक्तेश्चकारः[23] । पक्व पक्वौ[24] पक्वा इति वेत्यवगमः । पदान्तरसम्बधसामर्थ्याद् विशेषनिश्चयः । उभयोरेकमुदाहरणम्—

अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो' दधिष्व पचतोत सोमम् ।
प्रयस्वन्तः प्रति' हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः[25] ॥

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ऋ० ४।३४।३] 'अयं वो यज्ञः' इत्येव प्रतीकम् B. C.
३—यज्ञ B. C. ४—यः B.
५—'मनुष्वत्' इति त्रुटितम् B. मनुष्यक् C.
६—भरर्थे C.
७—अस्फुरित्ये B. C.
८—जुजूषाणाः B. ९—अभूत् B. C.
१०—भरनेत्यर्थः B. C.
११—न प्रहाः B. C.
१२—'वा' इति नास्ति B. १३—मे C.
१४—अत्र 'वाज' इति युक्तं स्यात् ।
१५—अत्रायं नकारोऽधिक एव प्रतीयते ।
१६—क्षितोच्यते B.
१७—अयं पाठः सन्दिग्धः ।
१८—वतेर्धातोः B. C.
१९—वचतिर्ना C.
२०—पचिरेव B. C. २१—वचनमिति C.
२२—वचनं B. वचनः C.
२३—पचनेत्या B. वचनेत्या C.
२४—पक्वे B. पक्वो C.
२५—[ऋ० १०।११६।८] 'अद्धीदिन्द्र' इत्येव प्रतीकम् B. C.

अग्नियुतस्याग्नियूपस्य वा स्थूरपुत्रस्यार्षम् । अद्धि भक्षय इत्यपदपूरणः, हे इन्द्र प्रस्थित त्वां प्रति प्रस्थितानि प्रस्थितसंज्ञकानि वा इमा इमानि हवींषि । चनोऽन्नं तच्च दधिष्वे त्वमवधारय उदरे प्रक्षिपेत्यर्थः । पचैता पक्वानि सवनीयपुरोडाशादीनि । उत सोमम् अपि च सोमं ग्रहादिसंस्थम् । किञ्च प्रयस्वन्तः प्रय इत्यन्ननाम अन्नेन हविराख्येन तद्वन्तः सन्तो वयं प्रतिहर्यामसि हर्यतिः प्रेप्साकर्मा, प्रतिकामयामहे त्वा त्वाम् । सत्याः सन्तु यजमानस्याभिलषिताः कामा इति ।

अन्यत्रापि पचने पचताशब्दप्रवृत्तौ प्रसिद्धिं दर्शयन्नाह तं मेदस्तः इत्यादि ।

अग्निं मन्यवशोः सूक्तवाके ते वृषोऽयमग्निमद्य होतारमवृणीत वृतवानयं यजमानः पचन् पक्तीः कर्मणि क्तिन्, पक्तव्यानि हृदयादीनि पचंश्च पुरोडाशं गृह्णंश्चाग्नये आज्यभागार्थमाज्यं गृह्णन् सोमायाज्यभागार्थमेवाज्यं बध्नन् बध्नंश्चाग्नीषोमान्यामग्नीषोमयोरर्थाय छागः सूपस्था सूपस्थानश्चास्य यजमानस्य देवो वनस्पतिरभवद् अभूदग्नये अग्न्यर्थेनाज्येन सोमाय सोमार्थेन चाज्येनैवाग्नीषोमाभ्यां तु छागौ । हेतौ सर्वत्र तृतीया, अनेन कारणेन सूपस्थानः सूपस्थानो वनस्पतिरित्यर्थः । मेदस्तनः प्रतिशब्दोऽग्रहीष्टामित्यनेन सम्बध्यते, पचनं पक्वमन्नमग्रहीष्टां प्रतिगृहीतवन्तौ अवीवृधेतां वर्धितवन्तौ वृद्धिं च शरीरेण वीर्येण वा प्राप्तवन्त इत्यर्थः । पुरोडाशेन पशुपुरोडाशेन । किञ्च परस्तात्मा इति तस्मादर्थस्य श्रुतत्वादित्यध्याहार्यम् । यस्माद्वा हे अग्ने ऋषे दृष्टः सर्वार्थानामार्षेय ऋषेः पुत्र ऋषीणां नवान् । अत्र वृणीतवान् अयं यजमानः । किमर्थम् ? उच्यते । बहुभ्यो बहूनाम् आङ् मर्यादायाम्, संगतानाम् । केषाम् ? सामर्थ्यात् कर्माङ्गदेवतानामर्थाय एष मम देवेषु द्वितीयार्थ एषा सप्तमी, देवान् सुवार्य, उभयत्र तृतीया द्रष्टव्या । वसुभिर्धनैर्हविराख्यैर्वीर्यैर्वरणीयैः..........या यानि देवता देवदानानि अदुर्दत्तवन्तः ?

---

१–रैपुत्र B स्थुरपुत्र C.

२–'त्व' इति त्रुटितम् B. दधिश्च वाधारय C.

३–पक्षधा B. पश्चता C.

४–ग्राहादि C.

५–महे B. 'हर्यतिः' इति त्रुटितम् B.

६–सन्तः B. सन्त C.

७–हस्तलिखितपुस्तकयोर्मन्त्रपाठो न लिखितः । मैत्रायणीसंहिताया मूलपाठमवलोक्यैवायं सन्दर्भः शक्यते सम्पादयितुम् । B. पुस्तकपाठो यथादृष्ट एवास्माभिरत्रोल्लिखितः । C. पुस्तके पत्रद्वयं च पश्चान्नद्धम् । अत्रैव मैत्रायणीसंहितामवलोक्य मन्त्रपाठो लिख्यते ।

"तं मेदस्तः प्रतिपचताग्रभीष्टामवीवृधेतां पुरोडाशेन त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्या आ संगतेभ्य एष मे देवेषु वसु वाया यक्ष्यतां इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि।" [मैत्रा० सं०४।१३।९]

यजमानाय तेनान्यस्मै आशास्व आभिमुख्येन शास्व शाधि कथयेत्यर्थः। आ च गुरस्व 'गुरी उद्यमने' आभिमुख्येन उद्यम्य चार्पयितुमर्पयेत्यर्थः । इषितश्चासि होतः, अर्थिभ्यः किमर्थम् ? सुवाच्याय भद्रस्याशीश्रुतेः कल्याणस्य सूक्तवाकवचनस्यार्थाय त्वमपि मानुषो होता मया प्रेषितः सूक्तवाकाय एतज्ज्ञात्वा सूक्ता सूक्तं सुवचनं ब्रूहि । सात्त्वं सत्त्वं लिङ्गसंख्यायोगि द्रष्टव्यम् । तत्सम्बन्धिना त्वं त्वत्सबन्धं च दर्शयति। मेदसश्च पशोश्चेति वचनात्। इत्येतत्प्रसङ्गाद्यत्र ह्येकवचनार्थे इति आकारस्य संमोहहेतोरभावात् प्रसिद्धं तदसन्दिग्धमेकवचनमिति[1] ।

पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः ।
तं जुषस्व यविष्ठ्य[2]॥

विश्वामित्रस्य । पुरोळा अग्ने पचतः पक्वः । तुभ्यं तवार्थाय[3] वा । घेति पदपूरणः । परिष्कृतः संस्कृतश्च । अतस्तज्जुषस्व[4] सेवस्व । हे यविष्ठ्य स्वार्थिकस्तद्धितः, अतिशयेन युवन् ।

शुरुध इत्यनवगतम्[5] । आपोऽभिधेयाः[6] । शुचं संरुन्धन्तीति[7] निर्वचनम् । शुक्रशब्दस्यान्तलोपेन इति दर्शयति । शुग्रुध[8] इत्यवगमः । दीप्तिं तापं वा रुन्धंत्यग्नेर्मत्तस्य[9] वा घर्मान्तस्य[10] । उदाहरणम् 'ऋतस्य[11] हि' इति । प्रसङ्गेन चैतद् व्याख्यास्यते[12] ।

अमिन इत्यनवगतम्[13] । अमितमात्र इत्यवगमः । अपरिमाण इत्यर्थः । अपरिगणितकालो वा[14] महानित्यर्थः । प्राप्तवचनमभ्यमितो वा मिनोतिर्वधकर्मा, अहिंसितः केनचिद् अभ्यामितः[15] सन् अमितः । उदाहरणम्—

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्[16]॥

भरद्वाजस्य[17] । महानिन्द्रो नृवत्[18] मनुष्यवद् यथा राजा अन्योऽपि कश्चिदीश्वरो मनुष्यस्तद्वत्[19] । आचर्षणिप्राश्चर्षणयो मनुष्याः 'प्रा पूरणे[20]' आकार उपसर्गश्छान्दसत्वाद् अस-

---

१—यथा पुस्तके दृष्टं तथैवास्माभिरत्र लिखितम् ।
२-[ऋ० ३।२८।२] 'पुरोळा' इत्येव प्रतीकम् B.C
३—तेवार्थये B.
४—'तत्' इति नास्ति B. 'तं' इति पाठो युक्तः ।
५—इति नव C.
६—अपोऽभि C.
७—शुचरुदधीति B. इशुचरुदधीति C.
८—शुरुध B. C.
९—रुन्धशुत्यानेः B. रुन्धशुत्य C.
१०—'घर्मा इति द्विर्लिखितम् B.C. घर्मात् तस्य B.
११—[ ऋ० ४।२३।८ ]
१२—[ निरु० १०।४१ ]
१३—'न' इति त्रुटितम् C.
१४—'वा' इति नास्ति B.
१५—अत्र 'अभ्यमितः' इति स्यात् ।
१६—[ऋ० ६।१९।१] 'महाँ इन्द्रः' इत्येव प्रतीकम् B.C.
१७—भारद्वाजस्य C.
१८—निन्द्रं B. निद्रमनवद् C.
१९—ष्यमद्वत् C.
२०—[ धा० २।५१ ]

मस्तोऽपि प्रातिपदिकेनैव संबध्यते । तत 'आतो मनिन्[1]' इत्येवं विच् द्रष्टव्यः । स्तोतॄणां यष्टॄणां मनुष्याणां च पूरयिता कामैः । उत द्विबर्हा बृहेर्वृद्ध्यर्थस्येदं रूपम् । द्वयोः स्थानयोर्वीर्येण परिवृद्धोपि बर्हा क्रतुमयोर्धयोरुच्यते । मध्यमे च स्थानेऽन्तरिक्षे उत्तमे च दिवि । तस्याः सर्वदेवानां साधारणत्वात् । देवराजत्वेन च प्रसिद्धेः । इतिहासपक्षे तु नान्योऽन्तरिक्षे वीर्येण परिवृद्धः शक्नोति वर्षितुं नापि दिवि आदित्याद् रसान् परिग्रहीतुम् । उत द्विबर्हा अमिनोऽपरिमिताः सहोभिः शारीरैः सांयोगिकैर्वा बलैर्महाबल इत्यर्थः । अथवा अभ्यमितोऽहिंसितपूर्वः सहोभिर्बलैः परकीयैः । अस्मद्र्यक् 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ' इत्येवमयमस्मदोऽञ्चतावद्र्यादेशः । तत्र कर्माधिकारानस्मान् प्रत्याश्रित आगतोऽस्मदभिमुख इत्यर्थः । वावृधे वर्धते वीर्याय वीर्यकर्मणे वृष्ट्यादिकाय । उरुर्वीर्येण विस्तीर्णः पृथुः शरीरेण महाकायः । सुकृतः कर्तृभिः अत्रैकवाक्यताप्रसिद्ध्यर्थे यत्तच्छब्दावध्याहार्यौ । करोतिश्च क्रियासामान्यवचनः । क्रियाविशेषः स्तुतो द्रष्टव्यः । य ईश्वरः स सुष्ठु स्तुतः कर्तृभिर्भूत् लोडर्थे लुङ्, भवतु इत्याशास्महे ।

जज्झतीरित्यनवगतम् । आपोऽभिधेयाः शब्दकारिण्य इति मेघात् पतन्त्यो जज्झतीरित्येवंरूपं शब्दं कुर्वन्तीत्येवंरूपशीलधर्माः । ततश्चानवगतं शब्दानुकरणनिमित्तकम् । अतस्तदेषां नामधेयमित्यर्थः । उदाहरणम्—

आ रुक्मैरा युधा नर ऋष्वा ऋष्टीरसृक्षत ।
अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः ॥[14]

श्यावाश्वस्य । आ रुक्मैः आ युधा एकोऽत्राकारोऽसृक्षतेत्येतेन सम्बध्यते, अपरः अर्त इत्येतेन । आरुक्मैरिति अंसेषु वा ऋषय उत्सुखादयो वक्षस्सु रुक्मा इति दर्शनाद् मरुतामुरस्स्थः । आसृक्षत 'सृज विसर्गे' आभिमुख्येन मेघस्योपरि विसृजन्ति विक्षिपन्ति । अन्वेनाँ अह अन्वीति पश्चाद्भावे अहेति विनिग्रहार्थीयत्वादेवशब्देन समानार्थः । अन्वेव

---

१–[ पा० ३।२।७४ ]
२–'वृ द्र' इति त्रुटितम् B.
३–'र्थ' इति त्रुटितम् B.
४–अयं पाठः सन्दिग्धः ।
५–उत्तमे च दीनि ( वि C. ) ३ C
६–इतिहासे तु पुन्यग्यो ( न्यो C ) B C.
७–'वा' इति नास्ति B.
८–[पा० ६।३।९२] देवयारद्र्यञ्चतौ ५ C.
९–व (वा C.) दकारादेशः B. C.
१०–अमेत्रकवाक्य B. अमत्रैकवाक्य C.
११–यत्तशब्दो वाघ्या C.
१२–भिर्भूर्क् C. १३–'स्त' इति त्रुटितम् B. C.
१४–[ ऋ० ५।५२।६ ] 'आ रुक्मैः' इत्येव प्रतीकम् B. C
१५–आरुक्षैरिति अंसेषु व C. सन्दिग्धमिदं वाक्यम् ।
१६–आसुसृक्षत B. C
१७–[ धा० ६।१३३ ]
१८–अन्वीति B.

एनान् मरुत एतेन शक्तिविक्षेपलक्षणव्यापारादनन्तरमेवेत्यर्थः[1] । जज्ञतीरिवापो[2] यथैव मेघस्था आप आयन्ति ततस्तथैव विद्युतः स्वभूताः भानुरीत्रिरति छान्दसत्वाद् वर्तमाने लडात्मनेपदम् । आगच्छति[3] त्वना 'मन्त्रेष्वाङ्यादेरात्मनः'[4] इत्याकारलोप आत्मनैव । कुत आगच्छति । दिवो दीताद[5]न्तरिक्षात् ।

अप्रतिष्कुत इत्यनवगतम् । स्कवतेरषोपदेशत्वात्[6] सत्वाभावः । अप्रतिस्खलित इति ।

उदाहरणम्—

स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि ।
अस्मभ्यमप्रतिष्कुतः[7]॥

मधुच्छन्दसः । स नो वृषन् न[8] इति ताद्र्थ्ये चतुर्थीय वृषन्नित्येतेन सम्बध्यते, अस्मदर्थं वर्षितः[9], यो[10] हि सर्वार्थे वर्षति वर्षत्यसौ मधुच्छन्दोर्थम्[11] । अत एष इन्द्र आमन्त्र्यते स नो वृषन्निति[12] । अमुं चरुमिति मेघ[13]नाम मेघं सत्रादावन् सत्रेति सत्यनाम सततपर्यायो वा तदुपपदस्य ददातेर्वनि रूपम्[14] । हे सत्य सततं वा दातरित्यर्थः[15] । अपावृधि अपावृणु उद्घाटय[16] अस्मभ्यमस्मदर्थम् । अप्रतिष्कुतः[17] । 'स्कुञ् आप्रवणे'[18] आ[19]प्रवणमागमनं प्रवतेर्गत्यर्थत्वाद् अन्येनाप्रतिगतोऽप्रतिष्कुतो युद्धे अन्येनाप्रतिनियुक्तपूर्व इत्यर्थः, अप्रतिस्खलितपूर्वो वा । अत्र च स नो वृषन्निति तच्छब्दश्रुतेः प्रत्यक्षकृतत्वाबाह्य मन्त्रस्य अप्रतिष्कुत इति चानामन्त्रितत्वादेकवाक्यतायै यच्छब्दोऽध्याहार्यः । यस्त्वमप्रतिष्कुतः सोपावृधीति ।

शाशदान इत्यनवगतम् । 'शदॢ शातने'[20] इत्यस्य यङि[21] छान्दसत्वाच्च तस्य लुकि[22] रूपम् । शाशायमान[23] इत्यवगमः । उदाहरणम्—

---

१—एषा शक्तिविक्षेपलक्षणा व्यापा B. C.
२—रिवा वम B. जज्ञः मानिरिवाप C.
३—'गच्छति' इत्येव द्विर्लिखितम् B. C.
४—[ पा० ६।४।१४१ ]
५—च्छतीव न दीतान् B. दिवः न दीता C.
६—स्वार्थसत्ता C. अय पाठः सन्दिग्धः । अत्र कदाचित् 'स्कवतेरषोपदेशत्वात्' इति पाठः स्यात् ।
७—[ ऋ० १।७।६ ] 'स नो वृषन्नमुं' इत्येव प्रतीकम् B. C.
८—वृषणे ( ने C. ) इति B. C.
९—वर्षिता B. १०—योभिवर्षा B. C.
११—च्छन्दो अर्थम् B.
१२—वर्षन्निति B. C.
१३—'घ' इति द्विर्लिखितम् C.
१४—स्वयम् B. C.
१५—पादातरित्यर्थः C.
१६—उद्घट जर्जय B. C.
१७—इति कुतः B. अतिष्कुतः C.
१८ [धा० ९।६] आ (सु C.) ङ् अत्र प्रवणे B.C.
१९—'आ' इति नास्ति B. C.
२०—[ धा० ६।१४७ ] शदनु शादने C.
२१—यन्दि छान्द C.
२२—लुकि (कि) रूपम् C. २३—शाशादानः B. C.

अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद् वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः[1] ॥

हिरण्यस्तूपस्य । सिध्मः साधयिता इन्द्रः अभ्यजिगाद् अभिगतवान् । किम् ? अस्यैवेन्द्रस्य शत्रून् । अथवा सिध्म इति वज्र उच्यते । साधयिता च वज्रोऽभ्यजिगाद् अस्येन्द्रस्य शत्रून् अभिगम्य अभिगतेन च[2] तेन वज्रेण तिग्मेन तीक्ष्णेन वृषभेण[3] वर्षित्रा तेषां शत्रूणां स्वभूताः पुरो नगराणि अभेत्[4] पौरस्त्यो[5] विरिहोपादीयते[6] व्यभेद्[7] व्यभिनद् विविधं भिन्नवान् । किञ्च संवज्रेणासृजत् संसर्जितवान्[8], सम्बन्धितवानित्यर्थः । कम् ? वृत्रमसुरम् । किञ्च प्रस्वां मतिमतिरत्[9] मतिरिति मन्यतेः स्तुतिकर्मणो[10] रूपम् । अतिरदित्यपि[11] तिरतिर्वृद्ध्यर्थः, आत्मीयां मतिं[12] प्रातिरत्[13] प्रकर्षेणावर्धयत्[14][15] । शाशदानः पुनः पुनरसुरांस्तत्पुरश्च शातयन् यो हीदृशं कर्म पुनः पुनः करोति स तत्कर्मसम्बन्धादात्मनः स्तुतिं वर्धयति । अथवा मतिः शातनविषया प्रज्ञा वोच्यते स्वां प्रज्ञामवर्धयदिति । यो हि यन्नित्यं करोति तस्य तदभ्यासनिमित्ता प्रज्ञा[16] वर्धते ।

इति निरुक्तविवरणसमुच्चये एकादशस्य [ षष्ठस्याध्यायस्य ]
तृतीयः पादः ।
[ षोडशश्च खण्डः
समाप्तः[17] । ]

---

१–[ ऋ० १।३३।१३ ] 'अभि सिध्मः (ध्म C.) इत्येव प्रतीकम् B. C.

२–'च तेन' इति नास्ति C.

३–वृषभो वर्षिता B. 'वृषभेण' इति युक्तम् ।

४–पर. B. पुरा C.

५-अहेत् B. C.

६–पिरि ( ऽपि इ ) होपा (वा C.) दीयते B. C.

७–व्यहेत् B. C.

८–संसजितवान् B. C.

९–'स्वामृति' इत्येव । 'मतिरत्' इति त्रुटितम् B.

१०–तेरमृ ( म्म C. ) तिक B. C.

११–अरदित्यवि B.

१२–आत्मीयामृति B.

१३–प्रातिरन् B.

१४–र्षेण वर्ध C.

१५–र्धयन् B.

१६–प्रज्ञा का ( कौ C. ) ल वर्धते B. C.

१७–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

## अथ चतुर्थः पादः ।[1]

सृप्र इत्यनवगतम् । सर्पणादिति निर्वचनम् । सर्पतीति सर्पण इत्येवं प्राप्ते सृप्रः । इदमपीतरदिति सृप्रशब्दस्य[2] क्रियानिमित्तत्वात् सर्पिरादावपि वृत्तिं दर्शयति । एवं चानेकार्थत्वमपि[3] । विशेषावगतिस्तु पदान्तरसम्बन्धसामर्थ्याद् द्रष्टव्या । तुल्येऽपि च क्रियायोगे रूढिर्व्यवच्छेदिकेत्याह सर्पिर्वेति । उदाहरणम्—

बृबदुक्थं हवामहे सृप्रकरस्नमूतये[4] ।
साधु कृण्वन्तमवसे ॥

व्याख्या[5]तः शेषो बृबदुक्थ[6]प्रसङ्गेन । करस्नाविति बाहुनामसु पठ्यमानस्यैव[7] निर्वचनार्थमुपदेशः[8] । कर्मणां प्रस्नातारौ[9] 'वेष्टृ[10] वेष्टने' वेष्टयितारौ कर्तारावित्यर्थः ।

सुशिप्र इत्यनवगतम् । तत्पुनरेतेन[11] सृप्रेण व्याख्यातम् । सृपेरेवादिव्यापत्त्यादिना सुशिप्रशब्दो द्रष्टव्य इत्यर्थः । हनू नासिके वेत्यभिधेयमाचष्टे ते[12] ह्यन्नं गन्धं च प्रति सृतौ[13] भवतः । ते[14] शोभने यस्य सः[15] सुशिप्रः[16] । उदाहरणम्—

विद्मा सखित्वमुत शूर भोज्य १ मा ते ता वज्रिन्नीमहे ।
उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति[17] ॥

अयमप्युक्तशेषः समस्मिन्निर्त्यत्र[18] प्रसङ्गेन । यदुक्तं[19] शिप्रे इत्युपरिष्टाद् व्याख्यास्याम इति तदिदं व्याख्यातं हनू[20] नासिके वेति । अभिधेयप्रसङ्गात्[21] हनुनासिकाशब्दौ[22] निराह । [23]हन्यते जितया संगृह्यमिति हनुः । नासिका नसतेर्गतिकर्मणः । यद्वा नसतिर्नमतिकर्मा[24] वा ।

---

१—अयं सर्वोप्यध्यायपादारम्भात्मकः पाठो नास्ति C.

२—सृपशब्द B. C.

३—'पि' इति त्रुटितम् C.

४—[ ऋ० ८।३२।१० ] 'बृहदुक्थं ( र्थं C. )' इत्येवं प्रतीकम् B. C.

५—'ख्या' इति त्रुटितम् B. C.

६—[ निरु० ६।४ ] बृहदुक्थ B. C.

७—[निघ० २।४] ८—र्थमुपवे: B. C.

९—प्रस्तो (स्ता C.) तारौ B. C.

१०—[धा० १।२५६] वैष्ण वेष्टने C.

११—'न' इति त्रुटितम् B.

१२—'ते' इति नास्ति B. C.

१३—स्त्रस्तो B. स्त्रस्तो C. १४—अ शोभने B.

१५—स्तः B. स्त C. 'स्ते' इति युक्तं स्यात् ।

१६—सुशिप्राः B.

१७—[ ऋ०८।२१।८ ] 'विमा ( द्मा ) सखित्वम्' इत्येव प्रतीकम् B. C.

१८—[ निघ० ५।२३ ] १९—[ निरु० ४।१० ]

२०—अनू ( नु B. ) नासिके चेति B. C.

२१—अभिधप्रसंगमध्वनु C.

२२—अनुनासिकशब्दो B.

२३—सान्दिग्धमिदं वाक्यम् ।

२४—तिर्गतिकर्मा B. C.

गच्छति प्राप्नोति वा गन्धं प्रति नमतीति वा नासिका। शिप्रशब्देन क्वचित् हनुः क्वचिन्नासिका सामर्थ्यात् क्वचिदुभयमभिधीयत[1] इति। एतद्विषयप्रदर्शनायोदाहरणमप्याह–

मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने।
आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व[2]॥

कुत्सस्यार्षम्। मादयस्व मादय तर्पयेत्यात्मानम्[3]। स्वार्थे वा णिच् तृप्य वा। हरिभिरश्वैः[4] सह ये ते तव स्वभूताः हे इन्द्र[5]। केन प्रकारेण? उच्यते। विष्यस्व शिप्रे स्यतिरुपसृष्टो विमोचने शिप्रे अपि हनू इहोच्यते[*] हविर्भक्षणाय हनू विमुञ्च प्रेरयेत्यर्थः। विसृजस्व धेने[6] धाने इत्यस्यार्थो यथा भाष्यकारेणोक्तो दधातेर्धेनेति[7] जिह्वोपजिह्विके[8] इहापि ते ताभ्यां[9] हि पीयेते[10] निधीयते चरतस्तयोरिति जिह्वोपजिह्विके अपि रसास्वादनाय विसृज प्रेरयेत्यर्थः। आकारो वहन्तु[11] इत्येतेन सम्बध्यते। तदर्थं च त्वा त्वां हे सुशिप्र अत्र[12] विकल्पेन समुच्चयेन चाभिधानम्[13]। सुहनुः[14] सुनसो वा शोभनोभये[15] वा हरय आवहन्तु आनयन्तु। आनीतश्च सन् उशन् कामयमानोऽस्मदीयानि हव्यानि हवींषि भक्षय प्रति नो जुषस्व प्रतिसेवस्व नोऽस्मानभिलषितफलप्रदानेन। क्वचित्तु पदान्तरसम्बन्धसामर्थ्यात् शिप्रशब्देन शिरस्त्राणमुच्यते[16]। 'शिप्रः शीर्षस्सुवितता हिरण्मयी'[17] इति। सुशिप्रः सुशिरस्त्राण इत्यर्थः संभवति।

रंसु इत्यनवगतम्। रमणा[18]दिति निर्वचनम्। वर्णलोपादिना। रमणीयेष्वित्यर्थः। उदाहरणम्—

आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम्।
स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत्[19]॥

सोमाहुतेरार्षम्। आ इत्ययं पनन्ते[20]त्येतेन[21] सम्बध्यते। यदि[22]ति व्यत्ययेन पुंस्थाने

---

१–मभिधेयमिति B.
२–[ ऋ० १।१०१।१० ] 'मादयस्व' इत्येव प्रतीकम् B. C.
३–तर्पयित्मानम् C. ४–हरिभिश्वै C.
५–इहेन्द्र B. C. *–'०होच्येते' इति युक्तम्
६–धने B. C. ७–'तेर्धेजे' इत्येव B. C.
८–जिह्वैप ( व C. ) जिह्वे ( के C. ) B. C.
९–ताभ्याः ( भ्यः ) C.
१०–वीयते B. C.
११–अपहन्तु B. C. १२–पुत्र B. C
१३–चयो ( नो C. ) भिधानं B. C.
१४–'सुहनुः' इति द्विर्लिखितम् C.
१५–'शो' इति द्विर्लिखितम् C. 'शोभनोभयो' इति युक्तम्।
१६–मुच्यके C. १७–[अनुपलब्धमूलमिदम् ]
१८–अमरणादिति B. C.
१९–[ ऋ० २।४।५ ] 'आ यन्मे अभ्वं (अह्वा C.) इत्येव प्रतीकम् B. C.
२०–वनन्ते B. C.
२१–'न' इति त्रुटितम् C. २२–य इति B.

नपुंसकता[1] । मे मम स्वभूताः सामर्थ्याद् ऋत्विजः । अभ्वं[2] महान्तो वनदः ऋत्विग्विशेषणमेतत्, वननीयस्य हविषो दातारः । आपनन्त इति मध्यमः प्रथमार्थे । वनतिः स्तुतिकर्मा[3] । आभिमुख्येन स्तुवन्ति । यश्च उशिग्भ्यः[4] मेधाविनाम[5], एषा विभक्तिः षष्ठ्याः स्थाने । वशेर्वा उशिजः[6] कामिन उच्यन्ते । तेषां मेधाविनां कामिनां वा । नामिमीत[7] मिनातिर्वधकर्मा न हिनस्ति वर्णं वरणं प्रार्थनां यथाप्रार्थितमर्थं ददातीत्यर्थः । स चित्रेण[8] व्यत्ययेनेदं नपुंसकं स्त्रीलिङ्गस्य स्थाने । विचित्रया विचित्रया चिकिते ज्ञायते रंसु रमणीयेषु सर्वत्र कन्दरादिषु दावात्मना[9] । सप्तमीश्रुतेः स्थित इति शेषः । भासा दीप्त्या[10] यश्च इन्धनक्षयात् जुजुर्वान्[11] जीर्णः । मधुमहादक्षणेनैव[12] आकारः पदपूरणः, इन्धनमासाद्य युवा तरुणो[13] भूद् भवति ।

द्विबर्हा इत्यनवगतम् । द्वयोरित्याद्यर्थवचनम् । विपरिवृढ[14] इत्यवगमः, एकमेवेदं ज्योतिरिति कृत्वा मध्यमे वैद्युतात्मना उत्तमे आदित्यात्मना । अयमपि पुरस्तादुक्तः । उदाहरणम्—

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥[15]

अमिन इत्येतत्प्रसङ्गेन व्याख्यातम्[16] ।

अक्रः[17] इत्यनवगतम् । आक्रामत्याक्रम्यते[18] वेति आक्रमण इत्यवगमः । आक्रमणादिति निर्वचनम् । प्राकारोऽभिधेयः । उदाहरणम्—

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।
उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥[19]

विश्वामित्रस्यार्षम् । अक्रो न प्राकारः परचक्रं धारयति तद्वत् । बभ्रिर्भृत्[20][21]स्ता-

---

१–नपुंसकता B. एतत्पदानन्तरं B. पुस्तके 'मेणि' इति C. पुस्तके च 'मे त्रि' इत्यधिकः पाठो वर्तते । कदाचिदत्र 'ये हि' इति स्यात् ।
२–अभ्यं B. C.
३–'तिः स्तुः' इति त्रुटितम् C.
४–उशीभ्यः B. C. ५–धाविनाम्नः B. C.
६–उशीजः B.
७–'ममी ( म्मि B. ) त' इत्येव B. C
८–वित्रेण B. ९–भावात्मना B.
१०–दीप्या C.
११–'त्, जुजुर्वान्' इति त्रुटितम् B. C.
१२–अयं पाठः सन्दिग्धः । अत्र कदाचित् 'मुहुर्मुहुरक्षणेनैव' इति पाठः स्यात् ।
१३–तरुणमभूत् B. C.
१४–'वि' इति नास्ति निरुक्तमुद्रितमूलपुस्तके ।
१५–[ऋ० ६।१९।१] 'इमां इन्द्रो नृवत्' इत्येव प्रतीकम् B. C. १६–[निरु० ६।१६]
१७–अर्के C. १८–मत्यक्रम्य B. C.
१९–[ऋ० ३।१।१२] 'अ ( आ B. ) क्रो न बभ्रिः (ह्रिः C.) इत्येव प्रतीकम् B. C.
२०–बह्रिः B. बह्निः C.
२१–भिज्ञ ( ज्ञ C. ) स्ताच्छी B. C.

च्छीलिके किप्रत्यय[1] एतद्रूपं धारयितेत्यर्थः । समिथे संग्रामनामेदं संग्रामे महीनां[2] महतीनां शत्रुसेनानां दिदक्षे[3] यो[4] दिद्रक्षितव्यं च । केन ? सूनवे तृतीयायाः स्थान एषा चतुर्थी च सूनुना पुत्रभूतेन यजमानेन भाऋजीको निरुक्तमेतत् प्रसिद्धः[5] । उस्रिया गोनामेदं लुप्तोपमं चेह द्रष्टव्यम् । गाव इव गोसदृशीरुत्स्राविणीर्भोगानामत्यन्तोपजीव्याः । काः ? सामर्थ्या दाहुतीः । जनिता जनयिता चित्रादिना कर्मणा वा एवं जनयितार उज्जजान[7] आहुतीः स्वात्मनि प्रक्षिप्ता देवान्[8] प्रति प्रेरणेनोर्ध्वं जनयति गमयतीत्यर्थः । गवामूर्ध्वजननं पोषवृद्धिरुच्यते । अपां[9] च वैद्युतात्मना गर्भो गर्भभूतः । नृतमः[10] एतदपि लुप्तोपमं प्रकृष्टमनुष्यवत्[11] तत्सदृश इव चेत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः[12][13] । स यह्वो महन्नामेदम्, महानैश्वर्यात् प्रभावादग्निः[14] ।

उराण इत्यनवगतम् । उरु कुर्वाण इति प्राप्ते नैकवर्णलोपादिना[15] वाक्यार्थे उराण इति पदवचनम् । उदाहरणम्—

वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी संचिकित्वान् ।
दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि ॥[16]

वामदेवस्य । वेः 'विद ज्ञाने'[17] इत्यस्य वर्तमाने लेटि[18] अड्भावे[19] एतद्रूपम् वेत्सि त्वमध्वरस्य यज्ञस्य यावत् किञ्चिज्ज्ञातव्यं सर्वम् । दूत्यानि दूतस्य च कर्माणि विद्वान् जानन् उभे अन्ता[20] रोदसी अन्तरुभयोर्द्यावापृथिव्योर्मध्य इत्यर्थः । अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । यत् । किञ्च पुनस्तत् ? सामर्थ्यादन्तरिक्षम् । तेनान्तरिक्ष इत्यर्थः । संचिकित्वान् सम्यक् स्वमधिकारम् । दूत ईयसे गच्छसि । प्रदिवः पुराणनामेदं पुराणश्चिरन्तनः । एवकारोऽवधारणः[21] । अल्पमपि हविरुरु बहु कुर्वाणः । तथा च श्रुतिः 'यह्वै देवो जोषत हविस्तदतिमात्रं[22] वर्धत आधीयोऽपरिमितम्[23]' इति । विदुष्टरः । सर्वस्माद् विद्वत्तरः ।

---

१–[पा० ३।२।१७१] तिप्रत्यय B.
२–'महीनां' इति त्रुटितम् B. महतीनां C.
३–द्यदिद्र B. यदिदृक्षि C.
४–'याः' इति नास्ति C.
५–प्रसिद्धम् B.
६–'म' इति नास्ति B. C.
७–ऊर्जजान B.
८–देवाः प्रति B.
९–'पा (वां C.)' इति द्विर्लिखितम् B. C.
१०–नृतवः B. C.
११–'वत्' इति त्रुटितम् B.
१२–'यच्छब्दश्रुतेः' इति त्रुटितम् B. शयच्छब्दो श्रुतेः C.
१३–यच्छब्दोऽध्या B.
१४–वादग्निम् B.
१५–'प्राप्तेऽनेक' इति युक्तं स्यात् ।
१६–[ऋ० ४।७।८] 'वेरध्वरस्य' इत्येव प्रतीकम् B. C.
१७–[धा० २।५४] 'ने' इति त्रुटितम् C.
१८–अत्र 'लेटि' इति युक्तं स्यात् ।
१९–अर्धभावः C. 'अडभाव' इति युक्तम् ।
२०–अन्तरा B. C.
२१–कारावधा C. मन्त्रे त्वेवकारो न दृश्यते ।
२२–तद्गिमात्रं B. तत् निमात्रं C.
२३–[अनुपलब्धमूलमिदम् ]

किर्मीयसे ? उच्यते । दिवो द्युलोकस्य सम्बन्धीनि[1] आरोधनानि आरोहणानि येषु यज्ञाङ्ग............देवा इत्यभिप्रायः । यानि स्थानानि देवानां[2] ह्वयितुं हवींष्यर्पयितुमित्यर्थः ।

स्तियानामित्यनवगतम् । आपोऽभिधेयाः । स्त्याय[3]नादिति निर्वचनम् । 'स्त्यै ष्ट्यै संघातशब्दयोः'[4] इति । स्त्यायतिः संहननार्थः । हिमभावेन संहताः । उदाहरणम् ।

वृषासि दिवो वृषभः पृथिव्या वृषा सिन्धूनां वृषभः स्तियानाम् ।
वृष्णे त इन्दुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय ॥[5]

शंयोरार्षम् । इन्द्र उच्यते । वृषा वर्षिता त्वमसि । दिवः षष्ठीश्रुतेरर्थायेति शेषः । वृषभो वर्षिता पृथिव्या अर्थाय । वृषा सिन्धूनां सिन्धवो नद्यो नदीनामप्यर्थाय । द्यावापृथिव्योर्हि नदीनां च स्थितिर्वृष्टिः[6] प्रसिद्धा । अत[7] एवमुच्यते द्युलोकादीनामर्थाय वर्षितेति । कस्य पुनर्वर्षिता ? उच्यते । वृषभः स्तियानाम् । एवं चोक्तेन रूपेण वृष्णे वर्षित्रे ते[8] तुभ्यमर्थाय इन्दुः सोमो हे वृषभ वर्षितः पीपाय 'स्फायी ओप्यायी वृद्धौ'[11] आप्यायिता आप्यायते वा सम्यक् संसारवृद्ध्या वर्धत इत्यर्थः । कीदृशः ? स्वादुर्मृष्टः । रसो रसरूपो द्रवः । न मनाक् स्वादुः । किं तर्हि ? मधुपेयो मध्विव[12] यः पीयते समम्[13]उपेयोऽत्यन्तमृष्ट इत्यर्थः । कीदृशाय तुभ्यम् ? वराय वरस्य श्रेष्ठस्य[14] वरणीयस्य वा तवार्थायेत्यर्थः ।

स्तिपा इत्यनवगतम् । तासां स्तियानां[15] पालयितेत्यर्थ[16]वचनम्, उपस्थितानित्या[17]देर्निर्वचनान्तरत्वाद् वा[18]शब्दलोपोऽत्र द्रष्टव्यः । उपस्थितान् ज्योतिष्टोमादीन् यागान् पालयति । ततश्चोपस्थितः सन्ननेकार्थ[19]लोपे वर्णेन स्तिपाः[20] । अग्निरभिधेयः । स[21] ह्व्याहुतिद्वारेणापां पालयिता । अङ्गभावोपगमनेन चोपस्थितानां कर्तव्यतया ज्योतिष्टोमादीनाम् । उदाहरणम्—

यं त्वा पूर्वमीळितो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व ।
स नः स्तिपा उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे ॥[22]

---

१–सम्बन्धिनीत्युरोधनानि B. C.
२–देवानां ह्वयितुं B. देवानामाह्वयितु C.
३–'य' इति त्रुटितम् B. C.
४–[धा० १।९३५।९३६] धातुपाठे तु 'शब्दसंघातयोः' इत्यानुपूर्वीकः पाठ उपलभ्यते ।
५–[ऋ० ६।४४।२१] 'वृषासि ( नि C. ) दिवः' इत्येव प्रतीकम् B. C.
६–स्थितवृष्टिः B. ७–अत्र त एव B.
८–'ते' इति नास्ति B. C.
११–[धा० १।४८८,४८९] स्फायी ओप्या C.
१२–मध्विय वः B. C. १३–समवुपेयः C.
१४–श्रेष्ठाय वारणी B. १५–स्त्रियानां B. C.
१६–त्यर्थः वच B. C.
१७–'तानित्यादे' इति युक्तं स्यात् ।
१८–याशब्द B.
१९–'र्थं' इति त्रुटितम् B. सन्दिग्धोऽयं पाठः ।
२०–स्तिलो B. C. २१–सं ह्याहु B. C.
१–[ऋ० १०।६९।४] 'यं त्वा पूर्वं' इत्येव प्रती-

वाध्र्यूश्वस्यार्षम्[1] । यं त्वा पूर्वस्मिन्नपि काले ईडितो व्यत्ययेनायं कर्तरि, ईडितास्ते तव वध्र्यूश्वो नामाहमृषिः[2] समीधे[3] समिन्धितवान्[4] सन्दीपितवान् । हे अग्ने स इदमुपकल्पितं हविः स्तोत्रं वा जुषस्व सेवस्व । स[5] नः स एव चास्माकं स्तिपाः 'अग्नौ प्रास्ताहुतिः[6]' इत्यनेन प्रकारेणापां यज्ञानां[7] पालयिता । उत अपि च भवा भव[8] तनूपा[9] शरीराणां पालयिता । दात्र दानं च रक्षस्व रक्ष[10] । कतमद्दानम्[11] ? यदिदं ते तव स्वभूतम् । अस्मे[12] चतुर्थ्याः शे आदेशः, अस्मदर्थं सर्वदा देह्यस्मभ्यं[13] मा कदाचिदपि न दा[14] इत्यर्थः ।

जवारु[15] इत्यनवगतम् । जेमानरोहीत्यादयो[16]ऽवगमाः । उदाहरणम्—

तमिन्वे ३ व समना समानमभि क्रत्वा पुनती धीतिरश्याः ।
ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु[17] ॥

वामदेवस्य । तम्[18] इनू[19] पादपूरणौ । तमेव प्रकृतं वैश्वानरमुत्तमस्थानम्[20] । समना[21] समानयो[22]श्चातदनुरूपेत्यर्थः, समानयोग्यमेव । अभ्युपसर्गोऽश्या इत्येतेन सम्बध्यते । क्रत्वा कर्मणा तत्परिचर्याख्येन पुनती । कम् ? सामर्थ्यादस्मानेव । कासौ[23] ? धीतिर्मतिरस्मदीया प्रज्ञा । अभ्यश्या व्यत्ययेनायं प्रथमस्य स्थाने मध्यमः, अभ्यश्याद् व्याप्नुयात् तत्त्वतो जानीयादित्यर्थः । पुरस्तात् तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य स्वभूतं जबारु इति सम्बन्धः । ससस्य लुप्तोपममेतत् । योऽयं निश्चलत्वात् सस[24] इव 'सस[*] स्वप्ने' सुप्त इव । कः? प्रशास्पष्टो[25] ज्योतिरादित्यलोकः । तस्य पृश्नेरधि उपरि चर्मन् चरेरौणादिको[26] मनिन् । तदन्तात् 'सुपां सुलुक्[27]' इत्येवं तादर्थ्यचतुर्थ्या लुग्द्रष्टव्यः । चर्मणे चरणाय उदयास्तमय-

१—प्रश्व स्यार्षम् C.
२—ध्रियश्वो ( श्वो C. ) नामाः B. C.
३—समिधे B. C. ४—समिद्धितवान् B.
५—'स' इति नास्ति B. C.
६—[मनु० ३।७६] ७—यज्ञं B. यज्ञां C.
८—'भव' इति नास्ति B. C.
९—रक्षः ननून (B.) पाद B. C. 'तनूनपाः' इति सविसर्गः पाठो युक्तः स्यात् ।
१०—रक्षः B. ११—कृतमद्दा ( दा B. ) नं B. C.
१२—यस्मै B. C.
१३—देभ्यस्मभ्यं C.
१४—नादा B. १५—जपारु C.
१६—जपमान B C.
१७—[ऋ० ४।५।७] 'तमिन्वे' इत्येव प्रतीकम् B. C.
१८—त B. तः C. १९—इत्पाद B. इनू पद C.
२०—'उत्तमस्थानं' इति द्विर्लिखितम् C.
२१—'समना' इति द्विर्लिखितम् C. 'समना' इति नास्ति B.
२२—'समानयोः' इति द्विर्लिखितम् C. अस्य वाक्यस्य पाठः सन्दिग्ध एव ।
२३ कःसौ B. क्रासौ C. २४—स इव स स्वप्ने B.
*—[धा० २।६८] धातुपाठेऽयं धातुः षोपदेशतां दर्शयितुम् 'षस' इति मूर्धन्यादिः पठ्यते ।
२५—प्राशास्यष्टो C. अयं पाठः सन्दिग्धः ।
२६—सर्वधातुभ्यः मनिन् [ उणा० ४।१४५ ]
२७—[ पा० ७।१।३९ ]

लक्षणाय चारु दीप्तम् अग्रे प्रथमं सृष्टिकालं तव रूपं रिपं[1] इत्यस्य पृथिवीनाम्नश्छान्दस इकारस्य उकारः पर्यायान्तरं वा पृथिवीत आरोपितं देवै[2]र्जेबारु जवरू[3]पया गत्या जरयद्वा प्राणिनो वयो[4] गिरन् वा रसान् रश्मिभिर्यदारोहति नभस्तदादित्यमण्डलम् ।

जरूथमित्यनवगतम् । जरूथमिति गृणाते[5]र्धातोर्गतिकर्मणः । जरतेर्वा एवमर्थस्यैवार्चतिकर्मसु पाठात्[6] । 'जृवृञ्भ्यामूथन्'[7] इत्यौणादिक ऊथन् भावसाधनः करणसाधनो वा बाहुलकाद् द्रष्टव्यः । जरूथ[8]मिति नेदमवगतं[9]प्रदर्शनार्थम् । अस्यैवौणादिकत्वेन छान्दसत्वाविशेषात् । स्तुत्यप्रदर्शनार्थं तु गृणातेरुपक्षेपः । अवगमस्तु जरणं गरणमिति वा द्रष्टव्यम् । स्तोत्राभिधेयम् । उदाहरणम्—

त्वामग्ने समिधानो वसिष्ठो जरूथं हन्यक्षि राये पुरन्धिम् ।
पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः ॥[11]

वसिष्ठस्यार्षम् । त्वां हे अग्ने समिधानः सन्दीपयन् वसिष्ठो नाम[12] ऋषिरात्मन एवायं[13] परोक्षरूपेण जरूथं[14] स्तोत्रं हन् हन्तेरन्तर्नीतण्यर्थस्य लङ्यडभावश्छान्दसत्वात्, अहन् गमितवान् गमयति वा स्तुतवान् स्तौति चेत्यर्थः । एतज्ज्ञात्वा राये धनाय यक्षि यज पुरन्धिं बहुकर्माणं बहुप्रज्ञं वा । कम् ? समर्थ्यादात्मानं देवगणं वा पुरुणीथा[15] स्तुतिस्ततस्तृतीयाया अलुक्[16], बह्वया च स्तुत्या हे जातवेदो जातधन जातप्रज्ञ वा जरस्व स्तूयस्व स्तु[17]हि देवान् । किञ्च यूयं[18] पात एकस्यैव[19] पूजनार्थं बहुवचनम् पाहि । स्वस्तिभिरविनाशैः[20] सर्वदा सर्वकालं नोऽस्मान् ।

कुलिश इत्यनवगतम् । वज्रनामेत्यभिधेयवचनम्[21] । कूलशातन[22] इति शब्दसमाधिः कूलशातनः कुलिशः । मेघस्य पर्वतस्य वा समुच्छ्रिताः प्रदेशाः कूलानीव[23] शातन तेषाम्[24] । उदाहरणम्—

---

१–रिव B. C. २–जपारु B. C.
३–'रूप' इति त्रुटितम् C.
४–णिनोः पयः B. ५–जृणाते B.
६–[ निघ० ३।१४ ]
७–[ उणा० २।६ ] जम्पृ ( जृवृं C. ) हयामूढन् B. C.
८–ऊढन् B. C. ९–गरुडमिति C.
१०–'त' इति त्रुटितम् C. अत्र 'अवगम' इति स्यात् ।
११–[ ऋ० ७।९।६ ] 'त्वामग्ने' इत्येव प्रतीकम् B. C.
१२–नामामृषिः C.
१३–उपायं B. १४–जरूठं C.
१५–पूरणी वा B. C.
१६–अत्रायमकारोऽधिक एव ।
१७–स्तुनि C. १८–यूरं C.
१९–एतस्यैव B.
२०–अविनाशे B.
२१–भिधेयम् (यः C.) अभिधे B. C.
२२–कुशशा B. C.
२३–म (C.) कुलानीव B. C.
२४–केषाम् C.

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः ॥[1]

हिरण्यस्तूपस्यार्षम् । अहन् हतवान्[2] वृत्र मेघं वृत्रनामानं वासुरम् । वृत्रतरं वर्ततेर्गत्य-र्थस्य रूपम्, अतिशयेन नष्टारम् । व्यंसं विगतांसं विच्छिन्नसर्वाङ्गसन्धिबन्धनमित्यर्थः[3] । व्यंसनामानं वापरमसुरम् । कः ? इन्द्रो वज्रेण । कीदृशेन ? महता वधेन वधकेन[5] नित्यं हन्त्रा । अथवा हननमेव वधः प्रहारो वज्रस्तस्य करणं[6] वज्रेण महता प्रहारेण हतवान् हतश्च सन् स्कन्धांसीव[7] वृक्षाणां स्थूला[8] अधोभागायताः शाखा जायन्ते ते स्कन्धा उच्यन्ते, तानि यथा स्कन्धांसि विवृक्णा विविधं छिन्नानि सन्ति तद्वत् । अहिर्मेघोऽयतेः[9] । अभिगन्ता[10] वृत्राख्यो व्यंसाख्यश्चासुरः शयते शेतिरिह स्थानार्थः । आमाशयो जलाशय इति यथा । कथम् ? उपपृक्[11] पृथिव्या उपेत्येष समित्येतस्य स्थाने समर्चिता पृथिव्यां भूमौ पतितस्तिष्ठतीत्यर्थः । हतो हि सन् मेघं[12] उदकरूपेण भूमौ पतितस्तिष्ठति । स्कन्धो वृक्षस्य समास्कन्नं[13] खमुपश्लिष्टं वृक्षे । इदम-पीतरत्[14] प्रास्यावयवरूपं[15] काये आस्कन्नत्वात्[16] इति । असुन्[17]प्रत्ययान्तः स्कन्धशब्दोऽस्ति । स्कन्धशब्दश्चाकारान्तः[18] प्रसिद्धः । उभयं प्रदर्शितम् ।

तुञ्ज इत्यनवगतम् । तुजेर्हिंसार्थस्य चलनार्थस्य[19] वा । वज्रोऽपि तुञ्ज उच्यत इत्याह तुञ्जतेर्दानार्थस्येति संघात्[20]वर्थस्यावगमं दर्शयति । तुजिर्हिंसायां तुजिश्चलने चेति पठ्यते । तेनास्य[21] दानार्थत्वमगमयति[22] । त्रितभावे रूपमुपपन्नमेव । उदाहरणम्— ।

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
सप्तदशः खण्डः[23] ]

———

१–[ ऋ० १।३२।५ ] 'अहन्वृत्रं' इत्येव प्रतीकम् B. C.

२–अहनवान् C. ३–सर्वांशसन्धि B. C.

४–'व' इति त्रुटितम् B.

५–वधकेह B. C. ६–कारणं B.

७–कन्धांसीव B. C.

८–स्थूलः अधोभागायतः B. C.

९–असतेः B. १०–अहिगन्ता C.

११–उपवृक् B. C.

१२–मेघा ( घ C. ) देक B. C.

१३–समास्कन्धं C. १४–पीतरः B. पीतरं C.

१५–प्रास्यवयव C. अत्र कदाचित् 'आस्यावयव' इति वा पाठो भवेत् ।

१६–स्कन्धस्थान B. स्कन्धस्वात् C.

१७–असुट् B. असुत् C.

१८–कारान्तः अन्तः प्रसिद्धः B. C.

१९–'ना' इति द्विर्लिखितम् C.

२०–साधात्व B. C.

२१–तेनास्या (स्था० B.) B. C.

२२–'गमः य' इत्येव 'ति' इति त्रुटितम् C.

२३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ अष्टादशः खण्डः । ][1]

तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।
न विन्धे अस्य सुष्टुतिम् ॥[2]

मधुच्छन्दसः । तुञ्जे तुञ्जे दाने दाने[3] । कस्य ? सामर्थ्याद् वृष्टेर्धनानां वा ये उत्तरे पूर्वेभ्यः प्रकृष्टतराः स्तोमा मदीया इन्द्रस्य वज्रिणः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैरपि न विन्धे[4] विदेर्लाभार्थस्येदं रूपम्, न लभे[5] । अस्येन्द्रस्य सुष्टुतिं[6] तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः । एतदुक्तं भवति येऽपि दानपरितुष्टस्य[7] ममात्यन्तमहान्तः स्तोमास्तेपीन्द्रस्य गुणैकदेशवर्तिनः समस्तगुणप्रकाशनमप्राप्ताः किं पुनरन्य इति ।

बर्हणा[8] इत्यनवगतम् । परिबर्हणेति धात्वर्थकथनम् । धात्वर्थश्च वृद्धिर्हिंसा वा । निबर्हतेर्वधकर्मसु पाठात्[10] । वृद्ध्यर्थस्य बृहेर्भूते[11] कर्तरि ल्युट्, परिवृद्धः प्राप्तो महत्त्वो-बर्हणा[12] । ततस्तृतीयैकवचने बर्हणेति प्राप्ते तृतीयायाः 'सुपां सुलुक्पूर्वसवर्णा'[13] इत्याकारः[14] । हिंसार्थे वा भावे ल्युट्, बर्हणं ततः पूर्ववद् विभक्तेराकारः । अतो बर्हणमित्यवगमः । सर्वथा बर्हणा इत्यनवगतम् । उदाहरणम्—

अर्चा दिवे बृहते शूष्यं वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥[1]

सव्यनामापन्नस्येन्द्रस्यार्षम् । अर्चेतिः सामर्थ्यादुच्चारणार्थः । आत्मन एवायमन्तरात्मना प्रैषः । अर्च उच्चारय हे अन्तरात्मन् । दिवे बृहते तादर्थ्ये एते, दीप्तस्य महतश्चेन्द्रस्या-शूष्यं शूषं बलं ततो निमित्तार्थे यद् बलस्य निमित्तं बलवृद्धिकरमित्यर्थः । किं तत् ? वचः स्तुतिलक्षणम् । स्तूयमाना हि देवता वीर्येण वर्धत इति । उच्चारय प्रापय शूष्यं वच इति यस्येन्द्रस्य । किम् ? उच्यते । स्वक्षत्रम् इत्यपठितमपीह बलनाम द्रष्टव्यम् । स्वक्षत्रं बलं न पराश्रितं यस्य तदन्यपदार्थः । यस्येन्द्रस्य[2] धृषतः परानभिभवतो धृषद् धृष्टं प्रगल्भं मनो यः

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ ऋ० १।७।७ ] 'तुञ्जे तुञ्जे' इत्येव प्रतीकम् B. C.
३—'दाने' इति त्रुटितम् C.
४—वष्टेः B. ५—विन्दे B.
६—सुष्टु किं B.
७—वरिकृष्टस्य C.
८—बर्हिणा C. ९—वर्धि B.
१०—[ निघ० २।१९ ] ११—भूति B.
१२—बर्हण C. अयं पाठः सन्दिग्धः ।
१३—[ पा० ७।१।३९ ]
१४—इत्यकारः B. C.
१—[ ऋ० १।५४।३ ] 'अर्चा दिवे' इत्येव प्रतीकम् B. C.
२—स्येन्द्र यस्य B C.

स्वबलेन शत्रून् घ्नन्[1] न कुतश्चिन्मनसा बिभेतीत्यर्थः। येन च बृहच्छ्रवा रथो हि षः इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। बृहच्छ्रवाः श्रव इति धननाम महाधनोऽसुरो वृत्रोऽन्यो वा शम्बरः। बर्हणा बृहिर्वृद्ध्यर्थः, इन्द्रस्यैवेदं विशेषणं प्राप्तमहिम्ना परिवृद्धेनेन्द्रेण। अथवा निबर्हयतेर्बर्हणा हिंसोच्यते। तेन[2] कृतः। कदा कृतः? उच्यते। पुरो हरिभ्यां प्राग् हरिभ्यां प्राप्ते दूरस्थेनैव[3] सतेत्यर्थः। कीदृशः कृतः? उच्यते[4]। वृषभो वर्षिता रुधिरौघस्य सर्वतः क्षारयन्[5] क्षतजं व्रणजमित्यर्थः[6]। नचैतत् सुकरम्। यतो रथो हिशब्दो यस्मादर्थे यस्माद्रथ ईहिता प्रतिमुखमभिगन्ता स* अत्यन्तशूर इत्यर्थः।

ततनुष्टिरित्यनवगतम्[7]। ततो नुन्नमित्यवगमः[8]। ततो धर्मसन्तानादग्निहोत्रादेः कर्मणो नुन्नोऽपेतः[9]। ततो नुन्नः सन् ततनुष्टिः। अथवा ततन् इत्येतत् शब्दरूपं तनोतेर्भोगसन्तानं वा। उष्टिशब्दो[10] वशेः कान्तिकर्मणः। भोगसन्तानं वष्टीति ततनुष्टिः[11]। विजयभोगसन्तानकाम इत्यर्थः। उदाहरणम्—।

[इत्येकादशस्या-(षष्ठस्या-) ध्यायस्य
अष्टादशः खण्डः[12]]

---

१–'न्' इति नास्ति B. 'न' इति नास्ति C.
२–'ते' इति त्रुटितम् B. C.
३–दूरस्तेनैव B. C.
४–उच्यन्ते C.
५–दारयन् C.
६–व्रणज C. * 'सोऽत्य०' इति युक्तम्।
७–ततुष्टिमित्यन C.
८–'नु' इति त्रुटितम् C.
९–अवेतः C.
१०–उषिशब्दो B. C.
११–ततनुष्टिम् B. C.
१२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ एकोनविंशः खण्डः । ][1]

यो अ॑स्मे घ्रंस उ॒त वा॒ य ऊध॑नि॒ सोमं॑ सु॒नोति॒ भव॑ति द्यु॒माँ अह॑ ।
अपा॑प॒ शक्र॑स्ततनु॒ष्टिमू॑हति त॒नूशु॑भ्रं म॒घवा॒ यः क॑वास॒खः ॥[2]

संवरणस्य प्राजापतेः पुत्रस्यार्षम्[3]। यो यजमानः। अस्मै इन्द्राय। घ्रंसे[4] उत वा य ऊधनि ऊधनीति रात्रिनाम रात्रौ सोमं सुनोति सर्वदा यजत इत्यभिप्रायः। यच्छब्दश्रुतेस्तच्छब्दो-ऽध्याहार्यः। स भवति द्युमान् दीप्तिमान् ऐश्वर्ययुक्त इत्यर्थः। अहेति पदपूरणो विनिग्रहा-र्थीयो वा एवार्थे, भवत्येव दीप्तिमान्। अन्यस्तु शक्रः शक्र इन्द्रः। ततनुष्टिं ततोनुन्नधर्मा[12]न् इन्द्रियविषयभोगसन्तानकामं वा अपाप ऊहति 'प्रसमुपोदः'[13] इत्येवमेतच्छान्दसत्वाद् अपश[14]-ब्दस्यापि पादपूरणे[15] द्विर्वचनम्। अपोहति सर्वतोऽपनयाति विनाशयतीत्यर्थः। तनुशुभ्रं स्वस्यास्तन्वाः स्रगनुलेपनादिभिः शोभयितारम्। मघवा[16] यः कवासखः कुशब्दस्यायं 'कव-ञ्चोष्णे'[17] इति सखिशब्दे कवादेशश्छान्दसत्वाद् द्रष्टव्यः। कुसखा[18] स्वयं भोगप्रवृत्तो दुष्ट-प्रसाधनसखायोऽपि[19] तस्य भोगप्रधाना एव न यागशीला इत्यर्थः।

घ्रंस[20] इति पठ्यमानस्य निर्वचनार्थ उपक्षेपः। रसा अवश्याया आदित्येन। रात्रिशब्दनिर्वचनार्थं प्रसिद्धं तावदाह गोरूधः प्रसवकाले अङ्गान्तरेभ्य उच्छ्रिततरं भवति। यद्वा उपश्लिष्टमुद्धृतमुद्धृतमिव केनचित्। ततस्त्रो[21] रसानुप्रदानसामान्याद् रात्रि-[22]रप्यूध उच्यत इति निर्वचनार्थ उपक्षेपः पठ्यमानस्यैव। ततनुष्टि[23]शब्दार्थप्रदर्शनमलं-करिष्णुमित्यादि। तनुं शोभयितारमिति पाठः। कपूयाः पापाः।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ऋ० ५।३४।३] 'यो अस्मे ( 'स्मे' नास्ति )' इत्येव प्रतीकम् B. C.
३–वरुणस्य B.
४–बृंसे B. C.
५–अथवा B. C.
६–'ऊधनि' इति त्रुटितम् B.
७–भवि C.  ८–पादपूरणे B.
९–अन्यन्तु C.
१०–शक्रः B.
११–'त' इति त्रुटितम् B. C.
१२–धर्मात् C.
१३–[पा० ८।१।६] प्रसमुपोम (पोपभ C.) B. C.
१४–अपिशब्द B. C.
१५–पदपूरणे B. C.
१६–मेघवा नवान् यः कवासुखः B.
१७–[ पा० ६।३।१०७ ] कं चोष्णे B. C.
१८–कुसखः C.
१९–पि यस्तस्य B. C.
२०–घृंस B. घृंस्य C.
२१–ततस्नो C.
२२–यातिरप्यूध B. C.
२३–तनुष्टि B. C.

इलीविशि इत्यनवगतम् । इलाबिलशय इत्यवगमः । इलो बलमन्नं तन्निष्पत्ति- हेतुभूतमुदकमत्रेलाशब्दवमायेण इलाशब्देनोच्यते । बिले उदके शेते इति बिलेशयः सन् वर्णव्यापत्तिलोपादिना इलीबिशः । मेघोऽभिधेयः उदाहरणम्—

न्याविध्यदिलीबिशस्य दृह्ला वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥

हिरण्यस्तूपस्य कस्यचित् । न्याविध्यद् निकृत्य विद्धवान् कस्य ? इलीबिशस्य मेघस्य दृह्ला दृढानि दुर्वधानि । कानि ? सामर्थ्यादुदकनिर्गमबिलानि । तं शृङ्गिणं श्रृङ्गिणीति ज्वलतो नामधेयं दीप्तिमन्तमित्यर्थः । व्यभिनद् विविधं भिन्नवान् । शुष्णं बलनामेदं साम- र्थ्याच्चान्तर्नीतमत्वर्थं द्रष्टव्यम् । बलवान् । कः ? इन्द्रः कस्यचिद् बलान्युदुद्घट्टितवान् । कंचित्तु शतशर्करं भग्नवानित्यर्थः ।

परोऽर्धर्चादिः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । यावद् यत्परिमाणं तरः इलनामेदं स्वसेनालक्षणं बलं हे मघवन् यत्परिमाणं च ओजः शारीरलक्षणं बलम् । यावदितिश्रुतेः साकाङ्क्षत्वात् तावच्छब्दोऽध्याहार्यः । तावता सर्वेण वज्रेण च स्वशत्रुमवधीः छान्दसत्वाद् वर्तमाने लुङ् जहि । अस्मदीयं वा पृतन्युं संग्रामेम् ।

कियेधा इत्यनवगतम् । कियद्धा क्रममाणधा इति वावगमः । कियदप्यपरिमितं स्वबलं धारयति । क्रममाणं वाभिमुखं परबलं धारयति निरुणद्धीति दधातेर्विचि रूपम् । इन्द्रो विशेष्यः । उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकोनविंशः खण्डः । ]

---

१—इलीबश C. २—इलाबिशया C.
३—उप्रेलाशब्द B. अयं पाठः सन्दिग्धः ।
४—इलीबशः C
५—[ऋ० १।३३।१२] 'न्याविध्यत' इत्येव प्रतीकम् B. C.
६—चित् ता B. चित् ताव C.
७—विधवान B.
८—'कस्य' इति त्रुटितम् B.
९—र्धचंद प्रत्य C.
१०—परिमाणां B. C. ११—तरं B.
१२—शरीरलक्षणं B.
१३—तावतः B. तोव्रत C.
१४—संग्रामकाम C.
१५—कियन्धा B. C. 'कियद्धाः' इति सविसर्गः पाठो युक्तः ।
१६—इति वा वेत्यवगमः B. C.
१७—किध्यपरि B. कियदर्वपरि C.
१८—विरुणन्धीति C. १९—विशेष्यम् B.
२०- आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ विंशः खण्डः । ][1]

अस्मा इदु प्र भर तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥[2]

नोधस आर्षम् । अस्मै इदू पदपूरणौ, प्रभरा प्रहर[3] तूतुजानः क्षिप्रनामेदं त्वरमाणः । हिंसार्थो वा तुजिः, हिंसन् । वृत्राय वज्रम् एनं वृत्रं हन्तुं क्षिप्रं वज्रं क्षिपेत्यर्थः । ईशानः कियेधाः प्रत्यक्षकृतोऽयं मन्त्रः । अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्ते चैते । अतो यत्त[4]च्छब्दावध्याहृत्य एकवाक्यतां नेये । यस्त्वमीशान ईश्वरः कृत्स्नस्य जगतः कियेधाश्च कियतोऽप्यविज्ञायमानं परिमाणस्य बलस्य धारयिता महाबल इत्यर्थः । स प्रहर वज्रमिति । प्रहृत्य च गोर्न पर्व विरदा[5] यथा नो[6] गोविकर्ता गोः पर्व अवयवं विरदेत् तद्वत् विरद विकृन्त[7] मेघमित्यर्थः । तिरश्चा तिरश्चीरम्[8] । इष्यन्नर्णांसि[9] 'इष गतौ'[10] सामर्थ्याच्चेहान्तर्नीतण्यर्थो द्रष्टव्यः, गमयन्नुदकानि[11] । अथवा इच्छतेरेवायं व्यत्ययेन श्यन् विकरणम्[12] इच्छन्नुदकानि । अपां चरध्यै भुवं प्रति[13] चरणाय[14] न ह्यविकृत्ते[15] मेघे तदन्तर्गता आपो भुवं गन्तुं प्रतिसमर्था[16] इति ।

भूमिरित्येनवगतम्[17] । भ्राम्यतेरिति धातुनिर्देशः । भ्रमणमित्यवगमः[18] । भ्रमिता स्वयं भ्रमितान्येषामित्यर्थः । उदाहरणम्—

इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम्[19] ॥

हिरण्यस्तूपस्य । अत्रेतिहासः-हिरण्यस्तूपो यागायाग्निं विहृत्य रक्षोभयाद्[20] दूरं[21]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।६१।१२ ] 'अस्मा इदु प्र ( व B. प C. )' इत्येव प्रतीकम् B. C.
३–प्रहरतु प्रहर B. C.
४-'त्त' इति त्रुटितम् B. C.
५–गोर्णे (र्न C.) व पर्व विर यथा B. C.
६–'नो' इति नास्ति C.
७–वि (पि C.) कृते B. C.
८–सन्दिग्धमिदं पदम् ।
९–इष्यन्तन्नर्णा (र्ना B.) सि B. C.
१०–[ धा० ४।२१ ]
११–गमयातु (यादन्तु C.) दकानि B. C.
१२–अत्र 'विकरणः' इति युक्तं स्यात् ।
१३–परि C.
१४–वरणाय B.
१५–न ह्यविकृत्ते C.
१६–'भुवं प्रति गन्तुं समर्था इति स्पष्टं स्यात् ।
१७–'भृ' 'रि' इति त्रुटितम् C.
१८–'भ्र' इति त्रुटितम् 'मण इत्य' C.
१९–[ ऋ० १।३१।१६ ] 'इमामग्ने' इत्येव प्रतीकम् B. C.
२०–'भयात्' इति त्रुटितम् B.
२१–दुरं B. C.

प्रणश्य गतेषु रक्षस्सु प्रत्यागतः कृतापराधाभिप्रायेण अग्निमाह । ईमां[1] हे अग्ने शरणि[2] 'शृ हिंसायाम्'[3] मीमृषः[4] 'मृषतिस्तितिक्षायाम्'[5] इत्यस्य स्वार्थिको णिच्, लोडर्थे[6] लुङ्, मृषस्व[7] क्षमस्व नोऽस्माकम्। कतमः[8]? उच्यते[9]। इममध्वानं त्वा यमगाम[10] विहृत्य[11] अनिष्ट्वा रक्षोभयाद् गतस्य दूराद्दूरम्। किं कारणमेवमुच्यते? यस्माद् आपिः[12] प्राप्तो ज्ञातिः[13] स्वम्। कीदृशः? पिता पितृस्थानीयः। प्रमतिः प्रकृष्टे मतिः प्रमतिरनुग्रहपरः। केषाम्? सोम्यानां[14] सोमार्हाणां सोमसम्पादिनाम्। किञ्च भ्रमिरसि[15] लोकत्रये विभ्रमितासि त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थः। ऋषिकृत् तमोपघात[16]द्वारेण च दर्शनकृद् मर्त्यानामेव। इतीयमिति[17]हासपक्षेण योजना।

नित्यदर्शने त्वन्यथा योज्यते। इमां हे अग्ने शरणि संसारप्राप्तिलक्षणां हिंसां मीमृषः मृजेरियं[18] जकारस्य षकारापत्त्या छान्दसं रूपं न मृषेः, मार्जयापनय। अस्माकमिमं संसाराध्वानं यमगाम प्राप्ताः स्मः। दूरान्मरणप्रबन्धरूपायाः सृष्टेः प्रभृति आसंसारमित्यर्थः। किं कारणम्? यस्मात्त्वामापिः[19] पिता[20] प्रमतिः सोम्यानां यस्मा[21]च्च भ्रमिरसि[22] भ्राम्यतेर्ण्यन्तस्येदं रूपम्, भ्रमयितासि भ्रान्तेः कर्ता। ऋषिकृद् दर्शनकृच्चासि सम्यग्ज्ञानकारणश्चासि[23] मनुष्याणाम्। एतदुक्तं भवति भ्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्तासि। मर्त्यानां त्वदायत्तौ च संसार[24]मोक्षौ। त्वं च पितृवत् सर्वयजमानानामनुग्रहपरः। नोऽस्मान् सम्यग्ज्ञानोपादानेन मोचयास्मात् संसारादिति। तथाच स्मरणम्—

सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते[25]॥ इति॥

विष्पितः[26] इत्यनवगतम्। विप्राप्त इत्यवगमः। विकारोपजनवर्णलोपादिर्द्रष्टव्यः[27]।

---

१–इमं B. २–अरणिं B. रिणीं C.
३–[धा० ९।१६] धातुपाठे 'शॄ' इति दीर्घपाठः।
४–वि (मि C.) मृषं B. C.
५–[धा०४।५८] 'मृष तितिक्षायाम्' इति धातुपाठे पाठः। मृषस्ति (स्ती C.) ति B. C.
६–लोभूर्थे C. ७–मृष्यास्य C.
८–अत्र 'कतमम्' इति युक्तं स्यात्।
९–उच्यके C. १०–यमयगाम C.
११–ब (वि C.) भृत्यां विभृत्यानिष्ट्वा B. C.
१२–आविः B. C. १३–प्रापो ज्ञातिस्वं C.
१४–सौम्यानां B. C.
१५–भ्रमसि B. C. १६–तं मापघात B.
१७–तृतीयमिति B. C.
१८–मृदेदं B. C.
१९–त्वामपि B. २०–प्रता B. C.
२१–यस्माप B. यस्मा च C.
२२–भ्र (भू C.) मिरसि B. C.
२३–'ण' इति त्रुटितम् C. '०कारणश्चासि' इति युक्तं स्यात्।
२४–'सं' इति त्रुटितम् C.
२५–[मनु० ६।७४] दर्शनेन विहीनं तु B. C.
२६–विष्पत C. २७–लोपादि द्रष्टव्यम् C.

विस्तीर्ण इत्यर्थः । उदाहरणम्---

इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति ।
प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन् ॥

वसिष्ठस्य । इमे प्रकृतौ मित्रो वरुणो अर्यमा च अनिमिषा अनिमिषेण महता यत्नेनेत्यर्थः । दिवो द्युलोकात् पृथिव्याः पृथिवीलोकाच्च चिकित्वांस इदमप्यस्य कर्म अत्रानेन गन्तव्यमित्येतज्जानन्तः । अचेतसम् अज्ञं कं देशं केन वा यास्यामीत्येतदजानन्तमित्यर्थः । प्राणिनं नयन्ति यत्रानेन परिपक्वस्वकर्मवशाद् गन्तव्यम् । यत एनान् मित्रादीन् ब्रवीमि प्रव्राजे चित् प्रकर्षेण व्रज्यते यस्मिन् स प्रव्राजो मरणकालस्तस्मिन् । चिच्छब्दो यद्यर्थे, यदि नद्योऽस्याः संसारनद्या गाधं प्रतिष्ठास्थानं येनास्मिन् संसारनदीश्वभ्रे निमज्जन्तो धारयामहे तज्ज्ञानं कर्म वा किञ्चिदस्ति ततः पारं कूले नोऽस्मान् विष्पितस्य विप्राप्तस्य विस्तीर्णस्य संसारनदीश्वभ्रस्य पर्षन् पारयन्तु गमयन्तु प्रापयन्त्वित्यर्थः । अनादिश्च संसारः श्लिष्यते अन्तवांश्चापवर्गेण । अतः पारमपवर्ग इहाभिप्रेतः ।

तुरीपमित्यनवगतम् । तूर्णापीत्यवगमः । उदकमभिधेयम् । तद्धि तूर्णमाप्नोत्येवंशीलं तूर्णापि सत्तुरीपम् । उदाहरणम्---।

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
विंशः खण्डः । ]

---

१--[ऋ० ७।६०।७]'इमे दिवः'इत्येव प्रतीकम् B. C.
२--वसिष्ठस्ये B.
३--प्रकृतो B. C. * 'वरुणोऽर्यमा' इति युक्तम् ।
४--गतद्व्यमित्ये B. गतव्यमित्ये C.
५--प्रव्रुजो B. C.
६--परं कुलेन (त्र C.) मास्मान् (त C.) B. C.
७--विष्पतस्य B. C.
८--श्लिष्यन्ते B. C.
९--'अन्त' इति त्रुटितम् B.
१०--पर C. अन्तःपुरम B.
११--तूर्णावित्यत्र B. C.
१२--आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ एकविंशः खण्डः । ][1]

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना ।
त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः[2]॥

दीर्घतमसः[3]। तत् नोऽस्मदर्थे[4] तुरीपं[5] तूर्णापि तूर्णव्यापि अद्भुतं महन्नामेदम्, सारतश्च महद् महत्त्वं तदिहाभिप्रेतं माभूत् पौनरुक्त्यं परेणेति तेन सारतो महदित्यर्थः। पुरु वाशब्दश्चार्थे बहु च वृष्ट्युदकं परिमाणतः। अरं पर्याप्तश्च सर्वकामेभ्यः पुरु विश्वमेतत्, क्रियाविशेषणम्। कथम्? विश्वं पुरु सुष्ठु भृशमित्यर्थः। त्मना[6] आत्मनैव त्वष्टा मध्यमस्थानः पोषाय पुष्ट्यर्थं विष्यतु[7] स्यतिरुपसृष्टो विमोचने विमुञ्चति। राये षष्ठ्यर्थे एषा चतुर्थी। कस्य पुष्ट्यर्थम्? रायो धनस्य गवादेः क्वचित् मुञ्चतु नाभा नाभौ जगतो*भिभूतायां वेद्यां[8] वा नोऽस्माकं स्वभूतायाम् अस्मयुः त्वष्टृविशेषणमेतत्, अस्मान् कामयमानस्त्वष्टा। महत् सम्भृतमिति अदभुतशब्दविर्वचनं द्रष्टव्यमिति[9]।

रास्पिन इत्यनवगतम्। कथम्? रपतेः रसतेर्वा कर्तरि चेति कर्मसाधनो घञ् भावे वा रासो[10] वा रापो[11] वा शब्द उच्यते तद्वद् रापि वा रासि वा सत् सकारपकारोपजनेन[12] रास्पिन्[13] शब्दः। बहूदकं स्तोतृं[14] वोच्यते। ततस्तादर्थ्याद्[15] स्तीत्यर्शआदित्वादकारः[16] प्रकृतिभावश्च द्रष्टव्यः, रास्पिनो[17] दण्डिमती[18] शालेति यथा। अतश्चं[19] शब्दश्च तोदकेन तद्वा। मेघोऽभिधेयः। उच्चार्यमाणेन स्तोत्रेण स्तोता वा। उदाहरणम्—

उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै ।
प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः[20]॥

---

1–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।

2–[ ऋ० १।१४२।१० ] 'तन्नस्तुरीपं' इत्येव प्रतीकम् B. C.

3–घि ( दी C. ) श्च तमसः B. C.

4–'अस्मद' इति त्रुटितम् B.

5–तुरीवं C.

6–आत्मना C.

7–विष्टयचतु B. * 'तो ताभिभू०' इति युक्तम्।

8–यां वा वेद्यां वा B. यां वैद्यां वा C.

9–'इति' इति B. 'ति' इति च C. पुस्तके त्रुटितम्।

10–'रासो वा' इति नास्ति B.

11–'रापो वा' इति नास्ति C. रावो वा B.

12–कारवकारो B. C.

13–राप्सित् C.

14–स्तोतुं B.

15–'द' इति त्रुटितम् C.

16–[ पा० ५।२।१२७ ]

17 राप्सनः B. राप्सिनः C.

18–दण्डिमनी C.

19–अस्य वाक्यस्य पाठः सन्दिग्धः।

20–[ऋ० १।१२२।४] 'उत (द C.) त्या मे' इत्येव प्रतीकम् B. C.

कक्षीवत आर्षम् । उतशब्दोऽप्यर्थे । त्यच्छब्दः[1] समानार्थः । त्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यौ पूर्वमहं स्तुतवान् वैश्वदेवत्वात् सूक्तस्य त्यौ तावप्यश्विनौ मे तादर्थ्यचतुर्थ्येषा, ममार्थाय मदनुग्रहायेत्यर्थः । यशसा यशःशब्दोऽत्र धननामा अन्ननामा वा कीर्तेश्च[2] पर्यायो वा अन्तर्नीतमत्वर्थश्च द्रष्टव्यः । तेन धनवन्तौ[3] वा कीर्तिमन्तौ[4] वा । श्वेतनायै[5] श्वेतनेत्येतद्[6]पठितमपि उषोनाम द्रष्टव्यम् । षष्ठ्यर्थे चात्र चतुर्थी, तच्छ्रुतेश्च[7] उदयकाल इति शेषः । उषस उदयकाले व्यन्ता व्यन्तौ खादन्तौ पुरोडाशादीनि[8] पान्ता[9] पिबन्तौ[10] सोमम् । औशिजः[11] इत्यहं कक्षीवान्[12] हुवध्यै[13] ह्वयतेरर्चतिकर्मणः । एतद्रूपं कध्यै[14]प्रत्यये । ओषधिवनस्पतयः प्रसोरणे[15] च स्तोतुमिच्छामीति शेषः । प्रशब्दः कृणुध्वमित्येतेन[16] सम्बध्यते । व इत्यपि प्रथमायाः स्थाने वसादेशश्छान्दसत्वात् । यूयमपि हे पुत्रादय[17] ऋत्विजो वा नपातमपां प्लुवान्नपात् सविता[18] । कथम् ? 'अद्भ्यो[19] हि वैद्युतात्मना अग्निर्जायते अग्नेः सविता अग्नेर्वा आदित्योऽजायत[20]' इति श्रुतेः । अथवा पन्नर्वा[21] अग्निद अद्भ्य ओषधिवनस्पतयोऽग्नि नपातम् । प्रकृणुध्वं[22] करोतिरत्र क्रियासामान्यवचनत्वात्[23] स्तुतौ वर्तते प्रकर्षेण स्तुत[24] । प्रमातरा[25] प्रकर्षेण मातृभूते द्यावापृथिव्यौ स्तुत । कस्य मातृभूते ? उच्यते । रास्पिनस्य स्तुतीनां रापितू रासितुर्वा । आयोर्मनुष्यनामेदं मनुष्यस्तोतुरित्यर्थः । मेवस्य वा स्वेनानुग्रहेण निर्मात्रोरनयोर्गमनस्वभावकस्य ।

ऋञ्जतिरित्यनवगतं धात्वर्थमिति यत आह ऋञ्जतिः प्रसाधनकर्मा । विषमस्य[26] समीकरणं वा वर्गवा[27] करणादेवमुच्यते । प्रसाधनमात्मसात्करणं तदर्थ इत्यर्थः । अस्य च

---

१–'त्यच्छब्दस्तच्छब्दसमानार्थः' इति युक्तं स्यात् ।
२–कीर्तिश्च B. C. ३–धनवन्तो B.
४–कीर्तिमन्तो B.
५–श्व (श्च C.) तनायै श्व (श्च C.) तने B. C.
६–त्येतदप्यपठि B. त्येदपठि C.
७–क्तृतच्यूतेश्च B. चतु तच्चूतेश्च C.
८–डाशादिनि B. ९–वान्ता C.
१०–वन्तौ पिब च सोमं C.
११–औधिज C. १२–कर्षीवान् B. C.
१३–'व' इति द्विर्लिखितम् B. C.
१४–कथ्यै B.
१५ अयं पाठः सन्दिग्धः ।
१६–'न सम्बध्यते' इति द्विर्लिखितम् C.
१७–हे म पुत्रा C. अत्र कदाचित् 'हे मम पुत्रादयः' इति वा पाठो भवेत् ।
१८–सपिता B.
१९–अद्भयो हि B.
२०–[ अनुपलब्धमूलमिदं वचनम् ]
२१–अत्रायं पाठः सन्दिग्धः ।
२२–मा कृणुध्वं B. C.
२३–'त्व' इति त्रुटितम् B.
२४–'त' इति C. पुस्तके त्रुटितम् ।
२५–'प्र' इति नास्ति B.
२६–विषयस्य B.
२७–'वर्गीकरणात्' इति वा पाठोऽत्र भवेत् ।

भाऋजीक इत्येतेन गतार्थतां मन्यमानो भाष्यकारो निगमं नाध्यगीष्ट।[1] तथोदाहरणं प्रदर्श्यते—

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् ।
यजिष्ठमृञ्जसे गिरा ॥[2]

वामदेवस्यार्षम् । अग्निरुच्यते । दूतं वः द्वितीयैकवचनस्यायं वसादेशश्छान्दसत्वात्, त्वाम् । कीदृशम् ? विश्ववेदसं[3] सर्वस्य वेदितारं सर्वज्ञमित्यर्थः । सर्वधनया[4] हव्यवाहं हविषां वोढारम् । अमर्त्यं मरणवर्जितम् । यजिष्ठम् अतिशयेन यष्टारम् । ऋञ्जसे व्यत्ययेन[5] मध्यम उत्तमस्य स्थाने ऋञ्जे गिरा स्तुत्या । प्रदर्शनमिदं हविषो दानेन स्तुत्या च प्रसाधयामि[6] ।

ऋजुरित्यप्यस्यैव ऋञ्जतेः प्रसिद्धः, अकुटिल इत्यर्थः । उदाहरणम्—

ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् ।
अर्यमा देवैः सजोषाः[7] ॥

गौतमस्य । अस्मान् मित्रो वरुणश्च यत्र स्वर्गे ब्रह्मलोके वास्माभिः कृते कर्मणि गन्तव्यं तत्र नयतु विद्वान् । किम् ? सामर्थ्यात् कर्मफलविपाकं भक्ततां वास्माकम् । नच केवलौ मित्रावरुणौ । किं तर्हि ? अर्यमा[8] च देवैः सह सम्प्रीयमाणः ।

प्रतद्वसू इत्यनवगतम् । प्राप्तवसू[9] इत्यवगमः । पकारलोपोपजनह्रस्वत्वादीनि[10] द्रष्टव्यानि । अश्वावभिधेयौ । उदाहरणम्—

इह त्या सधमाद्या युजानः सोमपीतये ।
हरी इन्द्र प्रतद्वसू अभि स्वर[11] ॥

नारदस्यार्षम् । इह अस्मद्यज्ञे[12] त्या तौ सधमाद्यौ[13] सह मादयितव्यौ युजाना* रथे आत्मीये । किमर्थम् ? सोमपीतये आत्मनः सोमपानार्थम् । हरी यावात्मीयावश्वौ हे इन्द्र प्रतद्वसू प्राप्तऋजीषाख्यधनौ । अभिस्वर स्वरतिर्गतिकर्मा[14] अभिगच्छ ।

हिनोत[15] इत्यनवगतम् । प्रहिणुत[16] इत्यवगमः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकविंशः खण्डः ।[17] ]

---

१–निगमयन्नध्यष्ट B.
२–[ऋ० ४।८।१] 'दूतं वः' इत्येव प्रतीकम् B. C.
३–विश्वदेवसं C. ४–सन्दिग्धमिदं पदम् ।
५–त्यव्ययेन C. ६–प्रमाधयायि B.
७–[ ऋ० १।९०।१ ] 'ऋजुनीति ( ती ) नः' इत्येव प्रतीकम् B. C.
८–अर्यया B.
९–प्राते वसू C. १०–जनः ह्रस्व B. C.
११–[ ऋ० ८।१३।२७ ] 'इह ( हे C. ) त्या' इत्येव प्रतीकम् B. C.
१२–अस्मभ्यं B. १३–सधमान्या B. C
* 'युजानो' इति युक्तम् ।
१४–स्वरतिग्यतिकर्मा C.
१५–भिनोत C. १६–प्रहिअत C.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ द्वाविंशः खण्डः । ][1]

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् ।
ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीभूतनास्मभ्यमापः[2] ॥

कवषस्य । आप एकधनलक्षणा उच्यन्ते । 'हि गतौ'[4] सामर्थ्याच्चात्रान्तर्नीतण्यर्थः । हिनोत गमयत[5] समापयत वा । नोऽस्माकम्[6] । अध्वरं[7] यज्ञम् । किमर्थम् ? देवज्या चतुर्थ्या लुग् द्रष्टव्यः[8], देवयज्यायै देवयागार्थम् । हिनोत[9] च गमयत ब्रह्म स्तुत्याख्यं वर्धयत स्तुतिं प्रति निमित्तभावादेवमुच्यते । किमर्थम् ? सनये सनिलाय[10] यज्ञफललक्षणानां धनानाम् । किञ्च यदिदमृतस्य यज्ञस्य योगे सम्बन्धिनि सप्तमीश्रुतेर्वर्तत इति शेषः । यज्ञसम्बन्धिता-मापन्न इत्यर्थः । किं पुनस्तत् ?·········भ्यां युज्यमानत्वात्[11] योगशब्देन शकटमुच्यते । योग इति सामीपिकमधिकरणम् । गङ्गायां गाव इति यथा । यज्ञसम्बन्धिनो[12] हविर्धानस्य शकटस्य समीपे ऊधःस्थानीयमधिषवणचर्म एतत् प्रति सोमरसेन मिश्रीभूय विष्यध्वं विमुञ्चतात्मानं पूरयत तद्रसेनेत्यर्थः । तच्च कुर्वत्यः श्रुष्टीवरीः[13] सुखवतीर्द्वितीया प्रथमार्थे, सुखवत्यः सुखकर्य इत्यर्थः । भूतन भवत अस्मभ्यं हे आप एकधनाः ।

योगशब्दार्थकथनप्रसङ्गेन शकटं निराह शकृता युक्तं तद्विशिष्टेन शकृता गोमये-नोटति[14] मार्गे शकृन्मुञ्चतीत्यर्थः[15] । शनैर्वा तकति गच्छति गन्तृवशात्तु शब्देन वेत्थंभूतेन[16] तकति ।

चोष्कूयमाणः[17], चोष्कूयत इति पदद्वयमनवगतधात्वर्थम् । कुत एतत् यतः 'स्कुञ् आप्रवणे'[18] पठ्यते । इह च दानार्थः । अषोपदेशत्वाच्च[19] षत्वानवगमः । कथञ्चिद् दुदसनार्थ-[20]त्वादनेकार्थत्वमपि । उदाहरणम्—

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।

२—[ ऋ० १०।३०।११ ] 'हिनोता नः' इत्येव प्रतीकम् B. C.

३—आप एतधन C.

४—[ धा० ५।११ ]

५—हमयत B. C.

६—नस्यावम् B.

७—अध्वर्क B. अध्वत् C.

८—द्रष्टव्यम् B

९—हि नो तु च B. C.

१०—सनिलाय C. सन्दिग्धमिदं पदम् ।

११—त्वाभ्यागमश B. त्वाभ्योग C.

१२—न्धिना हवि B. C.

१३—श्रुष्टिवरीः ( नीः C. ) B. C.

१४—मये ताडयति C.

१५—मार्गेण श (C.) कृन्त (न्ते C.) नागती B. C.

१६—भूतन्तन्तुकति B. C.

१७—माणञ्चोष्कू C.

१८—[ धा० ९।६ ] स्कुङ् C.

१९—एषोपदेश B.

२०—ध्रु (यु C.) दसना B. C.

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥

हिरण्यस्तूपस्य । निशब्द असक्त इत्येतेन सम्बध्यते । सर्वसेनः समग्रया सेनयोपेत इन्द्रः । इषुधीन् तूणानि असक्त 'षञ्ज सङ्गे' सजति आत्मनः पृष्ठे रथे वा बध्नातीत्यर्थः । निषज्याय ईश्वर इन्द्रः शत्रूणां स्वभूता गाः समजति 'अज गतिक्षेपणयोः' सम्यक् क्षिपति स्वराष्ट्रं प्रति प्रेरयति अपहरतीत्यर्थः । यस्य शत्रोर्गा अपहर्तुं वष्टि कामयते तस्य सर्वस्यापहरति न केनचित् प्रतियोद्धुं शक्यत इत्यर्थः । अथवा दानकाले यदर्पणं तदत्र क्षेपणमभिप्रेतम् । आश्रितेभ्यो दानकाले सम्यक् क्षेपयति अर्पयति यस्यार्पयितुं कामयते यस्मै दातुमिच्छति तस्मै ददातीत्यर्थः । अथवा गावोऽत्र आपोऽभिप्रेताः । निषज्येषुधीन् मेघं घ्नन् अपः सम्यक् क्षिपति । यस्य वष्टि यजमानस्य वा ।

परोर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । चोष्कूयमाणः स्कुनातेर्दानार्थस्य यङि रूपम् । अत्यर्थं पुनः पुनर्ददत् हे इन्द्र भूरि बहु वामं वननीयमत्यन्तोत्कृष्टम् । किम् ? सामर्थ्याद्धनं मा पणिर्भूः पणिर्वणिगुच्यते, मा वणिक्सदृशोऽल्पदो भूरित्यर्थः । अस्मदधि अस्माकमुपरि अस्मभ्यं माल्पं कदाचिददा इत्यर्थः । हे प्रवृद्ध शरीरेण महन् ।

स्कुनातेर्दानार्थतां दर्शयन्नाह ददिन्द्रेति । अनेकार्थत्वप्रदर्शनायाह एधमानविळित्यादि ।

शृण्वे वीर उग्रमुग्रं दमायन् अन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥

गर्गस्यार्षम् । शृणोतेर्व्यत्ययेनात्र आत्मनेपदोत्तमैकवचनं शप् विकरणः कर्मणि लट् प्रथमैकवचनस्य स्थाने । श्रूयते प्रख्यायत इत्यर्थः । वीरः शूरः इलामि । किं कुर्वन् ?

---

१–[ ऋ० १।३३।३ ] 'नि सर्वसेवः ( नं C. )' इत्येव प्रतीकम्

२–आसक्त B. 'निशब्दोऽसक्त' इत्युचितम्

३–रूपाणि C. ४–[ धा० १।१०२२ ]

५–संजति C. ६–आत्मानं B.

७–[ धा० १।२३० ]

८–प्रतियोद्धुं C. ९–कस्मै C.

१०–त्र वाभिप्रेताः B. गवोऽत्रावोभिप्रेताः C.

११–तत्र: B. C. १२–वज्रे B. C.

१३–कृतवान (न C) भिन्नं B. C.

१४–नाणं B. C. *'स्कुनाते०' इति युक्तं स्यात् ।

१५–मा पणिभूः B. C.

१६–माल्यं B. माल्लं C. १७–चिद्दा B.

१८–इदिन्द्रेति B. ददिन्द्रे इति C.

१९–विलिकादि B. विलितादि C. 'मानद्विळि०' इति युक्तम् ।

२०–[ ऋ० ६।४७।१६ ] 'शृण्वे (विरः C.)' इत्येव प्रतीकम् B. C.

२१–'र्ग' इति त्रुटितम् C.

२२–शरश्च C. २३–प्रत्ययेक B.

२४–'वीरः शूरः' इति त्रुटितम् B. इलमं ति सन्दिग्धः पाठः ।

उच्यते । अप्रमुप्र दभायन यावान् कश्चिदुग्रोऽप्रसह्यः शत्रुस्तं सर्वं दमायन्[1] । अन्यमन्यं चात्मनः[2] स्तोतारम्[3] । अतिनेनीयमानो[4]ऽतिशब्दः पूजायाम्, अतिपूजितं शोभनमर्थं नयन् । किम् ? सामर्थ्यात् समृद्धिम्[5] । सर्वं च स्तोतारमात्मनः समृद्धं कुर्वन्नित्यर्थः । किञ्च एधमानद्विट् द्रूध्यतां[+] द्वश्च । किं सर्वेषाम् ? न[6] । किं तर्हि ? अयष्ट्रून्[*] । कुत एतत् ? सामर्थ्यादुभयस्य दिव्यस्य पार्थिवस्य च धनस्य राजा ईश्वरः । चोष्कूयते, स्कुनातिरत्र व्युदसनार्थे । अत्यन्तं व्युदस्यति निराकरोति । कीदृशान् ? विश. 'विश प्रवेशने'[7] अनुप्रविष्टानात्मीयभूतानाश्रितानपित[8] इत्यर्थः । इन्द्रो मनुष्यान् । किं सर्वान् ? न । किं तर्हि ? ऋद्धानयष्ट्रून् । कुत एतत् ? एधमानद्विडिति वचनात् द्विष्यमाणस्य च व्युदस्यमानत्वात् ।

एधमानानहेति अहशब्दो व्युदस्यतीत्यस्यानन्तरो द्रष्टव्यः । व्युदस्यत्येव । अतिनेनीयमान इत्यस्यार्थवचनम् अन्वतो[10]ऽभ्यादधातीति । उच्छ्रितान् करोतीत्यर्थः । उभयोर्नामाख्यातयोर्निर्वचनं चोष्कूयमाण[11] इत्यादि ।

सुमदित्यनवगतम् । स्वयमित्यवगमः । उदाहरणम्—

> उप॒ प्रागा॑त् सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒माशा॒ उप॑ वी॒तपृ॑ष्ठः ।
> अन्वे॑नं॒ विप्रा॒ ऋष॑यो मदन्ति दे॒वानां॑ पु॒ष्टे च॑कृमा सु॒बन्धु॑म्[12] ॥

प्रकर्षेणो गागात् । लोडर्थे[13] लुङ् , उपागच्छतु । सुमत् स्वयमेव । अत्रैकवाक्यतायै यत्तच्छब्दौ योग्यतार्थसम्बन्धावध्याहार्यौ । यन्मे मम मदीयमिति शेषः । अधायि[14] शुद्धोऽप्ययं दधातिर्निरूर्वार्थो द्रष्टव्यः । न्यधायि निहितम् । यन्मम मदीयम्[15] । किं पुनस्तत् ? उच्यते । यज्ञेनेदं यत्स्यादिति[16] । सामर्थ्याद् यज्ञसाध्यं विशिष्टं फलम् । तदर्थं देवानां यागाङ्गभूतानां[17] या आशा प्रार्थना हविर्भूतमिममश्वं भक्षयेत्येवंरूपा[18][19] । उपेत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः, उपागच्छतु । कः[20] ? वीतपृष्ठः वीतेः कान्तिकर्मणः वीतं कान्तं पृष्ठं यस्य

---

१-सर्वदमाय B. C. 'दमयन्' इति युक्तं स्यात्
२-मन्यश्चात्मन B. C. ३-'ता' इति त्रुटितम् C.
४-इति नेनीय B. C. ५-समृद्धि C.
+ 'ऋध्यतां' इति युक्तम् ।
६-'न' इति नास्ति B. C.
* 'अयष्ट्रूणाम्' इति युक्तं स्यात् ।
७-[ धा० ६।१४३ ]
८-'अपित' इति सन्दिग्धं पदम् ।
९-मानाद्विलित् वच B. C.
१०-'असुन्वतः सुन्वतोऽभ्यादधाति' इत्येवं मूल निरुक्ते पाठः ।
११-चूष्कूयकाण B.
१२-[ ऋ० १।१६२।७ ] 'उप प्रागात्' इत्येव प्रतीकम् B. C. १३-लोधर्थे C.
१४-अधानि C. १५-मदीयः C.
१६-यस्स्या B. यस्या C.
१७-यागां गर्भभूता C.
१८-'क्ष' इति त्रुटितम् B. C.
१९-रूपाम् B. C.
२०-कं पीतपृष्ठं पीतेः कान्तिकर्मणः पीतं कान्तं B. C.

सः । अश्वमेधसंभूतोऽयमश्व[1] इत्यर्थः । उपागच्छन्तं[2] च अनुशब्दो मदन्तीत्येतेन सम्बध्यते । ऐनमश्वमनुमदन्ति[3] । मदिरत्र सामर्थ्यान्मतेरर्थे* । लोडर्थे च लट्, अनुमन्यन्ताम्[4] । के ? विप्रा मेधाविन ऋषयश्च । देवानां पुष्टे पोषणं पुष्टं भावे निष्ठा निमित्तार्थे च सप्तमी, पोषणनिमित्ते[5] पुष्ट्यर्थमित्यर्थः । चकृत कृतवन्तः । सुबन्धुं[6] सुबन्धनं यूपे[7] रशनया सम्यग् बद्धमित्यर्थः ।

आश्वमेधिक इति प्रकरणमनुसारयति । प्रकरणमप्यर्थाभिव्यक्तावलम्मित्यभिप्रायः[8] । तथाच शास्त्रान्तरे वक्ष्यति 'प्रकरणश एव मन्त्रा निर्वक्तव्याः'[9] इति ।

दिविष्टिषु इत्यनवगतम् । दिव एषणीषु इत्यवगमः । 'इषु इच्छायाम्'[10] इत्यस्य वा करणसाधनः क्तिन् । द्यौर्गम्यते[11] प्राार्थ्यते वा याभिस्ता यागक्रिया इष्टयश्च[12] सत्यो दिविष्टयः । उदाहरणम्—

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।
राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि[13] ॥

देवातिथेरार्षम्[14] । स्थूरं स्थूलं परिमाणतः विपुलं सदित्यर्थः । किं तत् ? राधो धनम् । शताश्वं शतेनाश्वानां[15] युक्तम् । कुरुङ्गस्य[16] कुरुङ्गनाम्नो राज्ञः । त्वेषस्य 'त्विष दीप्तौ'[17] अस्य पचाद्यचि[18] त्वेषस्य । सुभगस्य सुधनस्य स्वभूतासु दिविष्टिषु स्वर्गसाधनभूतासु यागक्रियासु या रातयस्तासु । यागाङ्गभूतेषु[19] दक्षिणालक्षणेषु दानेष्वित्यर्थः । तुर्वशेषु तुर्वश इति मनुष्यनाम ततः सप्तमी निर्धारणे,मनुष्याणां मध्ये वयम् अमन्महि[20] मन्महीति याच्ञायामत्र[21] । सामर्थ्यात्तत्पूर्वको लाभो लक्ष्यते । अलभामहि लब्धवन्तो वयम् ।

स्थूलं निगमप्रसक्तं निराह एकत्र सहिता आभिमुख्येन स्थिता मात्रा अवयवा यस्य स महानित्यर्थवचनम् । स्थूलप्रतियोगिप्रसङ्गेन अणुपरिमाणं[22] निराह अणुः अनु[23] स्थवीयांसमिति

१–साभूतोऽय B.    २–गच्छतं च B. C.
३–एवमश्व B.    *'मने॰' इति युक्तम्
४–अनुमत्यन्ताः B.
५–पोषणे निमित्ते B. C.
६–'सुबन्धुं' इति नास्ति B. C.
७–रूपे B.
८–त्रयमि B. रणमभ्यार्थापिव्याक्तावलमि C.
९–[ अनुपलब्धमूलमिदम् ]
१०–[ धा॰ ६।७० ]
११–धौगभ्य B. यौगम्य C.
१२–'च' इति नास्ति C.
१३–[ ऋ॰ ८।४।१९ ] 'स्थूरं राधः' इत्येव प्रतीकम् B. C.
१४–तिथेराषु C.
१५–'श्वा' इति द्विर्लिखितम् C.
१६–'कुरुङ्गस्य' इति नास्ति B. C.
१७–[ धा॰ १।१०२६ ]
१८–[ पा॰ ३।१।१३४ ]
१९–'अङ्ग' इति त्रुटितम् C.
२०–'अ' इति त्रुटितम् B.
२१–याज्ञयामत्र C.    २२–आत्मपरिमाणं B. C.
२३–'अनु' इति नास्ति B. C.

अणुः स्थवीयसोऽनुं[1] पश्चात् ततोऽल्पपरिमाण इत्यर्थः। अनुपूर्वस्याञ्चेः[2] क्विनि स्थवीयांसमन्वञ्चतीति अन्वगिति[3] प्राप्ते उपसर्ग एवायं[4] कृतणत्वलुप्तनामकरणः[5]। लुप्तः क्वचित् प्रत्यय उत्तरपद इत्यर्थः। अस्य दृष्टान्तो यथा सम्प्रति भवं साम्प्रतं काल एवोच्यते। लुप्तेऽपि मध्यमे प्रतीतिर्वर्तमान एवोच्यते। भेदाभेदविवक्षाकृतो विशेषः। यथा वानस्पत्यं चतय[6] इति। कुरुं निराह कुरूनसौ पुत्रत्वे गतवान्। राजत्वेन कुलगमनाद्वा कुलीन इत्यर्थः[7]। कुलव्यवस्थागमनाद्वा। शत्रुकुलानि वा जेतुम्। प्रसङ्गादाह कुरुः[8] कृन्ततेः शत्रूंनसौ[9] छिनत्ति वा पापाचारानसाधून्वा। क्रूरमित्यप्यस्यैव[10] कृन्ततेः कर्म वा व्याघ्रादि वा तदप्युच्छिनत्ति उच्छेद्यं वा। अनुप्रसक्तं कुलं कुष्णातेर्[11]वृद्ध्यर्थस्य विकुषितं[12] हि तद् महदित्यर्थः। बहवो हि सनाभयः कुलमुच्यते।

दूत इत्यनवगतम्। तत्पुनः 'वाहिष्ठो वां हवानाम्[13]' इत्यत्र 'दूतो जवतेर्वा[14]' इत्येवं व्याख्यातम्।

जिन्वतीत्यनवगतम्। अत्र किल धात्वर्थोऽनवगतः। प्रीणनलक्षणे हि इचिदिविधिं[15] इत्यत्र जिन्वतेरपोऽभिप्रायः[16]। उदाहरणम्—

समानमेतदुदकमुच्चैत्यव चाहभिः।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः[17]॥

इति प्रसङ्गादुत्तरत्र[18] व्याख्यास्यते।

इति निरुक्तविवरणसमुच्चये
एकादशस्या-[षष्ठस्या-][19] ध्यायस्य
चतुर्थः पादः।
[द्वाविंशश्च खण्डः
समाप्तः।]

---

१–यस न पश्चात् B. C.
२–स्यां च (स्याञ्चः C.) क्वनि B. C.
३–अन्वचि प्राप्ते B. C.
४–णवायं C.
५–कृतौ त्वलुप्तनाम B.
६–'चतय' इति सन्दिग्धं पदम्।
७–'ह' इति त्रुटितम् B. C.
८–कुरुं B. C.
९–शतृनसौ C.
१०–करमित्यस्यैव B. C.
११–कृष्णाते B. C.
१२–विकूषितं B. C.
१३–[ऋ० ८।२६।१६]
१४–[निरु० ५।१] जपतेर्वा C. जवपतेर्वा B.
१५–अयं पाठः सन्दिग्धः।
१६–रवोऽभि C.
१७–[ऋ० १।१६४।५१] 'समानमेतदुदकम्' इत्येव प्रतीकम् B. C.
१८–[निरु० ७।२३] गामुत्तर C.
१९–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।

## [ अथ पञ्चमः पादः । ][1]

अमत्र[2] इत्यनवगतम् । अमात्र इत्यवगमः । मात्रा परिमाणम् । अपरिमाणो[3] महानित्यर्थप्राप्तवचनम्[4] । अभ्यमितो वा मिनातेर्मिनोतेर्वा[5] वधकर्मणः । अभ्यमितः सन् अमत्रः । उदाहरणम्—

महाँ अमत्रो वृजने विरप्श्यु १ ग्रं शवः पत्यते धृष्ण्वोजः ।
नाह विव्याच पृथिवी चनैनं यत् सोमासो हर्यश्वम् मन्दन् [6] ॥

विश्वामित्रस्य । इन्द्र उच्यते । महान् शरीरेण । अमत्रोऽमात्रोऽपरिमाणश्च बलेन अहिंसितपूर्वो[7] वा केनचित् । वृजने[8] वृजनशब्दः क्रियानिमित्तको बलनिमित्तो वान्तर्नीतमत्वर्थः संग्रामे द्रष्टव्यः । वर्ज्यन्ते[9] यत्र बाणैर्योद्धारस्तस्मिन्[10] व्रजनवति[11] बलवति वा संग्रामे । विरप्शिर्विरपणशील[12] आह्वानकृत् शत्रूणामभिभवितृ ओजो बलम् । किं बहु ? नाह विव्याच[13] अहशब्दो विनिग्रहार्थीयत्वादेवार्थे व्यचिर्व्याप्त्यर्थः, नैव व्याप्नोति पृथिवी चन चनेति[14] निपातः स्वार्थे तच्छुते[15]र्द्यौश्चेत्युपसंग्रहः, पृथिवी च द्यौश्च माहात्म्येन द्यावापृथिव्यावप्यनेनैव[16] व्याप्नुत इत्यर्थः । यच्छब्दो यदेत्येतस्यार्थे व्यत्ययेन वा नपुंसकम् । यदा यं वा इन्द्रं सोमासः सोमा हर्यश्वं हरी अश्वौ यस्य तम् अमन्दन् मोदयन्ति तर्पयन्ति चेत्यर्थः ।

ऋचीषम इत्यनवगतम् । अर्चनमृक् स्तुतिः तया तुल्यः । ऋचा सम इत्यवगमः । ऋचा सम इति वाक्येनार्थप्रदर्शनम् । याप्यतिशयाभिप्रायेण क्रियते साप्यस्यान्नाहावत् समैव भवति नातिरिच्यत इत्यर्थः । उदाहरणम्—

इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः ।
मित्रो न यो जनेष्वा यशश्चक्रे असाम्या [17]॥

---

१—अयं सर्वः पादारम्भात्मकः पाठो नास्ति C.
२—अमात्र C.
३—रिमाणं B.
४—त्यर्थः प्राप्त B.
५—मिना मिनाते मीनोतेर्वा C.
६—[ऋ० ३।३६।४] 'म (मा C.) हाँ (हाङ् C.) अमत्रः' इत्येव प्रतीकम् B. C.
७—हिंसतपूर्वो C.
८—व्र (प्र B.) जने प्रजन B. C.
९—वर्ज्यते B. C.
१०—पाणैर्यो C.
११—प्रजनव (प C.) ति B. C.
१२—विरच्छद् C.
१३—'वि' इति त्रुटितम् B.
१४—वनेति B. C.
१५—नच्छू (च्छू C.) तेत्यौश्चे (B.) B. C.
१६—वप्यौनैव C.
१७—[ ऋ० १०।२२।२ ] 'इह श्रुतः' इत्येव प्रतीकम् B. C.

विमंदस्यार्षम्। इहास्मिन् यज्ञे श्रुतः प्रख्यात इन्द्रः। अस्मे अस्माभिः। अद्य स्तवे व्यत्ययेनोत्तमैकवचनं कर्मणि प्रथमपुरुषस्यैकवचनस्य स्थाने, स्तूयते वज्री आवृतवज्रः। ऋचीषमः तुल्ययाभ्यधिकगुणाध्याहाररूपेण अधिकतास्तुतिरनुवादिनी भवति सा यस्ये-त्यर्थः। किञ्च मित्रो न मित्र इव यथा स्निग्धः कश्चित् कस्यचित् जनेष्वा आकारः स्वार्थे यश इत्येतस्माच्च परो द्रष्टव्यः। गुणाभिधानं कार्यात् तद्वत् सर्वजनेषु स्तोतृभ्यो यष्टृभ्यश्च यशश्चकारोऽत्र। असामि अनाशा अप्रसायि च तत्करोति अनवरतमित्यर्थः। सुसमाप्तं वा पर्याप्तमित्यर्थः।

अनर्शरातिरित्यनवगतम्। अनश्लीलदानमित्यवगमः। अर्शसशब्दोऽश्लीलवाची। अश्लीलं किम्? पापकम्। कस्मादिति चेत्? यस्मात् पापवचनं प्रतिपत्तये रातिः पापिष्ठस्य दाता। तद्विपरीतोऽनर्शरातिः। उदाहरणम्—

अनर्शरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः।
सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन्॥

नृमेधस्यार्षम्। अनर्शरातिम् अपापकदानम् उत्कृष्टस्य दातारमित्यर्थः। वसुदां विभ-जन्तमेतत्। अश्लीलमक्षरवर्णसामान्यान्निराह अश्रिमदिति। अश्रयः कोटयस्ताभिस्त-द्वदश्रीमान्। तच्चात्र वैषम्योपलक्षणम्। ततश्च विषमहेतुत्वाद् अश्रिमत् विषममित्याह। अश्रिमत् सदश्लीलम् अश्लीलं सदर्शराति रातिर्दानम् अश्लीलविषया रातिर्दानं यस्य सोऽ-र्शरातिः पापिष्ठस्य दाता तद्विपरीतोऽनर्शरातिः। वसुनो धनस्य दातारमिन्द्रं होतः उपस्तुहि अन्तरात्मन् वा। किं कारणम्? यतः भद्रा इन्द्रस्य रातयः कल्याणानि स्तोतृभ्यो

१—विमन्दस्या C. २—अस्मै B. C.
३—ध्याहारोपेण C.
४—स यस्येत्यर्थः B. समस्येत्यर्थः C.
५—'मित्रो न' इति नास्ति B C.
६—चकारोरु: B. शस्करोऽत्र C.
७—असायि B. ८—अनशील C.
९—ब्दोऽस्मील वा C.
१०—अशीलं C.
११—पावकम् B. C. १२—यतः C.
१३—ये रात्रिः B. येत् रात्रिः C.
१४—तद्व (C.) परीतोदर्श (श B.) रात्रिः B. C.
१५—[ ऋ० ८।९९।४ ] अर्शराति आत्मनं दशरात्रं B. आत्मान दशरात्रिं C.
१६—आनर्शरात्रिं C.
१७ अपावक B. C. * 'विजन्त०' इत्युचितम्।
१८—अर्शीमन् B. C.
१९—अश्रीमा (स C.) न् B. C.
२०—रात्रिं र्दुरात्रिर्दानं C.
२१—लीला विष B. अशीलविषमारुतिर्दानं C.
२२—सोऽर्शतिः (तिं C.) B. C.
२३—नर्शरात्रिः C. 'अश्लीलमक्षरवर्णसामान्यान्निराह' इत्यारभ्यात्रपर्यन्तः पाठो मन्त्रव्याख्याया अनन्तरमेव पठितो युक्तः स्यात्।
२४—उपस्तु (स्त C.) हिः B. C.

यष्टृभ्यश्च इन्द्रस्य स्वभूतानि दानानि महदैश्वर्यकारीणीत्यर्थः । यतश्च स इन्द्रः अस्य स्तोतुः काममिच्छामभिलषितार्थविषया प्रार्थनां विधतो[1] विदधतः परिचरतो न रोषति न कोपयति न हिनस्तीत्यर्थः[2] । मन आत्मीयं पुनर्दानाय[3] चोदयन्[4] सातत्येन ददित्यर्थः ।

अनर्वेत्यनवगतम् । अर्तेः'अन्येभ्योऽपि दृश्यन्ते'[5] इत्येवं वनिपि रूपम्[6] । 'अर्वणस्त्रसावनञः'[7] इति वचनादत्र[8] भावाभावः सिद्धः छान्दसत्वादनवगतः[9] । प्रतिज्ञास्वातन्त्र्यं चात्र[10] विवक्षितं नागमनप्रतिषेधमात्रं गन्तुः । तथाचाह अप्रत्यृतो[11]ऽप्रतिगतोऽन्यस्मिन् अन्यमना[12]श्रितः स्वतन्त्र इत्यर्थः । उदाहरणम्—

> अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।
> गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः[13] ॥

अगस्त्यस्यार्षम् । अनर्वाणमगतमन्यं प्रत्याश्रिततया अपराश्रयमित्यर्थः । वृषभं[14] वर्षितारम् । मन्द्रजिह्वं मन्द्रयतिरर्चतिकर्मा[15] जिह्वेति वाङ्नाम[16] । मन्द्रा जिह्वा वागस्य स मन्द्रजिह्वस्तं[17] स्तुत्यवाचमित्यर्थः । मोदनवाचं वा सर्वे हि बृहस्पतेः स्तनयित्नुलक्षणां वाचमुपश्रुत्य मोदयन्ते । अत एवंगुणं बृहस्पतिं वर्धय स्तुहि अन्तरात्मन् । कीदृशं बृहस्पतिम् ? नव्यं नवनीयं स्तुत्यम् अर्कैः स्तुतिरूपैः । यस्य बृहस्पतेः किम् ? उच्यते । गाथान्यः गाथा[18] गाथेति वाङ्नाम सा चार्थसामर्थ्यात् स्तनयित्नुलक्षणा तां दर्शयति[19] प्रेरयति गाथान्यस्तनत इत्यर्थः । सुरुचो विद्युद्रूपतया सुदीप्तः । यस्य देवा आशृण्वन्ति आभिमुख्येनाकर्णयन्ति । नवमानस्य तनतेः शब्दकर्मणश्छान्दसमेतद्रूपम् । स्तनयित्नुलक्षणं शब्दं कुर्वतः । नच केवलं मनुष्या देवा[20] मनुष्याश्च ।

अथवा गाथाः स्तुतयस्तासां नेता बृहस्पतिर्गाथानीः[21] । कुत एतत् ? पुरोहितत्वात् ।

---

१–'विधतः' इति नास्ति B. C.

२–हिंनस्ति व्यर्थः C.

३–पुनर्ददनाय C.

४–चोदयत् B. C.

५–[ पा० ३।२।७५ ] दृश्यते B. C.

६–इत्येवं रूपं वनिरूप B. इत्येवं वनिरूप C.

७–[ पा० ६।४।१२७ ] त्रसावनं च B. C.

८–वचनात्र B. वचना C. '०दत्र तृभा०' इत्युचितम् ।

९–वगतम् B.      १०–चारु B.

११–अत्र भृतः B. C.

१२–महाश्रितः B. C.

१३–[ ऋ० १।१९०।१ ] 'अनर्वाणं' इत्येव प्रतीकम् B. C.

१४–षि वृषभं C.

१५–रर्चयति क B.

१६–वाङ्नामा आत्मा B. वाङ्नात्मा C.

१७–'तं' इति नास्ति B. जिह्वततं C.

१८–अत्रैकं 'गाथा' इति पदं व्यर्थमेव ।

१९–'र्श' इति त्रुटितम् C. 'दयति' इति पाठे सत्यत्र कदाचित् 'नयति' इत्येव मूलपाठः स्यात् ।

२०–'मनुष्या देवा' इति त्रुटितम् C.

२१–'गाथानीः' इति युक्तं स्यात् ।

'बृहस्पतिर्हि देवानां पुरोहित आसीत्'[1] इति श्रुतेः । तस्य गाथान्यः सुदीप्तेरित्यादि समानम् । नवमानस्य स्तुवत इत्येवमितिहासदर्शनेन व्याख्येयम् । अनर्वाणमप्रत्यृतमिति पाठः । अनर्वेमित्यपपाठः ।

असामीत्यनवगतम् । अत्र च सामिशब्द एवानवगतो यत आह सामिप्रतिषिद्ध-मसामीति[2] । सामीति[3] कस्मात्? स्यतेः समाप्त्यर्थस्येति केचित् । तेन सामि समाप्तम् असमाप्तं चोच्यते तस्या नञ् प्रतिषेधः ततश्चासामि असमाप्तमित्यर्थः । अथवा न सामीति । किं तर्हि ? सुसमाप्तमिति पाठान्तरेणार्थमाह । उदाहरणम्—

असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः ।
ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्[4] ॥

कण्वस्य । असामि असमाप्तमनन्तमित्यर्थः । सुष्ठु वा समाप्तं महदित्यर्थः । ओजः शारीरं बलं बिभृथ यूयं धारयथ हे सुदानवो दानुशब्दो दातृवचनः 'ताभ्यामन्यत्रोणादयः' इति वा साधनवचनो वा तेन साधनदातारः शोभनदानव इत्यर्थः । नच केवलं शारीर-मेव बलम् । किं तर्हि ? असामि असमाप्तमेव । हे धूतयः[6] छान्दसत्वात् कर्तरि द्रष्टव्यः कम्प-यितारः शत्रूणाम् । शवः सेनालक्षणं बलम् अपिच बलं तादृशमेव द्विधेनापि* बलेनापेता[7] यूयमित्यर्थः । यतश्चैवमतो ब्रवीमि ऋषिद्विषे[9] शेषमेतत्[8]प्रभृतीनामृषीणां द्वेष्ट्रे हे मरुतः परि-मन्यवे मन्युरिति क्रोधनाम परिगतः प्राप्तो मन्युर्येन स परिमन्युस्तस्मै परिमन्यवे नित्य-क्रुद्धायेत्यर्थः । अथवा मन्युर्मन्यतेर्दीप्तिकर्मण[11] इति मन्युशब्देन दीप्तिरुच्यते । परिगत-दीप्तया[12] ।

गल्दया[13] इत्यनवगतम् । गालनेन इत्यवगमः । उदाहरणम्—।

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
त्रयोविंशः खण्डः[14] । ]

---

१–'बृहस्पतिर्ह वै देवानां पुरोहितः' [ ऐत० ब्रा० ८।२६ ]

२–सावीति B. 'सामीति' इति त्रुटितम् C.

३–'इति' इति नास्ति C.

४–[ ऋ० १।३९।१० ] 'असाम्योजः' इत्येव प्रतीकम् B. C.

५–'त्य' इति त्रुटितम् C. [ पा० ३।४।७५ ]

६–सूतयः B. C. *–'द्विविधे०' इति युक्तम्

७–'बलेनोपेताः' इति युक्तं स्यात् ।

८–सुयमि C.

९–ऋषिविद्वेषे B. C.

१०–अयं पाठः सन्दिग्धः ।

११–प्तिरिमिणः C.

१२–अयं तृतीयान्तपाठश्चिन्त्यः । तृतीयान्तपाठेऽपि 'दीप्त्या' इति स्यात् ।

१३–'गल्दया' इति त्रुटितम् C.

१४–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते

## [ अथ चतुर्विंशः खण्डः ][1]

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत्[2]॥

मेधातिथेः। मा इति प्रतिषेधश्चुक्रुधमित्याख्यातेन सम्बध्यते । सततयाच्ञा हि लोके क्रोधहेतुत्वेन प्रसिद्धा। यतो ब्रवीमि सदा[3] याचन् अपि शब्दलोपो द्रष्टव्यः, त्वा त्वां सर्वदा याचन्नपि अहं मा चुक्रुधं भूर्णिमिव भूर्णिं मृगं न भूर्णिं भ्रमणशीलं मृगं सिंहादिकं यथात्मविनाशाय कश्चित् क्रोधयते तद्वत्। न चाहमात्मवधायैव याचे। किं तर्हि ? सोमस्य गल्दया गालनेन क्षारणेन प्रदानेन पूरणेन तृप्तेत्यर्थः*। नच गल्दयैवं[4] केवलया। किन्तर्हि। गिरा गीत्या च स्तुत्या च[5] कारणेन। यतोऽहं सवनेषु यज्ञेष्वभिषवेषु सोमं प्रयच्छामि स्तौमि अतो नित्ययाचकोऽपि सन् मा चुक्रुधमित्यर्थः । ईशानमित्यादिरर्था[6]न्तरोपन्यासः। कोनामाऽसावीश्वरं न याचयिष्यत इति। एवमस्य सोमसम्बन्धात् गल्दाशब्दस्य गालना[7]र्थत्वमुपपन्नम्।

अस्यैव च पूरणार्थत्वं पूर्यमाणधमनीयसम्बन्धात् स्पष्टयिष्यन्नुदाहरणा[8]न्तरमुपन्यस्यति स्म वामदेवस्य—

आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम्[9]।

आविशन्तु त्वामिन्दवः[10] सोमाः। किं स्तोकाः ? नेत्युच्यते । आगल्दा धमनीनाम्। धमन्यो[11] हि ग्रीवानाड्य उच्यन्ते। आगलनात् पूरणात्। कण्ठनाडीनां[12] यावत्तावदापूर्णत्वात्। गालितुमारब्धा इत्यर्थोऽस्य शेषः।

रसेन मे रसं पृण वाजिनो मे यज्ञं वहानि[13]। इति।

अस्यार्थः। रसेनोदकेन वृष्ट्याख्येन मे यदर्थं पार्थिवमुदकं पृण आपूरयेत्यर्थः। किञ्च वाजिनो[14]ऽन्नवन्तो देवा मे मम स्वभूतं यज्ञं प्रतीति शेषः[15], वहान् वहन्तु प्रापयन्तु। कम् ?

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ऋ० ८। १। २०] 'मा त्वा सोमस' इत्येव प्रतीकम् B. C.
३–यज्ञा B. दन्दा C.
*–'तृप्त्ये०' इति युक्तं स्यात्।
४–गद्र (तृग C.) दयैवं B. C.
५–खत्या चक्र.रेगन B.
६–दिरन्तार्थान्तरो C. ७–गलनार्थमुप B.
८–'र' इति त्रुटितम् C. गणं सान्मुप B.
९ [आपस्तम्बश्रौतसूत्रे ८.७.१०। मानवश्रौतसूत्रे १.७.२.१८] १०–मिन्दवदसोमाः B. C.
११–अ यो हि B. C. १२–कर्णनाडीनां C.
१३–[आपस्तम्बश्रौतसूत्रे ८.७.१०। मानवश्रौतसूत्रे १.७.२.१८।]
१४–अत्र 'वाजिनो' इति युक्तं स्यात्।
१५–येषाम B. C.

सामर्थ्यादात्मानम्। वाजिनश्च यज्ञमागच्छन्त्वित्यर्थः। यज्ञं वान्तं प्रापयन्त* अविघ्नेन[1] समापयन्त्वित्यर्थः।

नानाविभक्ती[2] तुशब्दो विशेषणार्थः। उदाहरणद्वयेपि गल्दा[3]शब्दस्य पूरणार्थत्वमविशिष्टम्। इयांस्तु विशेषः। पूर्वं तु तृतीयान्तं स्त्रीलिङ्गम्। उत्तरत्र पञ्चम्यन्तो नपुंसकलिङ्ग इति। तत्र[4] विभक्तिद्प्रदर्शनपुरस्सरम् आगल्दादिति पूरणार्थतामेव भाष्यकारो दर्शयति।

जल्हव इत्यनवगतम्। उज्ज्वलनवर्णहीना इत्यक्षरवर्णसामान्यादवगमः। उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
चतुर्विंशः खण्डः[5]। ]

---

* 'प्रापयन्तु' इति युक्तं स्यात्।

१—आविघ्नेन B.

२—विभक्तिः (क्ति C.) B. C.

३—गल्दशब्द B. गल्दाशब्द C.

४—तत्रो विभ B.

५—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ पञ्चविंशः खण्डः । ][1]

न पापासो मनामहे नारायासो न जल्हवः ।
यदिन्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै [2]॥

हस्तो नाम तस्यार्षम्[3] । न पापासो वेदग्रहणाद् यस्योत्तरकालं च यथाशास्त्रं[4] ब्रह्मचर्यस्य कृत्स्नस्य वेदाध्ययनस्य चात्मरूपस्य[5] च तपसोऽभावान्न[6] वयं पापा इति मनामहे मन्यामहे । स्यादेतत् सत्यप्येतस्मिन् निर्धनत्वान्नित्यकर्मविलोपात्[7] पापा एवेति । एतच्च न । यतो नारायासो दानं मनसि भावान्नाधनाः । यो हि स्वभावान्न राति स निर्धनो न वयम्[8] । स्यादेतत्, सत्यप्यधिकारेऽनाहिताग्नित्वात् पापा इत्येतदपि न[9] । यतो न जल्हवो नापि ज्वलनेन हीनाः । यद् व्यत्ययेन नपुंसकैकवचनं पुंसो[10] बहुवचनस्य स्थाने यस्मादर्थे,पाप एव वयं[11] यस्माद्वा ईन्नू[12] पदपरणौ, इन्द्रं वृषणं[13] वर्षितारं सचा सह सर्वैः ऋत्विग्भिः सुतेऽभिषुते सोमे[14] यष्टृयष्टव्यत्वलक्षणेन स्तोतृस्तुत्यत्वलक्षणेन च सख्येन[15] सखायं कृणवामहै कुर्मो यजामः स्तुमश्चेत्यर्थः । एवं विहितानुष्ठानेन प्रतिषिद्धवर्जनेन च परितुष्टात्मा भार्गव ऋषिरित्थमवोचत् ।

बकुर इत्यनवगतम् । भास्करो भयंकरो भासमानो द्रवतीति[16] चेत्यवगमः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य
पञ्चविंशः खण्डः[17] । ]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० ८ । ६१ । ११] 'न पापासः' इत्येव प्रतीकम् B. C.

३ 'तस्याष' इत्येव C. अत्र 'भर्गो नाम तस्यार्षम्' इति युक्तं स्यात् ।

४–यथाशास्त्रं B. C.

५–चात्यरूपस्य B.

६–तपसोऽभावा B.

७–निन्धनत्वा B. C.

८–रातिः सनि (त्रि B.) न्ध (बन्ध B.) नः B. C.

९–'न' इति त्रुटितम् B. C.

१०–पुंसा बहु B.

११–वावा ये वयं C.

१२–उदूरे B. इदूरे C.

१३–वृष्णं B.

१४-सोमेषु C.

१५–संख्येन B.

१६–दृप्यतीति B. द्रव्यतीति C.

१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ षड्विंशः खण्डः । [1] ]

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।
अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय [2]॥

कक्षीवत आर्षम् । यवग्रहणमत्र[3] प्रदर्शनार्थम् । यवादि धान्यम्[4] । वृकेण वृको लाङ्गलमुच्यते लाङ्गलेन । हे अश्विना अश्विनौ वपन्तौ वपन्तौ[5] इषमित्यन्ननाम तद्धेतुत्वादत्र वृष्ट्युदके वर्तते । अन्नहेतुभूतं च वृष्ट्युदकम् । दुहन्ता[6] दुहन्तौ[7] क्षारयन्तौ सर्वस्य मनुष्यस्यार्थाय[8] । दस्युमुपक्षपयिता रक्षःपिशाचादिकम् । बकुरेण भास्करेण दीप्तेन[9] भयंकरेण वा[10] भासमानगमनेन वा[11] । केन ? सामर्थ्यात् स्वेनायुधेन ज्योतिषा[12] वा धमन्ता धमतीति[13] वधकर्मा अभिघ्नन्तौ । उरु विस्तीर्णमात्मनो ज्योतिस्तेजः प्रभावलक्षणं चक्रथुः कृतवन्तौ युवाम् । आर्याय[14] आर्यजनार्थाय यववपन[15]वृष्टिदोहनदस्युहननैस्त्रिभिः कर्मभिर्महाप्रभावौ युवां जातौ साधूनामनुग्रहार्थमित्यर्थः ।

अथैकपदनिरुक्तम् । वृको[16] विकर्तनाद् भूमेः । 'भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्[17]' इति अभिधेयप्रसङ्गात् लाङ्गलमाह लगतेर्लगिः सङ्गे[18], सज्जति[19] हि तद्भूमौ । लाङ्गूलवद्वा[20] पुच्छसादृश्यात् । लाङ्गलमत्र[21] हलमभिप्रेतम् । मात्रया[22] तद्वत् । प्रसङ्गात् प्राण्यङ्गं निराह लगतेः, लग्नं हि तत् पृष्ठस्यान्ते गोगवयाश्वादेर्भवति । लिङ्गतेर्वा[23] खलत्वात् । लम्बतेर्वा दीर्घत्वात् । ज्योतिषा वोदकेन वेति । केचिद् वाशब्दं[24] चार्थे वर्णयन्ति ज्योतिषा चोदकेनेति[25] च । अश्विशब्दादीश्वरवचनादपत्ये तद्धित इत्याह ईश्वरपुत्र इति ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १ । ११७ । २१] 'यवं वृकेण' इत्येव प्रतीकम् B. C.
३–लवग्रह B. ४–धानम् B.
५–पचन्तावपन्तौ B.
६–'दुहन्ता' इति नास्ति B.
७–'दुहन्तौ' इति नास्ति C.
८–'प' इति नास्ति C.
९–'दीप्तेन' इति त्रुटितम् B.
१०–वट B. C. ११–पा B.
१२–ज्योतिषो पा (वा C.) हि B. C.
१३–धमनीति B. C. १४–अर्याय C.
१५–यव पवन वृष्टि B. C.
१६–पृक्रोपिकर्त C.
१७–[अनुपलब्धमूलमिदम्]
१८–'लगे सङ्गे' [धा० १ । ७८७]
१९–अत्र 'सजति' इति युक्तं स्यात् ।
२०–लांगलेत्वाद्वा B.C.
२१–लांगूलमत्र B. C.
२२–सन्दिग्धमिदं पदम् । कदाचिदत्र 'मात्रया' इति पाठः स्यात् । परिमाणेन तत्सदृशमित्यर्थः ।
२३–'लङ्गतेर्वा' इति मुद्रितनिरुक्तमूले पाठः ।
२४–शब्दश्चार्थे B. C.
२५–'चोदकेन चेति' इति युक्तं स्यात् ।

बेकनाटांनित्यनवगतम् । खलुशब्दो वाक्यालङ्कारार्थः । कुसीदिनो वृद्धिजीविनो वार्धुषिका वा अभिधेयाः । द्विगुणकारिण इत्यादयोऽवगमाः । बे इति द्विशब्दस्यार्थेऽपभ्रंशो दृष्टः । एकं कार्षापणमृणिकाय प्रयच्छन् तौ द्वौ मह्यं प्रतिदातव्यावित्येवमाभिधेयेन दर्शयति । ततो द्विशब्दादेकशब्दान्नाटयतेश्च बेकनाटा एतत् । एतेनाह द्विगुणकारिणो वा दायिनो वा द्विगुणं कामयन्त इति वेति । उदाहरणम्—

कदू महीरधृष्टा अस्य तविषीः कदु वृत्रघ्नो अस्तृतम् ।
इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि ॥

प्रागाथस्य कलेरार्षम् । कत् छान्दसत्वात् किमः कादेशः कत् क्वच । उकारः पदपूरणः । महीः अधृष्टा इति तविषीविशेषणे एते । तविषीति बलनाम । तेनायमर्थः । महान्त्यधर्षितानि अनभिभूतपूर्वाणि अस्येन्द्रस्य स्वभूतानि बलानि सेनालक्षणानि । कदु उकारो वौकारार्थे । क्त वा वृत्रघ्नः वृत्रस्य हन्तुः । अस्तृतं स्तृणातिर्वधकर्मा अहिंसितपूर्वं केनचित् शारीरं बलम् । अत्रैकवाक्यतायै उक्तानां बलानामप्रतिनिर्देशार्थो यच्छब्दोऽध्याहार्यः । यैः शारीरसेनालक्षणैर्वा बलैरिन्द्रो विश्वान् सर्वान् बेकनाटान् वार्धुषिकान् । तेषामेव विशेषणम्, अहर्दृशः अहःशब्देनात्र अह्नां हेतुत्वात् सूर्य उच्यते । तं ये पश्यन्ति ते सूर्यदृशः । ननु सर्व एव सूर्यं पश्यन्ति ? उच्यते । विशेषणार्थमेतत् । इहैव जन्मानि पश्यंति जन्मान्तरेऽपि न द्रक्ष्यन्ति पापकारित्वात् क्रिमिस्थावरादिप्राप्ताः । अथवा इमन्येवाहानि ऐहलौकिकान्येव पश्यन्ति न पारलौकिकानि । दृष्टप्रधाना नास्तिकास्ते अहर्दृशः । उत उतशब्द एवार्थे । क्रत्वाशब्दात् कर्मवचनात् परो द्रष्टव्यः । कर्मणैवानुष्ठानेन पणीन् वणिजश्च वणिक्सदृशान् शूद्रकल्पानित्यर्थः । तथाच स्मरणम्—

---

१—नागानि C.
२—वगमाद B. C.
३—तौ बौ मह्यं C.
४—'आह' इति त्रुटितम् B.
५—[ऋ० ८ । ६६ । १०] 'इन्द्रः' इत्येव प्रतीकम् B. नास्त्येव प्रतीकम् C.
६—प्रगाथस्य B.
७—तत् B.
८—कव B. C.
९—अदृष्टा .B.C
१०—महात्म (त्य C.) धर्षि B. C.
११—अनभिपूर्वभूता हि पूर्वाणि B.
१२—क्रन् B. क्तन C.
१३—उका (क C.) रोव (प C.) कारा (नास्ति C.) र्थे B. C.
१४—शरीरं C.
१५—अत्र 'पश्यन्ति' इति युक्तं स्यात् ।
१६—द्रक्ष्यन्ते B.
१७—ऐहिकान्येव B. ऐहिकलोकान्येव C.
१८—एवार्थकत्वात् कर्म B.
१९—वणीन् C.

गोरक्षकान् वाणिजिकास्तथा[1][2] कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत्[3] ॥

अभ्युपसर्गश्रुतेर्योग्यक्रियापदमध्याजहार[4] भाष्यकारोऽभिभवतीति विनाशयतीत्यर्थः ।

अभिधेतनेत्यनवगतम्[5] । अभिधावतेत्यवगमः[6] । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य
षड्विंशः खण्डः[7] । ]

———

१–वाणिजकान् B. C.

२–'तथा' इति त्रुटितम् B.

३–[मनु० ८ । १०२]

४–अत्युपरा.गै P.

५–धेतेनेत्यवगतम् C.

६–हि धावते B. C.

७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो दृश्यते ।

## [ अथ सप्तविंशः खण्डः । ][1]

जीवान्नो अभि धेतनादित्यासः पुरा हथात् ।
कद्ध स्थ हवनश्रुतः[2]॥

ऋषेः समन्दपुत्रस्य मत्स्यरूपस्यार्षम् । मत्स्यनामैव वा । यतो धीवरेण जालेन गृहीता आदित्यानित्थमाहुः। जीवान्नो जीवन्तोऽस्मान्[3] अभिधेतन अभिधावत रक्षत मोचयतेत्यभिप्रायः । आदित्यासो हे आदित्याः पुरा हथात्[4] प्राग्सनधाद्यावत्याऽनेन[5] धीवरेण मर्यामह* इत्यर्थः । कद्ध हशब्दोऽनुशब्दस्यार्थे स चात्र[6] वेदे द्रष्टव्यः । यतो व्याचष्टे क्व नु स्थ येन शृणुत विलम्बमाना वा । हवनश्रुतो[7] हे आर्तानामाह्वानस्य श्रोतारः ।

मत्स्यानामित्याद्यर्थकथनमर्थाभिव्यक्तये प्रदर्शनं चेदमन्यत्राप्यर्थाभिव्यक्तये । आर्षं दर्शनीर्थमिति[8] आर्षसम्बन्धेन प्रसक्तं मत्स्यं निराह मधुनि[9] स्यन्दत इति । मधुशब्दात् स्यतेश्च मत्स्या इति[10] । माद्यन्ते[11] हृष्यन्त्यन्योऽन्यं भक्षणायेति वा मदेर्भक्षयतेश्च मत्स्या इत्यर्थः । जाला[12] कस्मात् जले चरति भवतीति तद्धितार्थः ।

अंहुर इत्यनवगतम् । तत्रांहुर्व्याख्यातः । 'अंहतिश्चांहश्चांहुश्च[13] हन्तेः' इति । ततोंऽहुशब्दात् पापवचनाद् रो मत्वर्थे । अंहस्वीनित्यवगमः[14] । अस्योदाहरणे प्रदर्शयितव्ये । एतत्समानार्थस्य सारूप्यप्रसङ्गाद् अंहूरणशब्दस्य[15] तावन्निगमं दर्शयति कृण्वन्नंहूरणादिति । उदाहरणम्

त्रितः कूपेऽवहितो देवान् हवत ऊतये ।
तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी[16]॥

कुत्सस्य त्रितस्य वार्षम् । त्रितो नामर्षिः कूपेऽवहितोऽधोनिहितः पतित इत्यर्थः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ८।६७।५] 'जीवान्नः' इत्येव प्रतीकम् B.C.
३–अत्र 'जीवतोऽस्मान्' इति युक्तं स्यात् ।
४–हथात् B. C.
५–प्रास्सनताद्या C. अयं पाठः सन्दिग्धः । अत्र कदाचित् 'प्राग्हननात् यावन्नानेन' इति पाठो भवेत् । *–'मार्यामहे' इति युक्तं स्यात् ।
६–स चार्थे C.
७–न श्रुतेः हे अत्तानामाह्वानस्य B.
८–दशनीति C.
९–'मधौ स्यन्दते' इति मुद्रितनिरुक्ते पाठः ।
१०–'ति' इति त्रुटितम् B.
११–माद्यन्निसा हृष्य B. C.
१२–अत्र 'जालं' इति स्यात् ।
१३–[निरु० ४ । २५] निश्चांहवाश्च B. C.
१४–अंहस्पतीत्यव B.
१५–अंहरशब्दस्य B.
१६–[ऋ० १ । १०५ । १७] 'त्रितः कूपे' इत्येव प्रतीकम् B. C.

देवान् हवत ऊतये अत्र लुङ् द्रष्टव्यः, आहूतवान् । यदि वा कुत्सस्येदमार्षं ततो विरुद्ध एव परोक्षरूपेण प्रथमपुरुषनिर्देश इति व्याख्यातम् । अहं त्रितो नाम देवानाहूतवानित्यर्थः । किमर्थम् ? ऊतये सूक्ताद्युक्तेतिहासप्रदर्शिते मानसे यज्ञे सोमेन प्रदर्शिते तर्पणाय पालनाय वा आत्मनस्तदा भयानं शुश्राव श्रुतवान् बृहस्पतिः कृण्वन् होता वयं शतृप्रत्ययो द्रष्टव्यः । प्रयोजनस्य च हेतुत्वेन विवक्षा । किम्?सामर्थ्याद् रक्षणं वा उत्तारं वा । किम्?सामर्थ्यात् क्रियासामान्यवचनत्वात् करोतिरत्र रक्षणार्थ उत्तारणार्थो वा रक्षितुमुत्तारयितुं वेत्यर्थः ।

अंहूरणाद् अहूरणोंऽहुराग्निरुक्तः । अंहुर एवांहूरणः स्वार्थिको नशब्दस्तद्धितो दीर्घत्वं च छान्दसत्वात् । इतिहासप्रदर्शितपापकर्मणो वृत्रकात् तृणकण्टकादिभिरुद्वेगकरैरावृतादन्धकूपाद्वा । उरु क्रियाविशेषणमेतत्, विस्तीर्णं रक्षितुमत्तारयितुं वा चिरकालमित्यर्थः । वित्तं मे अस्य 'विद ज्ञाने' श्रवणेन यज्ज्ञानं तदिह नाभिप्रेतम् । अस्येत्यतिसन्निहितत्वात् स्तोत्रस्य प्रतिनिर्देशः । द्वितीयार्थे षष्ठी । शृणुतं ममेदं स्तोत्रमित्यर्थः । अथवा अस्येति दुःखम् । विज्ञानेन चात्र तत्पूर्वकमुत्तारणं लक्ष्यते । तेनार्थानुग्रहस्वभावकतया मामितः कूपादुत्तारयतमित्यर्थः । हे रोदसी द्यावापृथिव्यौ ।

इदानीमंहुरस्योदाहरणमाह—

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ [11]॥

त्रितस्य । सप्त प्राधान्येन सप्तसंख्याका मर्यादा अनतिक्रमणीया व्यवस्थारूपास्ते मर्यादाः । कवयो धर्मविदो मेधाविन ऋषयो वेदा एव वा । ततक्षुः कृतवन्तः । ऋषिपक्षे नित्यत्वात्तासामनुष्ठितवन्त इत्यर्थः । व्याकृतवन्तः । तासामेकाम् इदेप्यर्थे तासां मध्ये एकामपि । अभीत्ययं गादित्येतेन सम्बध्यते । एकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । योऽभिगाद् अभ्यगाद् अभिगच्छति अभिक्रामतीत्यर्थः । सोऽहुरोऽहंस्वान् पापवानित्यर्थः ।

१–सन्दिग्धमिदं पदम् । अत्र कदाचित् 'तदाह्वानं' इति पाठो भवेत् ।
२–अत्र 'कुर्वन्' इति पाठः स्यात् ।
३–रणादुत्तरो निरु B. रणादंहुरो निरु C.
४–अंहुरण एवां हूरणादः (दC.) B. C.
५–वृत्रकान् B.
६–'कण्टकादिरुद्वेगक' इति त्रुटितम् C.
७–दग्धरूपा वा B. C.
८–[धा० २ । ५४]
९–यज्ञानां B. यज्ञानं C.
१०–'शृणुतं' इति नास्ति B.
११–[ ऋ० १०।५।६ ] सप्त मर्यादाः' इत्येव प्रतीकम् B. C.
१२–तासामिदमेकमप्यर्थे B. तासामेकमिदमप्यर्थे C.
१३–अभ्यगात् C.

**परस्यार्धर्चस्य सम्बन्धार्थं शेषोऽध्याहार्यः। यः**[1] **स्तुता एता अभिगच्छति**[2] **स इह लोके तावद योर्मनुष्यस्य सर्वस्य** स्कम्भः **स्कम्भभूत आश्रयो भवति, प्रायेणोत्तरकालमपि परलोके** उपमस्य **कृत्स्नस्य जगत उपनिर्मातुरादित्याख्यस्य आन्तरपुरुषस्य** नीडे[3] **नीडस्थानीयमण्डल इत्यर्थः ।** पथाम् **उदकमपि पाथः, उदकानां वा वृष्ट्याख्यानां** विसर्गे **विसर्जनेऽन्तरिक्षे** धरुणेषु **उदकनामेदम्, उदकेषु चन्द्रमण्डलरूपेषु चन्द्रमण्डल इत्यर्थः । अनेकाधिकरणश्रुतेः**[4] **सामानाधिकरण्यानुपपत्तेश्च विकल्पः**[5]**, इह वेह वा स्थाने** तस्थौ **तिष्ठति आस्ते ।**

**यद्यपि विहितानुष्ठानस्यैवैतत् फलं तथाप्यातिक्रमहेतोरधर्मस्य प्रतिबन्धुरभावेन सामान्येनोक्ता न विशेषेणेत्यत आह** स्तेयं **सुवर्णस्य** तल्पारोहणं **गुरुस्त्रीगमनं** भ्रूणहत्या **ब्राह्मणगर्भस्य व्यापातनं** दुष्कृतस्येत्यादिना **एषामेव संपादनमभिप्रेतम्**[6] **।** पातके[7] **महापातकविषये** अनृतोर्धम्[8] **अनृतवचनं मिथ्याभिशंसनामित्यर्थः ।**

**बते इत्यनवगतम् । सत्त्ववाचि प्रथमान्तं** बलादतीत **इति**[9] **वाक्यस्यार्थे पदम् । बलशब्दादततेश्च बतो दुर्बल इत्यर्थः । अन्यस्तु बतेति निपातोऽसत्त्ववचनोऽव्ययम् । यत आह** निपातः खेदानुकम्पयोरिति **। तत्र निपात इति पदजात्यवधारणम् । निपातत्वादनवगतमनेकार्थं च । खेदो दुःखं मानसमनुकम्पा**[10] **दया तयोर्वर्तते । 'चादयोऽनुदात्ताः'**[11] **इत्यपवादवचनादनुदात्तत्वम् । उभयोरेकमुदाहरणम् ।**

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
सप्तविंशः खण्डः । ][12]

---

१—यस्तु ता C. अत्र 'यस्तु न एता' इत्येव युक्तः पाठः स्यात्। अभिगच्छतीत्यस्य अनुतिष्ठतीत्यर्थे 'यस्तु ता एता' इत्यपि पाठो युक्तः संभवति । यस्तु ता एताः सप्त मर्यादा अनुतिष्ठति पालयतीत्यर्थः ।

२—गच्छन्ति B. C.

३—बिले बिलस्थानीये B.

४—श्रुतः सा (स C.) मा B. C.

५—विकल्पद B. C.

६—सप ( पा C. ) दन B. C.

७—अपानके B. C.

८—अनृतोऽन्यं B. C.

९—बक इत्य C.

१०—कम्पपादयतोर्वर्त B. कम्पपादया C.

११—[ फि० सू० ४।१६ ] स तत्वं वेदे (दा C.) त्याद्यपवाद B. C. 'निपाता आद्युदात्ताः' [फि० सू० ४।१२] इत्युत्सर्गेण निपातानां सर्वेषामाद्युदात्तत्वे प्राप्तेऽपवादसूत्रं चादय इति ।

१२-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ अष्टाविंशः खण्डः । ][1]

व्रतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम्[2] ॥

यमीयमसंवादे यमी यमं कामयमाना[3] 'तन्वा मे तन्वं सं पिपृग्धि'[4] इति 'न वा उ ते तन्वा तन्वं सं पिपृच्याम्'[5] इत्येवमन्तेन प्रत्याख्याता सती सेर्ष्यमाणा यममुपालभते स्म । व्रतो बलाद्[6]तीतः[7] परिष्वजते वत हि कष्टं दुर्बलोऽसि यमे[8] । नैव एवशब्दश्चार्थे नच[9] ते तव मनो हृदयं च परमार्थम् अविदाम[10] मनसो हृदयस्य निश्चयस्य वाविज्ञानात् । केन कारणेन दुर्बल इति न विजानीम इत्यर्थः । अथवा सशिरःकम्पभूमेरङ्गुलीतर्जनमाह[11] अः ज्ञातम्[12] । अन्या किल कापि स्त्री त्वां कक्ष्येव यथा कक्ष्याश्वस्य हस्तिनो रज्जुमात्मना* संबद्धमश्वं हस्तिनं वा परिष्वजते तद्वत् परिष्वजाते[13][14] लडर्थे पञ्चमः परिष्वजते । लिबुजेव[15] द्वितीयोपमा । लिबुजा व्रततिर्वल्लीत्यर्थः[16] । सा यथा वृक्षं सर्वात्मना वेष्टयेत् परिष्वजेत तद्वत् । अन्यस्यामपि सौभाग्यगुणेन गर्वितायामङ्गनायामासक्तहृदयत्वाद् दुर्बलोऽसीत्यर्थः ।

लिबुजाशब्दं निगमप्रसक्तमभिधेयतोऽभिधानतश्च निराह व्रततिरित्यभिधेयं[17] वा तत्पुरोवात[18] एतल्लीयते विभजतीति[19] शब्दनिर्वचनम् । श्लिष्यन्तीति क्लन्दिलं वेष्टयन्तीत्यर्थः । पर्यायप्रसक्तमाह व्रततिर्वरणाच्चेत्यादि । वरणाद्वाच्छादनात् ततनाच्चयनात् । वृणोतेस्तनोतेश्चिनोतेश्च[20] त्रयाणामप्यर्थस्य समवायसम्भवात् त्रिधातुजमित्यर्थः ।

वाताप्यमित्यनवगतम् । उदकं वृष्टिलक्षणमभिधेयम् । वातः पुरोवात एतद् वृष्ट्युदकमाप्याययति । तत[21] वात आप्यायनोऽस्येति वाताप्यायन[22] इत्यवगमः । अथवा वातो

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ ऋ० १०।१०।१३ ] 'बतो बतासि' इत्येव प्रतीकम् B. C.
३—यमकोमय C.
४—[ ऋ० १०।१०।११ ] तबा ( त्वा B. ) मे तन्वां सं (सः B.) विवृन्धि ( विपद्धि B. ) B. C.
५—[ ऋ० १०।१०।१२ ] तन्वा तन्वां ( B. C. ) सं वितृच्याम् B.
६—बलः B. C.   ७—दतीतं B.
८—'मे' इत्येव B. C.
९—'च' इति नास्ति B. C.
१०—अपि दामनसो B. C.
११—भूमेरा (दा C.) गुंली B. C.
१२—अज्ञातं B. आज्ञातं C.
*—'रज्जुरात्मना' इति युक्तम् ।
१३—परिष्वजते B.   १४—'ज' इति त्रुटितम् C.
१५—लिबुधेव B. C.   १६—प्रतनी वल्ली B. C.
१७—व्रततीरित्य B. C.   १८—वातः पुरोवात C.
१९—विभुजतीति B. C.
२०—'चिनोतेः' इति नास्ति B.
२१—'ततो' इति युक्तम् । २२—'०यनम्' इति युक्तम् ।

यदाप्याययति[१] तेन वातेन[२] तदाप्यायत इति कर्मोपपदस्थप्यायतेराङ्पूर्वस्य कर्तरि प्रत्ययो द्रष्टव्यः। उदाहरणम्—

नू नो रयिमुप मास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम्।
प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात्[३]॥

नोधस[४] आर्षम्। सर्वाः सौम्याः पावमान्य इति सोम उच्यते। नू[५] नः नु इति क्षिप्रनाम क्षिप्रम्[६]अस्माकम्। रयिं धनम्। उपमास्व[७] उपनिमिमिक्ष्व कुरुष्व अस्मभ्यं देहीत्यर्थः। कीदृशम्? नृवन्तं[८] नृभिः परिचारकमनुष्यैस्तद्वन्तं[९] पुनानः[१०] पूयमानस्त्वम्। नच केवलं रयिमेव। किं तर्हि? वाताप्यम्[११] उदकं वृष्टिलक्षणम्। विश्वश्चन्द्रं[१२] चन्द्रश्चन्दतेः कान्तिकर्मणः। अथवा 'चदि आल्हादने[१३]' इत्यस्य। ततश्च विश्व[१४]चन्द्रमिति प्राप्ते 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे'[१५] इति सुट्[१६] सर्वकान्तं ह्लादकं वा। प्रशब्दस्तारी[१७]त्याख्यातेन सम्बध्यते। किञ्च वन्दितुः[१८] स्तोतुर्मम इन्दो हे सोम प्रतारि[१९] कर्तरि चिण् लोडर्थे च लुङ् छान्दसत्वाद् द्रष्टव्यः। प्रतरतु प्रवर्धतामायुः। प्रातः अन्तर्नीतवीप्सार्थमेतत्। किम्? प्रातः प्रातश्च। मक्षु क्षिप्रम्। धियावसुः कर्मधनो वा। कः[२०] पुनरसौ? सामर्थ्यादिन्दुः। जगम्यात् जंहतेर्गतिकर्मण एतद् रूपम्। अस्मद्यज्ञं गच्छेत्याशास्महे। द्वादशाहादि[२१] स्तुत्यं कर्मास्माकमुपागमत्[२२]त्वित्यर्थः।

चाकन्[२३]नित्यनवगतम्। चायन्निति वा कामयमान[२४] इति वावगमः। उदाहरणम्—

वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्[२५]॥

---

१—यथा आप्याय B.
२—'न' इति त्रुटितम् C.
३—[ ऋ० ९।९३।५ ] 'नू ( आ C. ) नो रयिम्' इत्येव प्रतीकम् B. C.
४—नौधस C.
५—नूनं B. ततुं C.
६—क्षिप्रं न अस्मा C.
७—उपमास्वं B. C.
८—नृपतं B. C.
९—तन्वन्तं B. C.
१०—पुनाना B.
११—वाताव्यः C.
१२—विश्वं चन्द्रं च चन्दतेः B.
१३—[ धा० ११६८ ] चदि ह्लादने C. धातुपाठे तु 'चदि आह्लादे' इति पाठः।
१४—विश्वः च B. विति विश्वश्च C.
१५—[ पा० ६।१।१५१ ]
१६—सुन् B.
१७—तरित्याख्या B. C.
१८—पणितुः B. वणितुः C.
१९—व्रतानि B.
२०—कं पुन B. C.
२१—द्वादशाहानि B.
२२—मुपगम B.
२३—चाकिन्नित्यवग C.
२४—तायमान C.
२५—[ ऋ० १०।२९।१ ] 'वने न वायो' इत्येव प्रतीकम् B. C.

वसुकस्यार्षम्। वनशब्देनात्र वनावयवो वृक्षो लक्ष्यते। उत्पश्यन्निव वीक्ष्यमाण इव कामयमान इव वा। शुचिः अप[1]गताशेषवक्त्रदोषः सौष्ठवादिगुणयुक्त इत्यर्थः। वां युवयोः स्वभूतः। कः[2] पुनरसौ? स्तोमः[3]। भुरणौ हे भर्तारौ देवानां पत्नीयजमानौ। गतिकर्मणो भु[4]रण्यतेरेतद्रूपम्। क्षिप्रनाम्नो वा कर्मार्थमितश्चेतश्च गन्तारौ क्षिप्रेण वा अजीगः जिगर्ति गृह्णाति वशे स्थापयतीत्यर्थः। कम्? सामर्थ्यादिन्द्रमागच्छन्तमेव। कीदृशः स्तोमः? यस्य च स्तोमस्येन्द्र पुरुदिनेषु बहुष्वहस्सु होता ह्वयतेरर्चतिकर्मण एतद्रूपम्। नास्तीदृशो, नास्तीत्येवं स्तोता धं[5] वा मां प्रत्ययमागच्छतु नान्यमित्येवमाह वा[6]ता। कीदृश इन्द्रः? उच्यते। नर्यो नृभ्यो हितः। नृणां नृतमो मनुष्याणां मध्ये प्रकृष्टमनुष्यः सर्वैः पुरुषगुणैरुपेत इत्यर्थः। क्षपावान् क्षपा रात्रिः, रात्रिशब्देन रात्रिपर्यायाणां[7] स्तोतॄणां चाङ्गभूता यातिः सोच्यते, तया रा[8]त्र्या तद्वानित्यर्थः।

वेः पुत्रो वा[9]य इत्येवमेकपदत्वेन वायशब्दं व्याख्याय भाष्यकारः शाकल्यमुपालभते स्म वा[10] इति य इति च पदद्वयं चकार। त[11]त्तु न युक्तम्। यत एवं पदद्वये सति 'यद्वृत्तान्नित्यम्[12]' इत्येवमुदात्तमेवाख्या[13]तं न्यधायीत्येवमेवाभविष्यत्। अनुदात्तं चेदम्। तन्नेदं पदद्वयम्। किं तर्हि? एकं यथैव व[14]यमवोचामेति। किञ्च असुसमातश्चार्थः सुष्ठुसम[15]स्तोऽपरिपुष्टः। आनर्थक्यमेवानेन दर्शयति। वाशब्दो विकल्पादिसम्भवाद् य इत्यप्युद्देशार्थः[16] स्तोमं[17] प्रत्युपक्रमार्थत्वेन कस्यचिदप्युद्दिश्यमानस्याभावादनर्थकः। तस्माद्वे[18] पदमेतत्। स्वरूपानुपपत्तेरानर्थक्यप्रसङ्गाच्चेति भाष्यकारस्य निश्चयः।

य इति सोमस्योद्देशः,चाकन्निति चाख्यातं न नामशब्दः, अपि[19] सम्प्रत्यर्थे। तेनायमित्यर्थः[20]। ततश्चा[21]यं यः सोम आत्मनः पानं कामयते। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। स वने वनविकारभूते ग्रहचमसादौ सूतहस्तकलशादौ वा न्यधायि ऋत्विग्भिर्निहितो

---

१—अवगता C.
२—'कः' इति त्रुटितम् B.
३—स्तोमे B. C. ४—हुरण्य C.
५—धं वा C. अयं पाठः सन्दिग्धः।
६—सन्दिग्धमिदं पदम्।
७—पर्याय यागाणां C.
८—सन्दिग्धमिदं पदम्।
९—न रात्र्या तन्वा (B. C.) नित्य B.
१०—वायमित्येव B. C.
११—वेवेति वय इति B. C.
१२—नतुं न B.
१३—[ पा० ८।१।६६ ]
१४—वाख्यामधायी B. C.
१५—चानय B. चयम C.
१६—सुष्ठासमात B. सुष्ठ्वासमात
१७—शार्थः स्तोमं B. C.
१८—वे पद B. न्वेपद C.
१९—'अपिः' इति स्यात्। मन्त्रे ह्रिदं पदं न दृश्यते।
२०—'तेनायमर्थः' इत्येव पर्याप्तम्।
२१—यतश्चायं C.

यतश्चायते । शुचिर्वामित्यादि समानव्याख्यानमिति । चाकन्निति[1] चाख्यातं कथं गम्यत इति चेत् 'अग्निर्वरूथं मम तस्य चाकन्'[2] इति मन्त्रान्तरे दर्शनात् । अतश्चैतदेवंरूपमाख्यातम् 'आ नो भर सुवितं यस्य चाकन्'[3] इति यद्वृत्तात्सम्बन्धान्निघातप्रतिषेधे सत्युदात्तश्रुतिर्न भवति ।

रथर्यतीत्यनवगतम् । रथीयतीति प्राप्ते रेफ उपजनः, स पुनरस्याभिधेयः सिद्धः प्रसिद्ध एव वेदे बहुशः प्रयोगात् । तत्रेप्सुरिच्छाकर्मसामान्येन क्यच् प्रकृतिं[4] प्रति निर्दिश्यते तं[5] य ईप्सति स उच्यत इति स्पष्टतायै प्रकृतिविशेषं दर्शयति रथं कामयत इति । उदाहरणम्—

एष देवो[6] रथर्यति पवमानो दशस्यति ।
आविष्कृणोति वग्वनुम् ॥

शुनश्शेपस्यार्षम् । एष सोमो देवो दानादिगुणो रथर्यति रथीयति हविर्धानशकटाख्यानम् । इन्द्रस्य वा स्वभूतमापतन्तम् । ईहतेर्वा रथो[7] नरं हरणं वा गमनमात्मनो देवान्प्रतीच्छतीत्यर्थः । पवनामः पूयमानः क्षरणार्थो वा पुनातिः[8] क्षरन्[9] । दशस्यति दाशतेर्वा दानकर्मण एतद्रूपम् । दशतिर्वा[10] सामर्थ्याद्पठितोऽपि दानकर्मा द्रष्टव्यः । ददाति स्तोतृभ्यो यष्टृभ्यश्च । किम् ? सामर्थ्यात् यथाभिलषितमर्थम् । अथवा दशापवित्रमत्रैकदेशैर्दशाशब्देन[11] भीमभामादिवदुच्यते[12] । दशापवित्रं दशा तदिच्छति दशस्यति[13] । छान्दसत्वात् ह्रस्वत्वं सर्वप्रातिपदिकेभ्य इष्यते दधिष्यन्ति[14] मधुष्यन्तीति यथा । अथवा दशस्यति दशसंख्यातां मुष्टिमात्मनः परिमाणमिच्छति सुकं[15] पूर्ववत् । आविष्कृणोति आविष्करोति च प्रकाशयति च । किम् ? वग्वनुं वग्नुरित्यस्य[16] वाङ्नाम्नश्छान्दसो[17] वशब्द उपजनः । अभिषवग्रावाभिघातजं[18] स्वसम्बन्धिं[19] कूटानुशब्दं[20] स्तोत्रशस्त्रलक्षणं वा वाचम्[21] ।

---

१–'चाकन्निति' इति नास्ति B. C.
२–[ ऋ० १।१४८।२ ]
३–[ ऋ० १०।१४८।१ ]
४–प्रकृतिः प्रति C.
५–'तं' इति त्रुटितम् B.
६–[ ऋ० ९।३।५ ] 'एष देवः' इत्येव प्रतीकम् B. C.
७–रथं B. अत्रायं पाठः सन्दिग्धः ।
८–'क्षरणार्थो वा पुनातिः' इति त्रुटितम् C.
९–क्षरं B. १०–तिर्वसा साम C.
११–अत्रिकादशो दशा B. अत्रकादेशो नशा C.
१२–भामवादि B. १३–तदशस्यति B.
१४–दधिष्यति B.
१५–सुक् C. अत्र 'क्यच्' इति 'शेषं' इति वा पाठो युक्तो भवेत् ।
१६–पशुनं पशुरित्य B. C.
१७–न्दसैवसुशब्दः B. न्दसेवनुशब्दः C.
१८–तजस्वस C. १९–वन्धिनं B. C.
२०–कूटानु B.
२१–पाचा B. पाचम C.

वचेर्वा[1] कर्मण्यौणादिको वनुप्रत्ययो[2] वक्तव्यः। स्वगुणमनेकाकारमाविष्करोतीत्यर्थः।

इति [ आचार्यमहेश्वरकृते ][3] निरुक्तविवरणसमुच्चये
एकादशस्या- [ षष्ठस्या- ][3] ध्यायस्य
पञ्चमः पादः समाप्तः।

———

[ अष्टाविंशश्च खण्डः
समाप्तः।[4] ]

---

१–पचेर्वा B. C.
२–वुनप्रत्य B.
३–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।
४ -'समाप्तः' इति नास्ति C.

## अथ षष्ठः पादः ।[1]

असक्रामित्यनवगतम् । असंक्रामणीमिति वा ल्युटि णिति प्रत्यये वावगमः[2] । अथवा समानशब्द उपपदे क्रमेः 'जनसन'[3] इत्येवं विटि[4] 'विड्वनोरनुनासिकस्य'[5] इत्यात्वे 'समानस्य छन्दसि'[6] इति च सभाव[7] एतद्रूपम् । सभावेषु क्रामतीति सक्रा न सक्रा[8] असक्रा तामसक्राम् । छान्दसत्वादनवगतम् । उदाहरणम्—

पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्राम् ।
स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन्[9] ॥

भरद्वाजस्य । हिशब्दो यस्मादर्थे । पुरु बहु वां युवयोः[10] पुरुभुजा हे पुरुभुजौ बहूनां हविषाम्[11]भ्यवहन्तारौ* पालयितारौ वा यजमानानाम् । देष्णं[12] दानं यस्मात् प्रभूतदायिनौ[13] युवां तस्माद् धेनुं दोग्ध्रीं गां नोऽस्मभ्यम्[14] । इषम् अन्नं च पिन्वतं क्षारयतं दत्तमित्यर्थः । असक्राम् असंक्रामणीं यावज्जीवमनपायिनीम्[15] । यद्वा समेष्वक्रान्ताम्[16]गताम् अस्मत्[17]सजातैरप्राप्तपूर्वामित्यर्थः । किञ्च स्तुतश्च[18] स्तुतः क्षविरूपं[19] स्तोतारश्च ये केचित् पृथिव्यां ते सर्वे वां युवयोः हे माध्वी मधुसम्बन्धि मधुनः पूर्णो माधवः 'तस्येदम्'[20] इत्यणि गुणाभावश्छान्दसत्वात् । कोऽसौ ? दृतिः । कुत एतत् । 'यो वां मधुनो दृतिराहितो रथचर्षणे । ततः पिबतमश्विना'[21] इति मन्त्रान्तरे दर्शनात् । तेन तद्वतीं माध्वीम्[22] 'ईवनिपौ छन्दसि'[23] इति मत्वर्थे ईकारः । सुष्टुतिश्च शोभना च या काचित् स्तुतिः सर्वा युवयोरेव । रसाश्च[24] सोम-

---

१—अयं पादारम्भात्मकः पाठो नास्ति C.

२—प्रत्ययो वावगमः B. C.

३—[ पा० ३।२।६७ ]

४—लिटि B. विलिटि C.

५—[ पा० ६।४।४१ ] विध्वनो C.

६—[ पा० ६।३।८४ ]

७—स्वभाव C.

८—'न सक्रा' इति नास्ति B. C.

९—[ ऋ० ६।६३।८ ] 'पुरु हि वाम्' इत्येव प्रतीकम् B. C.

१०—युवयोर्वः पुरु B. C.

११—हविष्यामभ्य C.

* '०वहर्तारौ' इति युक्तं स्यात् ।

१२—देक्ष्णं B. C.

१३—प्रभूतयिना B.

१४—'तः' B. C.

१५—मनसायिनीम् C. 'मनवसायिनीम्' इति वा पाठोऽत्र समीचीनो भवेत् ।

१६—मेष्वाक्रान्ता B.

१७—मस्मात्स B.

१८—स्तुत्वे B.

१९—सन्दिग्धमिदं पदम् ।

२०—[ पा० ४।३।१२० ]

२१—[ ऋ० ८।५।१९ ]

२२—तद्वन्ती माध्वी C.

२३—'छन्दसीवनिपौ च वक्तव्यौ' इति वार्तिकम् [पा०५।२।१०९ ] इति सूत्रे वर्तते ।

२४—साश्च सोम B. साश्च सो C.

लक्षणा ये वां युवयो रातिं[1] दानम् अग्मन् अनुगच्छन्ति । युवाभ्यां ये प्रदीयन्त इत्यर्थः ।

आधव इत्यनवगतम् । आधवनादिति निर्वचनम् । आकम्पनादित्यर्थः । कर्तरि ल्युट् आधवन[2] इति प्राप्ते । ननु पचाद्यचि सिद्धम् । एवं तर्हि आधावयन्ति[3] आकम्पयतीति ण्यर्थे पचाद्यज[4]नवगतम् । भाष्ये त्वाधावनादित्यन्तर्नीतण्यर्थो द्रष्टव्यः । उदाहरणम्[5]—

मंसीमहि त्वा वयमस्माकं देव पूषन् ।
मतीनां च साधनं विप्राणां चाधवम्[6] ॥

विमि[7]दस्यार्षम् । मंसीमहीति मनेः स्तुतिकर्मणो रूपम् । स्तुयाम त्वा त्वाम् । वयमित्याशास्महे । कीदृशं त्वाम् ? अस्माकं हे देव पूष[8]न् मतीनां बुद्धीनां[9] साधनं[10] साधयितारम् उदयेन सर्वकर्मविषयाणां प्रज्ञानां प्रवर्तयितारमित्यर्थः । विप्राणां च[11] मेधाविनां चान्येषामपि द्विजानामाधवं[12] श्रद्धापरिचर्याद्यादरे धावयितारमाकम्पयितारम् ।

अनवब्रव इत्यनवगतम् । ब्रुवो वचनम् । तेन अनवक्षितवचन इत्यवगतः[13] । अप्रतिहतशासन इत्यर्थः । अनवक्षितपूर्वं पार्थिवानां वचो येन सः । उदाहरणम्—

विजेषकृदिन्द्र इवानवब्रवो ३ स्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा समुत्सं यत आबभूथ[14] ॥

विजेषकृद् विजयस्य कर्ता इन्द्र इव यथा इन्द्रस्तथाऽनवब्रवो[15]ऽप्रतिहतवचनोऽस्माकं हे मन्यो आधिपाः अधिकृताय पाता रक्षिता भव इह प्रकृते यज्ञे लोके वा । कस्मादेवमुच्यते अधिपा भवेति ? उच्यते । यस्मात् प्रियमिष्टं ते तव नाम[16] । सहुरे अभिभवनशील गृणीमसि[17] गृणीमः स्तुमो वयं नाम स्तुतिद्वारेणेयं नामवत एव स्तुतिरुच्यते । किञ्च विद्म जानीम तम् । उत्सम्[18] उत्स्यन्दन्ते उद्गच्छन्ति उत्पद्यन्ते यतो विकाराः स उत्सं[19] कारणं ब्रह्माख्यं यतस्त्वमाबभूथ आभिमुख्येन[20] भूत उत्पन्न इत्यर्थः ।

---

१—रातिं म्लानिं C.
२—आधावन B.
३—नयन्ति आक B. C.
४—'ज' इति त्रुटितम् B. '०जनवगतः' इति युक्तम् ।
५—'उदाहरणम्' इति त्रुटितम् B.
६—[ऋ० १०।२६।४] 'मंसीमहि' इत्येव प्रतीकम् B. C.
७—मिमिदस्यार्षम् B. C.
८—पुरुषन् C. ९—बुद्धिनां C.
१०—साधना B. C, ११—त्वं B.
१२—माधावं B.
१३—अत्र 'इत्यवगमः' इति युक्तं स्यात् ।
१४—[ ऋ० १०।८४।५ ] 'विजेषकृदिन्द्रः ( दिद्रूप C. )' इत्येव प्रतीकम् B. C.
१५—वव्रवं B.
१६—यान B. मान C.
१७—गृणीमहि B.
१८—'उत्सं' इति त्रुटितम् B.
१९—इत्सं B.
२०—आभिमुख्या C.

सदान्वे[1] इत्यनवगतम्[2] । सदानोनुव इत्यवगमः । सदाकणलक्षणशब्दकारिणीत्यर्थः । नोनूयतेर्नोनुवा तस्याः सम्बोधनं सदेत्येतेन पुनः पुनर्दर्शनम् । दुर्भिक्षादिदेवता अलक्ष्मी-र्वाऽभिधेया[3] । उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकोनत्रिंशः खण्डः ।[4] ]

---

१–सदा ओन्व C.

२–'त' इति त्रुटितम् B.

३–अभक्षीर्वा B. अक्षीर्वा C.

४–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ त्रिंशः खण्डः । ][1]

अरा॑यि का॒णे विक॑टे गि॒रिं ग॑च्छ सदान्वे ।
शिरि॑म्बिठस्य॒ सत्व॑भि॒स्तेभि॑ष्ट्वा चातयामसि[2] ॥

शिरिम्बिठस्यार्षम्[3] । दुर्ष्वमाया[4] दुर्भिक्षस्याधिदेवता काचिदुच्यते । अरायि राते-[5] र्दानकर्मण औणादिके इति युकि च अरायिशब्दो[6]ऽदातृवचनः, हे अरायि काणे विकटे विकृत-दर्शने विकृतगते च गिरिं पर्वतं गच्छ मात्रासिष्ठाः सैवोच्यते तदा कणलक्षणशब्दकारिणि[7] । इह यान्यदातृत्वादीनि दुर्भिक्षे मनुष्याः कुर्वन्ति तेषामत्र निमित्तभूतत्वाद् दुर्भिक्षाधि-[8][9] देवतैवेति सैवोच्यते । मनुष्याणामदातृत्वकाणत्वविकटत्वसदाकणनशब्दकर्त्वानां[10][11][12] निमि-[13] त्तभूतेत्यर्थः । शिरिम्बिठस्य मेघस्य यानि स्वभूतानि तदुदरकोटरगतानि तेभिस्तैः[14] सत्त्वैभिः[15] उदकैस्त्वा त्वां चातयामसि[16] चातयतिर्नाशने चातयामो नाशयामः । अथवाऽनयर्चा[17] काल-कर्णी उच्यते । सा हि न किञ्चिद् ददाति काणा च विकटा च । सा कुटकुटायते[18] सा अरायीत्येवमादीनामत्रोच्यते गिरिं गच्छ । अनिच्छन्तीमपि च बलात् शिरिम्बिठस्य ऋषेः स्वभूतानि यान्यलक्ष्मीकानि[19] कर्माणि तैस्तां नाशयामः ।

निगमप्रसक्तानुप्रसक्तं निराह काणोऽविक्रान्तमवगतं* दर्शनमस्येति[20] क्रमेः । काणो विगतचक्षुरित्यौपमन्यवो मन्यते । कणतेर्वा धातोः । अणुभावात्[21] कारणात् । आचार्य-मतान्तरदर्शनमेतत् । कथं पुनः कणतेः काणः ? उच्यते । शब्दसारूप्यभूयस्त्वात् । कणतिशब्दोऽणुभावे[22] भाव्यते लोके । तथाच प्रयोगं दर्शयति अणु कणतीति । अल्पं शब्दं कुर्वन् कणतीत्युच्यते । ततश्च मात्राभावाद् अल्पपरिमाणत्वसामान्यदर्शनाद् अणुभावात्

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ऋ० १०।१५५।१] 'अरायि काणे' इत्येव प्रतीकम् B. C.
३—गिरिंबिस्योर्षम् C.
४—अयं पाठः सन्दिग्धः । ५—काते B. C.
६—रायिकामिशब्दो B. C.
७—करणलक्ष B. C. अत्र 'करुणलक्षण' इति वा पाठो भवेत् ।
८—शाब्द B. ९—क्षोधिदे B. C.
१०—कारणत्व B.
११—अत्र 'करुणशब्द' इति वा पाठो भवेत् ।
१२—'कल्पनां B. कात्वानां C.
१३—'नि' इति नास्ति B.
१४—तेभिततैः B. C.
१५—भित उदकस्त्वा B C. १६—पातया B.
१७—बानयचा B. C. १८—कुटा कुटा B. C.
१९—'क' इति त्रुटितम् C. * '०मपगतं' इति युक्तं स्यात् ।
२०—मस्म ( स्मा C. ) ति B. C.
२१—अणभावात् B. C. 'अणूभावकर्मणः' इति स्यात् ।
२२—णुभावो B. 'कणतिः शब्दाणूभावे' इति पाठः स्यात् ।

कारणात् । अणूभावा[1]दिति पाठः । औत्तरपदिक[2]दीर्घत्वं द्रष्टव्यम् ।

विकटो विक्रमे[3]रेव । विक्रान्ता विकृता वा गतिरस्येति । कुटतेर्वा[4]न्येषा न क्रमेः । उकारस्याकारो वैपरीत्यम् । विकुटि[5]तो ह्यसौ कुब्जीभूतो भवति । शिरिम्बिठशब्दः क्रियायोगेन मेघे द्रष्टव्यः[6] । तथाच प्रयोगं दर्शयिष्यति । शीर्यते[7] बिठे अन्तरिक्ष इत्यर्थः । कुत एतत् ? यत आह बीरिट[8]मन्तरिक्षमित्यत्रोक्तं तेन बीरिटेन[9] पीतं व्याख्यातम् । कालकर्णि अलक्ष्य[10]भिधानमेतत् । क्रियाशब्दो वा काला चासौ कर्णी वेति तया उपेतस्तामनेन सूक्तेन नाशितवान् । अघत्वे[11]पि कृतकृच्छ्रादिपुरश्चरण आस्यदघ्ने उदके सूक्तमेतज्जपन् अलक्ष्मीं नाशयेत् । तथाच गौरकार्यः[12] पाठः 'शिरिम्बिठस्त्वलक्ष्मीघ्नः[13]' इति । सत्त्व[14]शब्दः कर्मवचनः ।

पराशर इत्यनवगतमनेकार्थं च । ऋषौ पराशीर्ण इत्यवगमः, इन्द्रे पराशातनः । इतिहासपक्षे निर्वचनमेतत् । एवमवस्थस्य वसिष्ठ[15]स्य नप्ता । शमीचिरमते शक्तौ जात इत्यर्थः । उदाहरणम्—

प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः ।
न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥[16]

वसिष्ठस्यार्षम् । प्रेत्ययमममदुरित्येतेन सम्बध्यते । ये गृहादिति सप्तम्याः स्थान एषा पञ्चमी । गृहे तस्य यज्ञगृहे त्वामिन्द्रं प्र[17]अममदुः मदेस्तृप्तिकर्मणः स्तुतिकर्मणो वा रूपम् । प्रकर्षेण तर्पितवन्तः[18] स्तुतवन्तो वा । त्वाया[19] युष्मद इच्छाक्यचि त्वामिच्छति तद्यत्र[21] तत्वा प्रत्ययादिति चाकारे तृतीयैकवचनं[22] लुकि छान्दसमेतद्रूपम् । त्वन्यया[23] त्वत्काम्यया त्वदिच्छयेत्यर्थः । पराशरः पराशरश्च शतयातु[24]र्बहूनां शातयिता तेन रक्षोघ्नं शस्त्रमाहृतमा-

---

१–अणुभावा B.
२–'क' इति नास्ति B. C.
३–विक्रमैरेव B.　　४–रुरुगतेर्वा B. C.
५–विक ( कि C. ) टिको B.C.
६–मेघो द्रष्टव्यः B. C.
७–शीबर्यते B. शिवर्यते C.
८–विरीटमन्त B. C.
९–विरीटेन B. C.
१०–अलक्ष्या ( क्ष्य C. ) मिधा B. C.
११–अघन्ते ( न्वे C. ) पि B. C.
१२–गौणकार्यः C.
१३–'यदगायीत्यलक्ष्मीघ्नं' [ बृ. दे. ८।५९ ]
१४–नत्वशब्दः B. C.
१५–परिसिष्ठस्य C.
१६–[ऋ० ७।१८।२१] 'प्र ये गृहात् ( प्रयोगहागात् C. )' इत्येव प्रतीकम् B. C.
१७–अत्र 'प्राममदुः' इति स्यात् ।
१८–तवतीं ततः स्तु B. तवतीं तस्तु C.
१९–त्वया B.
२०–क्वचित् B. क्वचि C.
२१–त्वद्यत्रतश्चा C. अयं पाठः सन्दिग्धः ।
२२–'वचने' इति युक्तं स्यात् ।
२३–अत्र 'त्वायया' इति पाठः स्यात् ।
२४–गदया तु बहू B. गतया तु बबहू C.

सीदिति स्मर्यत इतिहासे । वसिष्ठश्च[1] एवमादयः, नेत्ययं प्रतिषेधो मृषन्तेत्येतेन सम्बध्यते । ते[2] तव भोजस्य[3] भोजनस्य[4] दातुः[5] । य इति श्रुतेः साकाङ्क्षत्वात् त इत्यध्याहार्यम् । स्तुत्यस्तोतृलक्षणं यष्टृयष्टव्यत्वलक्षणं च सख्यं न मृषन्ति मृष आमर्षे आमृषं विस्मरणं न विस्मरन्ति, विच्छेदे वा न विच्छिन्दन्ति न विनाशयन्तीत्यर्थः । एतदर्थशब्दश्रुतेर्यस्मादित्यध्याहार्यम्[6] । यस्मान्न मृषन्ति अथ एतस्मात् कारणाद् व्यत्ययेन सूरिणां[7] स्तोतॄणामेषा सुदिना[8] शोभना व्युच्छान्[9] व्युच्छन्ति विवसन्ति अवगच्छन्तीत्यर्थः ।

अनेकार्थतां दर्शयन्नाह इन्द्रोऽपीत्यादि । यातूनां रक्षसाम् ।

इन्द्रो यातूनामभवत् पराशरो हविर्मथीनामभ्या ३ विवासताम् ।
अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः[10] ॥

इत्युदाहरणं व्याख्यातं[11] सत[12] इत्येतत्प्रसङ्गेन ।

क्रिविर्दतीत्यनवगतम् । विकृदतीत्यवगतम्[13] । आयुधविशेषोऽभिधेयः । उदाहरणे[14] दिद्युदित्येतत्सामानाधिकरण्यात् । उदाहरणम्—

यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन ।
यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा[15] ॥

यूयं नः अस्माकम् । हे उग्राः अप्रसह्याः क्रूरा वा शत्रुषु मरुतः । सुचेतुना शोभनेन चित्तेनानुग्रहपरेण । अरिष्टग्रामाः ग्रामाः संघाता उच्यन्ते, वणिग्ग्रामादिदर्शनात् हे अहिंसितसंघाताः । सुमतिं शोभनां बुद्धिम् । मन्यतेर्वार्चतिकर्मणो मतिः स्तुतिस्तां पिपर्तन[16] पालयत पूरयत वा । केन ? उच्यते । यत्र निमित्तार्थ एषा सप्तमी प्रयोजनस्य च[17] निमित्तत्वेन विवक्षा यस्मिन्निमित्ते यदर्थमित्यर्थः । वो युष्माकं स्वभूता दिद्युद् वज्रनामेदम्, वज्रनाम्नामायुधमात्रवचनत्वाद् इह शतघ्न्यां वर्तते, शतघ्नी रदति लिखति । कम् ? सामर्थ्या-

---

१—वसिष्ठ च B. C.
२—'ते' इति नास्ति B. C.
३—'भोजस्य' इति नास्ति B.
४—'भोजनस्य' इति नास्ति C.
५—दातु B.
६—मन्त्रे अधाशब्दः श्रूयते नाथशब्दः । परमधाशब्दोऽप्यथेत्यस्यैवार्थे ।
७—स्तरिणां B. 'सूरीणां' इति युक्तं स्यात्
८—सुमिना B. C. ९—प्यृच्छ्रात् B. प्युच्छात् C.
१०—[ऋ० ७।१०४।२१] 'इन्द्रो यातूनाम्' इत्येव प्रतीकम् B. C.
११—[निरु० ३।२०]
१२—सतत B. सन्तत C.
१३—वगतः C.
१४—हरणो दिद्यु B.
१५—[ऋ० १।१६६।६] 'यूयं न उग्राः' इत्येव प्रतीकम् B. C.
१६—विच (व C. र्तन B. C.
१७—'च' इति नास्ति B.

न्मेघम् । क्रिविर्दती[1] विकर्तनदन्ती । रिणाति[2] रिणातिर्गतिकर्मायं गच्छति च तमनुप्रविशती- त्यर्थः । कथमिव ? पश्वः सुधितेव पशून् सुधितिरिव क्षुधिते क्षुरिके वा अनायासेनेत्यर्थः । वर्हणा महता वधेनेति[3] शेषः । केन[4] निमित्तेन रदति ? तेनोदकेन ।

करूळतीत्यवगतम् । कृत्तदतीत्यवगमः । एवं देवतेत्यध्याहार्यम् । कृत्तदन्त इति तु न्याय्यम्[6] । उदाहरणे देवतापदसामानाधिकरण्यात् । सर्वथा मन्त्रे स्त्रीलिङ्गप्रतिरूपक- मेतत् । यतः पुल्लिङ्गमेव दर्शयति । कः तरल इति पाठः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
त्रिंशः खण्डः ।[7] ]

---

१–त्रिविर्दती B. C.
२–'रिणाति' इति त्रुटितम् B.
३–वेधेनेति B.
४–तेन निमित्तेन रुदती B. येन निमित्तन रद C.
५–दन्ती (B.C.) त्यनव C.
६–तु नार्यं B.
७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ एकत्रिंशः खण्डः । ][1]

वामं वामं त आदुरे देवो ददात्वर्यमा ।
वामं पूषा वामं भगो वामं देवः करूळती[2] ॥

वामदेवस्य । वामं वननीयं[3] यावत् किञ्चित् प्रशस्यम् । किं पुनस्तत् ? सामर्थ्याद् धनम् । ते तुभ्यम् आदुरे हे देवानामादरि[4] यजमान । देवो ददातु । कतमः ? अर्यमा । वामं[5] प्रशस्यमेव । देवः करूळती[6] ददात्विति सर्वत्रानुषङ्गः ।

करूळतीति[7] देवतान्तरम् । एवंविधस्य साविज्ञानपदत्वाभावात्[8] । परगुणस्य[9] च निर्वचने गुणिनोऽप्रत्यक्षत्वाद् अश्रुतसम्बन्धस्य चान्याय्यत्वात् प्रकृतस्यैव गुणाभिधानमेतदिति विनिश्चयः । तत् कस्येति विचारवाक्योपन्यासप्रयोजनस्तच्छब्दः । कः करूळती[10] नाम ? उच्यते । आनन्तर्याद्[11] भगः[12] तस्यायं गुणयोगान्वादेश[13] इत्येकं दर्शनम् । कृत्ता दन्ता अनेन शत्रूणामिति च योगात्[14] सुकृत्तदन्तो देवः । वामं वाममिति वीप्साप्रयोगः[15] सर्वशेषतया पुरः पठितः ।

पूषेत्यपरदर्शनम् । नास्मात् परमस्ति, एतदेव प्रकृष्टं दर्शनमित्यर्थः । कुत एतत् ? प्राशित्रब्राह्मणे पूष्णोऽदन्तकत्वश्रवणात्[16] । 'तत् पूष्णे पर्याजह्रुः[17] ।' तस्य दन्तात् परोवाप अत्र च पविश्योदने द्रष्टव्यः । 'तस्मादाहुरदन्तकः पूषा करम्भभाग[18] इति । व्यवहितस्यापि श्रुतिलिङ्गदर्शनादेष पूष्ण एव प्रयोगत्वादन्वादेशो क्लृप्ते कल्पयितव्यो न भागस्य । तस्मादानन्तर्यं न कारणमित्याह सोऽदन्तक इत्यादि ।

दन इत्यनवगतम्[19] । ददातेर्मनसश्च दानमनस इत्यवगमः । उदाहरणम्—

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ४ । ३० । २४] 'वामं वामं' इत्येव प्रतीकम् B. C.
३–वनतिवं C.
४ नां मदरिः (रि C.) B. C.
५–'वं' इत्येव B. C.
६–कुरुलति B. करूळति C.
७–इतीति B. रू इतीति देद देवता C. अत्र 'करूळतीति न देवान्तरम्' इति पाठः स्यात् ।
८–त्वात् तावत् B. त्वात् भावात् C.
९–पदगुणस्य C.
१०–करुळति B. कररूळति C.
११–नन्तच्यर्यात् १२–भगं B.
१३–गाप (न्वC.) देशमित्येकदर्शन B.C.
१४–'त्' इति नास्ति B.C.
१५–प्रयोगाः C.
१६–कत्वाच् (C.) श्रव B. C.
१७–[शत० ब्रा० १ । ७ । ४ ।] तत्पूष्णो प्र (त्र C.) जहुः B. C.
१८–करम्भभाग B.
१९–इत्युपगतं C.

दनो विशं इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारदीर्दर्त् ।
ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः ॥

अगस्त्यस्यार्षम् । दनो दानमनसः सामर्थ्यादस्य भाष्यकारो ? जहार । अस्माकं विशो मनुष्यान् हे इन्द्र मृध्रवाचो मृध्रशब्दो मृदुवचनः, मृदुवचश्च मृदुवाग्वचनात् क्विबिति शेषः । सप्त व्यत्ययेन नपुंसकं पुंलिङ्गस्थाने यस्मादर्थे वा यत् । यस्माद्वा सप्तसंख्याकामेवं पुरः शर्म सुखं क्लेशेन येत्यर्थः । शारदीर्दर्त् शरदि भवाः, दृणातेश्छान्दसमेतद्रूपम् । दारितवानसि दारयसि वा । विदार्य च ऋणो* ऋणातेर्गतिकर्मणोऽर्तेर्वा रूपं गमयसि प्रापयसि अपः वृष्टिलक्षणा अनवद्याः प्रशस्याः अर्णा नदीनामैतत्, नदीं प्रति । यूने 'यु मिश्रणे' मिश्रयित्रे च हविर्भिः स्तुतिभिश्च देवानाम् । वृत्रं धननामेदम् । पुरुकुत्साय कर्ता स्तोमानां कुत्संबन्धो बह्वीनां स्तुतीनां कर्त्रे यजमानाय । रन्धीः 'राध साध संसिद्धौ' संराधयसि ददासीत्यर्थः । यस्माद्वा इदमिन्द्रं च जातवेदसि कस्माद्वा नो मृध्रवाचं कुर्विति सम्बन्धः ।

शरारुरित्यनवगतम् । संश्रृणोतेरिच्छायां छान्दस आरुः प्रत्ययो द्रष्टव्यः । संशोतेहिंसार्थस्येति केचित् । संशरणदीर्घनिद्रया दीर्घदिदृक्षया संशयानं वा हिंसात्मनस्तामिच्छतीति शरारुः संशिशयिषुरिति वा पाठान्तरे प्राप्ते उदाहरणम्—

अवीरामिव मामयं शरारुरभि मन्यते ।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥

मामयमिन्द्राणी इन्द्रेण । किम् ? शूरपत्नी नस्त्वमभ्यमिषि अरोमे अभिरुजसि बाधसे दित्रं वृषाकपिमित्येवमुक्ता तं प्रत्याह अवीरामिति वेति, वीरेण पालयित्रा रहितामिव मामयं शरारुः संशिशयिषुर्वा दीर्घनिद्रयाभिमन्यते । दुष्टेनाशयेनाभिभवति । उत पदं चार्थे अहंशब्दाच्च परो* द्रष्टव्यः, अहं चास्मि भवामि भर्त्रात्यर्थं त्वया वीरिणी सावलेपमाह

१–[ऋ० १ । १७४ । २] 'दनो (तो C.) विशः' इत्येव प्रतीकम् B. C.
२–वाजश्च B. C.
३–दुवागवच B. दुगवच C.
४–त्ययव्यत्ययेन B. यद्यत्ययेन C.
५–यं B. यः C.
६–अयं पाठः सन्दिग्धः ।
७–'शं' इत्येव B. C. ८–रदीर्दर्श B.C.
*–''ऋणोः' इति विसर्गान्तः पाठः स्यात् ।
९–आपः B. C. १०–दिह अनवद्यप्रशस्य B. C.
११–[धा० २ । २३]
१२–[धा० ५ । १६, १७]
१३–इन्द C. सन्दिग्ध एवास्य वाक्यस्य पाठः ।
१४–मरारुतित्यन C. १५ हिंसामात्मन C.
१६–[ऋ० १० । ८६ । ९ ] 'अवीरामिव' इत्येव प्रतीकम् B. C.
१७–'द्र' इति त्रुटितम् C.
१८–उत्पयदश्चा B. उत्पयदश्चा C.
*–'परं द्रष्टव्यम्' इति युक्तम् ।
१९–चर्वी B. चर्वि C.

इन्द्रपत्नी तवेन्द्रस्य पत्नी तत्रैतस्यास्त्वमसहाय इति तच्च न यतयो मरुत्सखा मरुतः सखायो यस्य तव। किं वा सखिभिस्तव। यस्त्वं विश्वस्मात् सर्वस्मात् जगत ईश्वरः उद्गततरो बालो मूर्खः।

इदंयुरित्यनवगतम्। क्वचिन्मान्ताव्ययप्रतिषेधादनेकार्थं च। प्रत्ययस्यार्थभेदादिदं कामयमान उच्यते कर्मेदं सामान्येन प्रदर्शिते यथाभिलषितं धानादि द्रव्यमिच्छति स इदंयुः। तेन चेदं वसुयुः, वाग्युः, कियुः, विप्रयुरित्याद्यवगतानवगतक्यजन्तमात्रोपसंग्रहार्थं निगमेषु पठिता विशेषार्थमिति निरुक्तकाराभिप्रायः। अत एव च सामान्यस्य विशेषोऽनुदाहरणमिति। तेषां च वसूयवो वसुकामा इत्यादिषु बहुधागतत्वाद् विशेषेणेह किञ्चिद् भाष्यकार उदाजहार। अनेकार्थत्वं दर्शयन्नाह अथापि तद्वदर्थे भाष्यते युज्यत इत्यर्थः। तदिति मतुप्प्रकृतिः सामान्येन निर्दिश्यते। तेन तद्वदर्थे मत्वर्थ इत्यर्थः। उदाहरणम्—

इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः।
अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता॥

सव्यतामापन्नस्येन्द्रस्यार्षम्। अश्रायीति चिण्प्रत्यये कर्तरि द्रष्टव्यः। इन्द्र आश्रितवान् सहायत्वे सुध्यः सुधीः सुप्रज्ञः सुकर्मा वा। निरेके नियमेन रिच्यन्ते प्राणैर्योद्धारो यत्र स निरेको निर्गत एकोऽप्यन्यः सहायो यस्मात् स निरेकः। कः पुनरसौ? ऐकान्तिकमरणसहायवर्जितात्यन्तभीषणसंग्रामैः। तत्र कान्? उच्यते। पज्रेषु पाजैः स्तुतिविषयं बलं तेन तद्वन्तः पज्रा अङ्गिरस इत्यभिप्रेताः। द्वितीयार्थे चात्र सप्तमी पज्रान् स्तुतिबलेन बलवतोऽङ्गिरस ऋषीनित्यर्थः। कथमाश्रितवान्? उच्यते। अश्वयुर्गव्यू रथयुर्वसूयुः अश्व-

१–तत्रैतस्मात् C. 'स्यास्त्वं सहाय' इति स्यात्।
२–'तः' इति त्रुटितम् C.
३–अयमत्र कस्य मन्त्रपदस्यार्थ इति न ज्ञायते। अस्मिन् मन्त्रव्याख्यानेऽनेकत्र सन्दिग्धोऽनवगतार्थश्च पाठोऽस्माभिर्यथादृष्ट एव लिखितः।
४–धनादि B.
५–तव्य इच्छ B. C.
६–मनुप्रकृतिः B. C.
७–'उदाहरणम्' इति त्रुटितम् C.
८–[ऋ० १।५१।१४] 'इन्द्रो अश्रा (श्ना B.) यि' इत्येव प्रतीकम् B. C.
९–द्रष्टव्यम् C.
१०–तधीः
११–सप्रज्ञः C.
१२–र्मा वा (व B.) तिरेके B. C.
१३–तिरेकः B. C.
१४–संग्रामे B. C.
१५–'तत्र' इति त्रुटितम् B.
१६–वाजः B. C.
१७–वज्राः B. C.
१८–वज्रात् B. C.
१९–अश्व (श्व C.) येयुः B. C.

वान् गोमान् रथवान् वसुमानिन्द्रः, इदि ऐश्वर्येर्थे। इंद्रायो यावत् किञ्चित् त्रैलोक्यं धनं सर्वस्य चयति क्षयतिरैश्वर्यकर्मा अयं रायं ईष्टे। प्रयन्ता च यमिदानार्थः,प्रदाता च स्तोतृभ्यः। न हीन्द्रोऽस्मदादिवदश्वादि कामयंते। अतस्तद्वदर्थे।

कीकटा इत्यनवगतम्। किंकृताः क्रिया इत्यर्वगमः। मन्त्रे सत्तम्यन्त इति तथैवायं निगमेषु पठितः। उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकत्रिंशः खण्डः। ]

---

१—इन्द्रः B. C.

२—बलवति B. C.

३—अयरोय C.

४—इष्टे B. C.

५—वदश्वादि B.

६—'तद्वदर्थे' इत्यस्मात् परंB. पुस्तके'कीकटेषु'इति, C. पुस्तके च 'उदाहरणम। कीकटेषु' इत्यधिकः पाठो वर्तते।

७—किकटा C.

८—इत्यवावगमः C.

९—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ द्वात्रिंशः खण्डः । ][1]

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्।
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः ॥[2]

विश्वामित्रस्य । किं ते तव कृण्वन्ति कुर्वन्ति न क्वचिदुपयुज्यन्त इत्यर्थः । कीकटेषु कीकटनाम्नि अनार्यनिवासे देशे कृपणा वा कीकटाः कृपणेषु वा गावस्ता नाशिरं दुह्रे आशिर-शब्देन सोमस्य अर्पणार्थं[3] दध्युच्यते । तेन चात्र तत्प्रकृतिभूतमाशिरार्थं पयो लक्ष्यते । तेनाशिरार्थं पयो न दुह्यत इत्यर्थः । न तपन्ति घर्मं नापि स्वपयःप्रदानद्वारेण तपन्ति रोयन्ति[4] दीपयन्ति घर्मं महावीरपात्रं प्रवर्ग्येऽपि[5] नोपयोगं गच्छन्तीत्यर्थः । एतेन सान्नाय्या-दीन्यपि[6] प्रदर्शितं द्रष्टव्यम् । एतज्ज्ञात्वा तास्तावद् आकारो भरेत्येतेन[7] सम्बध्यते । अस्म-भ्यमाभर[8] आहर देहीत्यर्थः । नच केवलास्ता एव । किन्तर्हि ? प्रमगन्दस्य[9] अत्यन्तकुसीद-[10][11] कुब्जस्य प्रमादकस्य नित्यप्रमुदितस्य वा अयष्टुरित्यभिप्रायः । पण्डकस्य वा षण्ढस्ये-[12] त्यर्थः । असावप्यनधिकृत[13] इत्यर्थः । तस्य वा स्वभूतं वेदो[14] धनम् । तथा[15] नैचाशाखं हीन-जातीयापत्याह शूद्रापत्यैश्च केवलैः शूद्रावानिपत्यत्रेत्यादि पातकहेतुत्वात् । तस्य च यत्स्वं[16] नैचाशाखं त्वयि[17] हे मघवन् रन्धय साधय देह्यस्मभ्यमित्यर्थः । एतेषां हि यत्स्वं तत्तव नोपयुज्यं यत्त्वस्मदीयं तत् सततप्रवृत्तयोगत्वात् तदुपयोगाय । अतोऽस्मभ्यं तद्देहीत्यर्थः । आहर[18] च धनं यदज्ञशीलानामिति ।

एकपदनिरुक्तम् । किंकृताः[19] क्रिमर्थमुत्पादिता अदो वाराः किमा करोतेश्चेत्यर्थः । अथवा यागदानादिभिः किंकृताभिः किं पिबतखादतेत्येवंप्राया[20] एव प्रेप्सा प्रेक्षा येषां ते अश्र-

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ऋ० ३।५३।१४] 'किं ते कृण्य (ब C) न्ति' इत्येव प्रतीकम् B. C.
३—श्रवणार्थं C.
४—तपन्नि रोयन्नि दिप (व B.) यन्ति B. C. 'रोयन्नि' इति सन्दिग्धं पदम् ।
५—र्ग्ये विनोप C.
६—अत्र 'दावपि' इति 'दिष्वपि' इति वा पाठो युक्तो भवेत् ।
७—हरेत्ये B. C.  ८—भाहर B. C.
९—प्र उ ग (गा B.) न्तस्य B. C.
१०—आत्यन्तं C.
११—कुत्सीद B.
१२—पण्यककस्य वा षण्यस्ये B. C.
१३—वह्यनधि C.  १४—त्रेदं C.
१५—यथा नैयाशाखं B. अस्य वाक्यस्य पाठः सन्दिग्ध एव ।
१६—यद्वनैश्चा (B. C.) शाखं B.
१७—तवि B.  १८—'र' इति नास्ति B. C.
१९—'किं' इति त्रुटितम् B. C.
२०—खादयते B.

इधाना नास्तिकाः किंक्रियाः सन्तः[1] कीकटाः । देवान् प्रति हरणात् हर्म्यैः[2] सन् धर्मः । महावीरोऽयमर्थः । मगन्दः[3] द्वैगुण्यं प्राप्तो मा[4]मागमिष्यतीत्युपचयं प्रत्याकर्ण्य ददाति प्रयुङ्क्ते इत्यर्थः । अस्मदो गमेर्ददातेश्च मगन्दः, अपत्यार्थे प्रस्कण्वन् प्रमगन्दः[5] पितृक्रमागतं कौपीन्यं[6] पश्येत्यर्थः । यत्स्वयं[7] तस्य प्रमदको वा प्रमगन्दः ऐहलौकिक एव । पण्डको[8] वा पापिष्ठगमनः[9] तृतीयाप्रकृतिः स्त्रीरूपत्वात् लज्जया वा स्त्रीवन्निभृतं यो गच्छति सः । प्रार्दको[10] वा पुंस* अण्डौ प्रकर्षेणार्दयति मृदूनातीत्यर्थः[11] । अण्डौ कस्मात्[12] ? आणी इव यथा आणी रथस्य चक्रे संस्तम्भयेतां तद्वत् मृद्यमानौ[13] व्रीडयतः । आणी अरणाद्[14] गमनाद् अरणीरित्यर्थः[15] । तत्स्वयं तस्य प्रमगन्दशब्दवाच्यस्य स्वमाहरेति सम्बन्धः । नीचैः पुत्रपौत्रादिरूपाः शाखाः[16] सन्तानरूपा वा यस्य स नीचैःशाखः इत्यर्थः[17] । स नीचैःशाखः, तस्य स्वं नैचाशाखम्[18] । शाखाश्च[19] शक्नोतेः खशयनिवृत्त्यर्थम् । रध्यतिर्वशगमने 'मा रधाम द्विषते'[20] 'द्विषन्तं मह्यं रन्धयन्'[21] इत्यादिप्रयोगदर्शनात् सिद्धम्[22] । भाष्येप्युपन्यस्तत्वान्न व्याख्यायते मन्त्रैः[23] ।

बुन्द इत्यनवगतम् । इषुरभिधेयः । भिन्दो वा नेदमवगमप्रदर्शनम्[24] । किन्तर्हि ? धातुप्रत्ययार्थप्रदर्शनम् । प्रत्ययस्तु[25] यदि भिदेः पचादिकोऽच्[26] ततो भेद इति[27] स्यात् । अथ इगुपधलक्षणः[28] कः, भिद इति भवितव्यम् । एवं तर्हि भिदेरपि पाघ्रादिविहितः[29] शः[30] शिष्ट-

१-समन्तः B.
२-धर्म्यः सद्धर्मः ( र्म्मः C. ) B. C.
३-गतः B. C.
४-'मा' इति त्रुटितम् B. C. ष्यन्नित्युप B. C.
५-गमन्दः B. C. ६-कावीन्यं B.
७-'यत्स्वं' इति स्यात् । 'यत्स्वयं तस्य' इति नास्ति C. निरर्थकोऽप्ययमत्र पाठः ।
८-एवं । पण्यको वा B. C.
९-अयं पाठः सन्दिग्धः ।
१०-प्राददको वा B. C.
* 'पुंसः' इति सविसर्गः पाठ उचितः ।
११-अन्धौ प्रकर्षोर्धयति मृदनानीत्य B. C.
१२-गन्धौ ( अण्डौ C. ) तस्मात् B. C.
१३-मृद्यमानो B. C.
१४-'अ' इति त्रुटितम् B. C. १५-आरणीरि C.
१६-शाखाः B. C.
१७-वित्यर्थः B. वत्यर्थः C.
१८-नी ( नै C. ) चैः शाखं B. C.
१९-शाखाश्च शक्नोति खश B. C.
२०-[ऋ० १०।१२८।५]
२१-[ऋ० १।५०।१३]
२२-सिद्धिम् C.
२३-'मन्त्रः' इति नास्ति B.
२४- तेदमवगमप्रदर्शनात् B. C.
२५-प्रत्ययस्तं B. C.
२६-[पा० ३।१।१३४] दिके च B. C.
२७-वति B. C.
२८-[पा० ३।१।१३५]
२९-[पा० ३।१।१३७] वाघ्रादि C.
३०-'शः' इति नास्ति B. C.

प्रयोगात् तत्र साधनशब्दो द्रष्टव्यः। अथवा औणादिकव्युत्पत्त्या भिन्द[1] इति वा भयद[2] इति वा भासमानो द्रवतीति वा[3] वाक्यार्थे पदवचनम्। विदारण[4]भयदानभासमानद्रवलक्षणानामर्थे सम्भवात्। अक्षरवर्णसामान्याच्चेदमाह। उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
द्वात्रिंशः खण्डः[5]। ]

---

१–भिदे इति B. C.

२–'भ' इति त्रुटितम् B. C.

३–'वा' इति त्रुटितम् B.

४–विदाहरण ( णं B. ) B. C.

५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ त्रयस्त्रिंशः खण्डः ][1]

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृ ऋदूवृधा ॥[2]

कुरुस्तुतेरार्षम् । इन्द्र उच्यते । तुविक्षं बहुविक्षेपं बहुशरविक्षेपसहं विस्तीर्णमण्डल-मत्यायतमित्यर्थः । ते तव स्वभूतं सुकृतं वा सुसंस्कृतम् । सूमयं[3] सूमय[4] इति सुखनाम सुसुखं साधूनां वा सुखकरत्वात् सुष्ठु सुखमित्यर्थः । मण्डितो वा ऋदूपे बाहुविशेषण-मेतत्, ऋतुशब्दो[5]ऽर्दतेर्हिंसार्थस्य शत्रूणामर्दनेन पातयितारौ । चित् पदपूरणः । ऋदूवृधौ[6] मर्मवेधिनावित्यर्थः[7] ।

ऋदूपे इत्यस्य निर्वचनम्–अर्दनपातिनावित्यादि[8] । अर्दनेन[9] हिंसया[10] वेधनेन ताडनेन[11] आत्मनो गमनेन तन्वत[12] इषोर्यच्छरीरं शरीरिणं[13] पातयितारौ[14] अर्दनपातिनौ मर्मणि रुपादे[15] मर्मण्यर्दनवेधिनाविति[16] । नेदं 'व्यध ताडने'[17] इत्यस्य रूपम् । किं तर्हि ? तौदादिकस्य[18] 'विध विधाने'[19] इत्यस्य । अर्दनेन विधत:[20] कुरुतस्ताडयत[21] इति[22] । विधानं चानुष्ठानकरणम् । तेन च क्रियासामान्येन क्रियाविशेषो लक्ष्यते । अतोऽर्थः स एव ताच्छीलिकेन णिनिप्रत्ययेन दर्शितः । इह धनुःसम्बन्धाद् इषुरिति गम्यते बुन्दः । अस्यैवार्थस्य दार्ढ्यार्थमुदाहरणं दर्शयति स्म ।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
त्रयस्त्रिंशः खण्डः[23] । ]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० ८।७७।११ ] 'तुवि ( वी C. ) क्षं ते' इत्येव प्रतीकम् B. C.
३–सूतमयं B. 'सूमयं' इति त्रुटितम् B.
४–'सूम' इति त्रुटितम् B. C.
५–'ऋदुशब्दो' इति पाठो युक्तो भवेत् ।
६–ऋपूर्विधौ B. ऋपूवृद्धो C.
७–मवेधितावित्यर्थः B. C.
८–अर्दनवातानापिसादि B. C.
९–'न' इति त्रुटितम् B.
१०–हिंसाया B. C. ११–तासनेन B. C.
१२–तलवत B. १३–शरीरणं C.
१४–पाययितारौ B. वातयितारौ C.
१५–अत्र'रूपादेः'इति'उपाधेः'इति वा पाठो भवेत् । विषयस्य स्थितलक्ष्यस्य वा मर्माणीत्यर्थः ।
१६–नापि B. 'ति' इति त्रुटितम् B. C.
१७–[ धा० ४।७५ ]
१८–दिक इत्यस्य B. C. १९–[धा० ६।४४ ]
२०–'वि' इति द्विर्लिखितम् B. C.
२१–'त' इति द्विर्लिखितम् B. C.
२२–ताडयत इति B.
२३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ चतुस्त्रिंशः खण्डः । ][1]

निराविध्यद् गिरिभ्य आ धारयत् पक्वमोदनम् ।

इन्द्रो बुन्दं स्वाततम्[2] ॥

कुरुसुतेरार्षम् । निर्विध्यति गिरिभ्यो गिरिशब्दान्मेघनाम्नो निर्धारणषष्ठ्याः स्थान एषा पञ्चमी[3] । गिरीणां मेघानां मध्ये य आधारयद् आभिमुख्येन धारयति । पक्वं परिपक्व-योग्यमुदकानाम्[4] । ओदनं मेघनामेदम्, मेघम् । कोऽसौ ? इन्द्रः । कथं निरविध्यत् ? बुन्दमिषुं स्वाततमाकृष्टं कृत्वेति शेषः । तृतीयायाः स्थाने वा द्वितीया । बुन्देन स्वाकृष्टेनेत्यर्थः । ओदनशब्दं[11] निराह उदकदानं ददातीति दानमुदकदानम् । व्याख्यातो बुन्दः ।

वृन्दमित्यनवगतम्[12] । समुदायोऽभिधेयः[13] । तत्पुनरेतेन बुन्देन[14] व्याख्यातः, क्रिया-योगसमवायसम्भवात् । वीणासमवायाच्च प्रसिद्धत्वान्निगमो न प्रदर्शितः ।

वृन्दारकोऽप्येवमेव व्याख्यातः पूजावचनः । तत्र प्रयोगो वृन्दारक इति वैदिके । उपनिषत्सु प्रयोगः ।

किरित्यनवगतम्[15] । कर्तेत्यवगमः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य

चतुस्त्रिंशः खण्डः ।[16] ]

———

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।

२–[ ऋ० ८।७७।६ ] 'निराविध्यद् गिरिभ्यः' इत्येव प्रतीकम् B. C.

३–शब्दा मेघ B. C.

४–वक्ति B. C.

५–'परिपाक' इति युक्तं स्यात् ।

६–दका ( क C. ) नाम B. C.

७–स्योदन मेघ B. C. ८–विधत् C.

९–खा ( स्वा C. ) तमाकृ B. C.

१०–बुन्देश्चा ( स्वा C. ) कृष्टो नेत्य B. C.

११–मदनशब्दं B.

१२–बृन्दमित्य B. C. आदर्शपुस्तकेष्वत्र प्रकरणे, वृन्दपदे वृन्दारकपदे च सर्वत्र बकार एव पठ्यते ।

१३–यो निधेयः B. C.

१४–बुन्दो न B. C.

१५–करित्यन C.

१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ पञ्चत्रिंशः खण्डः । ][1]

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः ।
अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥[2]

सौन्धीकस्याग्नेर्[3]विश्वेषां च देवानां संवादे देवानामिदमार्षम्[4] । अयं यो होता ह्वाताऽग्निः । कः ? किः[5] कर्ता उकारः[6] पदपूरणः । सायं[7] मध्यरश्मिसंयमनाद् यम आदित्योऽभिप्रेतः आदित्यस्य । कथं पुनरग्निरादित्यस्य[8] कर्ता ? उच्यते । 'अग्नेर्वादित्यो जायते' इति श्रुतेः[9] । कमपि[10] कमित्यन्ननाम अन्नमपि[11] काल्यमूहे वहति । यत् समञ्जन्ति सम्यग्गच्छन्ति व्याप्नुवन्ति भक्षयन्तीत्यर्थः । के ? देवाः । किञ्च अहरहः अहन्यहनि अग्निहोत्रहोमार्थमाहवनीयात्मना जायते मासि मासि पिण्डपितृयज्ञार्थम् । प्रदर्शनं चैतत् । अर्धमासदर्शपूर्णमासार्थम् । संवत्सरे च सोमयागार्थम्[12] । अथ शब्दस्य[13] एतस्मादर्थस्य[14] श्रवणाद्[15] यस्मादित्यध्याहार्यम् । यस्मादेव जायसे अथैतस्मात् कारणाद् देवा एवं दधिरे । शुद्धोऽप्ययं ददातिर्निपूर्वार्थे[16] द्रष्टव्यः, निदधिरे निहितवन्तः । हव्यवाहं हविषो वोढारम् । अस्मिन्नग्निकारे[17] स्थापितवन्त इत्यर्थः ।

उल्बमित्यनवगतम् । ऊर्णोतेरिति धातुनिर्देशार्थम् । ऊर्णोतेर्ह्रस्वत्वरेफलोपत्वादि[18]र्बश्च प्रत्ययः । वृणोतेर्वा वकारस्योकारो बश्च[19] प्रत्ययः । गर्भस्याच्छादनमभिधेयम् । उदाहरणम्—

महत्तदुल्बं स्थविरं तदासीद् येनाविष्टितः प्रविवेशिथापः ।
विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥[20]

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ऋ० १०।५२।३] 'अयं यो होता' इत्येव प्रतीकम् B. C.
३—सौचि (B. C.) कुत्स्याग्नेः B.
४-मिन्द्रमारिषम् B. C.
५-किम् B C.
६—इकारः B. C.
७—साय B. सुः य C.
८—रानिकादिस्य B. राग्निचादित्यस्य C.
९-[अनुपलब्धमूलमिदं वचनम् ।]
१०—तमवि कमिन्यन्तं नाम B. C.
११—तमवि काल्य B. C. 'अन्नं हविः काल्य' इति वा स्यात् ।
१२—यागवन् B. मो यागमत् C.
१३—मन्त्रशब्दस्य B. C. १४—एतस्यार्थस्य B.
१५—णावृसादित्य B. णादस्मादिध्याहा C.
१६—अत्र 'दधातिः' इति युक्तं स्यात् ।
१७—न्नविकारे C.
१८'रेफऌत्वादिः' इति पाठो युक्तः ।
१९—यश्च C.
२०—[ऋ० १०।५१।१] 'महत् तदुल्बम्' इत्येव प्रतीकम् B. C.

सौचीकस्याग्नेर्विश्वेदेवानाम् । महत् तदुल्बं जरायोरन्तर्गर्भवेष्टनं स्थविरं स्थूलं चिरन्तनं वा आसीत् । येन उल्बेनावेष्टितः प्रविवेशिथ प्रविष्टवान् वा । उत्तरार्धर्च-व्याख्यानमर्धेदियं प्रकृतव्याख्यानस्याभावात् । किञ्च विश्वाः सर्वा ऋतुषु अप्सुभिर्ष्वभिषु च प्रविष्टा अपश्यद् दृष्टवान् । बहुधानेकप्रकारं ते तव स्वभूताः हे अग्ने जातवेदः स्त्रियैत्वमूकः....ति देव एकः ।

ऋबीसमित्यनवगतम् । पृथिव्यभिधेया । अपगतभासमित्येवमाद्याः शब्दसमाधय उपपद्यन्ते । धात्वन्यत्वकृतो विशेषः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य

पञ्चत्रिंशः खण्डः ]

---

१—सोवीकमग्निः विश्वेदेवा नः ( न्हः C. ) B. C.

२—वासत् B. C.

३—वेष्टितं B.

४—ष्टपान वा C.

५·अयं पाठः सन्दिग्धः ।

६—सन्दिग्धोऽयं पाठः । अथवाऽत्र 'अप्सु दिक्षु च' इति पाठः कदाचित् स्यात् ।

७—स्त्रीयत्व B. अत्र त्रुटितः कश्चन पाठः ।

८—गमेत्रम् B. गमेतम् C. एतदनन्तरं च 'अपग (ह B.) तभासमित्येत्रमाद्याः (नाः B.) शब्द-समाधयः' इत्यधिकः पाठः B. C.

९—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ षट्त्रिंशः खण्डः । ][1]

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥[2]

हिममुदकमत्राभिप्रेतम् । उदकेन वृष्ट्याख्येनाग्निम् । लुप्तोपममेतत् सामर्थ्याद् द्रष्टव्यम् । अग्निमिव अग्निसदृशमित्यर्थः । किं पुनस्तत् ? घ्रंसम्[3] अहर्नामेदम् । अहःसामर्थ्याद् ग्रीष्मान्तवर्ती । तदवारयेथां युवां[5] शीतीकुरुथ इत्यर्थः । पितुमतीं[6] पितुरित्यन्ननाम । ऊर्जमित्यूर्क्शब्देनापि उदकलक्षणो रस उच्यते । पितुमतीमूर्जमन्नमन्नं च रसम् । अन्नसहितं पेयमुदकमित्यर्थः । पुरोडाशादिसहितमाज्याहुतिलक्षणं वास्मै अग्नयेऽधत्तम् । वृष्टिद्वारेण[7] दत्तम् किञ्च ऋबीसे पृथ्वीद्रव्ये प्रथितमधोनिहितम्[8][9] । अत्रिम् अत्तारं हविषामोषधिवनस्पत्यादीनां वा । अश्विना हे अश्विनौ ओषधिफलभूतानां धान्यानां रूपेण उन्निन्यथुः[10] ऊर्ध्वं नयथः । सर्वगणं[11] सर्वेण नामगणेन[12] युक्तमग्निं यः कश्चिदोषध्यादीनां[13] गणस्तेन सर्वेणाग्निरेव युक्तः । कथम्[14] ? ओषध्यादीनां पृथिवीविकारत्वात् पार्थिवाद[15]ग्नेरनन्यत्वाद् अग्नेरेतद्रूपमापन्नस्य[16] रूपं स्वस्ति अविनाशोऽयं[17] न भवति तथा ।

इति निरुक्तविवरणसमुच्चये
एकादशस्या-[ षष्ठस्या-][18] ध्यायस्य
षष्ठः पादः समाप्तिमगमत्[19] ।
समाप्तश्चाध्यायः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० १।११६।८] 'हिमेनाग्निम्' इत्येव प्रतीकम् B. C.

३–'स' इति त्रुटितम् B. C.

४–खंसमर्हणा ( न्ना C. ) मेव (द C.) म् B.C.

५–युवात् C.

६–पितुमिति B. पितुमतिं C.

७–दृष्टिद्वारेण C. ८–प्रतित C.

९–'हि' इति त्रुटितम् B. C.

१०–उन्निनयथुः ( थुः C. ) B. C.

११–सर्वगुणं B.

१२–'गणेन युक्तमग्निं' इत्येतावान् पाठस्त्रुटितः B.

१३–ध्यादिनोमगण B.

१४–'थ' इति त्रुटितम् B. C.

१५–'दने' इत्येवं पाठः C.

१६–द्रूप आपन्न C.

१७–नाशो यो न C.

१८–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

१९–'समाप्तिमगमत्' इति नास्ति C.